श्रीः



सत्यं वद । धर्मं चर ।

गीर्वाणभाषाभिवर्धिनी सभा

# वेदवेदान्तबोधिनी संस्कृतमहापाठशाला

मेलुकोटे

विषयः

नामधेयम् ------------------------------

कक्ष्या ------------------------ वर्षम् ----------

स्वाध्यायान्मा प्रमदः ।

1. श्री एन्. रंगनाथशर्मा
2. श्री एस्. वि. भीमभट्टः
3. श्री एन्. टि. श्रीनिवास अय्यंगार

[—

1. श्री एन् एस्. रामभद्राचार्यः
2. श्री एम्. एन्. लक्ष्मीनरसिंहभट्टः

पुस्तकरचनायाम् अनेकविधसाहाय्यं कृतवद्भ्यः सर्वेभ्यः पाठ्यपुस्तक
यं कृतज्ञताम् अर्पयति ।

पाठ्यपुस्तक निर्देशकः

# विषयानुक्रमणिका

## उपोद्घातः

इह तावत् संस्कृतभाषाधिगमस्य व्याकरणशास्त्राध्ययनं महानभ्युपाय इति निर्णयः। विना व्याकरणं संस्कृतभाषायां प्रवेशोऽपि दुर्लभः, किं पुनः शास्त्रे? उक्तञ्चाभियुक्तैः—

अव्याकरणमधीतं भिन्नद्रोण्यां तरङ्गिणीतरणम्।
भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम्॥ इति।

आह च तत्रभवान् भास्कराचार्यः—

यो वेद वेदवदनं सदनं हि सम्यक्
ब्राह्म्याः, स वेदमपि वेद किमन्यशास्त्रम्।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरेषु भवति श्रवणेऽधिकारी॥ इति।

युक्तञ्चैतत्। शब्दार्थरूपत्वात् सकलशास्त्रस्य, शब्दज्ञानपूर्वकत्वाच्च अर्थविज्ञानस्य। अर्थपुरस्कारेणैव शब्दानां व्युत्पादनात्। 'तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते' इत्याह भगवान् भर्तृहरिः।

सर्वेषु व्याकरणेषु मूर्धन्यमिदं पाणिनीयं शब्दानुशासनम्। पाणिनेः प्रागपि आपिशलादीनि व्याकरणानि बभूवुरिति शक्यमध्यवसातुम्। आचार्यपाणिनिना खल्वष्टाध्याय्यां आपिशलिप्रभृतयो दश व्याकरणाचार्या नामतः स्मृताः। ततोऽर्वागपि कातन्त्रप्रभृतीनि व्याकरणानि समुदपद्यन्त। परन्तु सर्वाण्यपि तानि भास्करमण्डलेनेव नक्षत्राणि, पाणिनेः शब्दानुशासनेन तिरस्कृततेजांसि व्यलीयन्त।

### आचार्यपाणिनेः कालः

पाणिनेः कालस्य निर्णये प्रवृत्तानां प्राच्यानां पाश्चात्यानाञ्च विदुषामस्ति विप्रतिपत्तिः। तत्र प्राधान्येन कानिचिदेव मतानि कालविचारे प्रदर्श्यन्ते। अधस्तात् प्रदर्शितसमये पाणिनिः संबभूवेत्येते प्राहुः—

| | | | |
|---|---|---|---|
| श्री राजवाडेवैद्यमहाभागः | | — | क्रि. पू. ९००–८०० |
| श्री बेलवाल्कर | ,, | — | क्रि. पू. ७००–६०० |
| श्री भण्डारकर | ,, | — | क्रि. पू. ७०० |
| श्री मेग्डानल् | ,, | — | क्रि. पू. ५०० |
| श्री मेक्समूलर | ,, | — | क्रि. पू. ३५० |

पं. युधिष्ठिरमीमांसकमहाभागस्तु अष्टाध्याय्याः अन्तरङ्ग बहिरङ्गप्रमाणान्यादृत्य पाणिनिर्विक्रमशकात् पूर्वं २९०० (क्रि. पू. 2844) वर्षेऽभ्योऽर्वाचीनो नेति निर्णीतवान् (द्रष्टव्यः 'व्याकरणं शास्त्र का इतिहास' नामको ग्रन्थः, प्र. भाग. पृ. २०५).

## आचार्यसंबन्धिनो विशेषाः

पाणिनि शब्दस्य निर्वचनन्तावत् 'पणिनोऽपत्यमित्यण्। पाणिनः। पाणिनस्यापत्यं युवेति इञ्। पाणिनिः' इति भाष्यप्रदीपे कैयटेन दर्शितम् (१–१–७३)। 'दाक्षीपुत्रस्य पाणिनेः' इति भाष्यकारवचनात् अस्य माता दाक्षीति, सा च दक्षनाम्नोऽपत्यं स्त्रीति च विज्ञायते। पाणिनिः शालातुरीय इति प्राचीनग्रन्थेषु व्यवहारदर्शनात् शलातुरग्रामोऽस्य अभिजन इति शक्यं वदितुम्। यत्र पूर्वैरुषितं सोऽभिजन इति द्रष्टव्यम्। 'तूदीशलातुरवर्मती'त्यादिना (४–३–९४) शलातुरशब्दात् अभिजनार्थे छण्। स च ग्रामोऽद्यं पाकिस्ताने अटक्पत्तनस्य समीपे विद्यमानो लौहरग्राम इति पुरातनेतिहासविदां मतम्।

अष्टभिरध्यायैः समुल्लसितमिदं पाणिनीयं शब्दानुशासनमष्टाध्यायीति प्रथितम्। एकैकस्याध्यायस्य चत्वारः पादाः। प्रतिपादमनियतसंख्याकानि सूत्राणि। अष्टाध्याय्यामाहत्य ३९८३ सूत्राणि विद्यन्ते। अष्टाध्याय्या अनुबन्धत्वेन सर्वादिप्रभृतयोगणाः पठिताः। एषां संख्या च पञ्चाशदुत्तरशतत्रयमतिक्राम्यति। एषु केचिदेव शकन्ध्वादिप्रभृतयो वार्तिककारेण संकलिताः। ततो दशगणी धातुपाठः। लिङ्गानुशासनम्। शिक्षा चेति महदिदं पाणिनीयं शास्त्रं प्रवृत्तम्।

ततश्च पाणिनीयं शब्दानुशासनं विवरीतुं तत्र संभाव्यमानान् दोषान् परिहर्तुञ्च कात्यायनगोत्रनामा वररुचिरष्टाध्याय्यां वार्तिकानि प्रणिन्ये। स च 'वक्तव्यम्, वाच्यम्, उपसंख्यानम्' इत्याकारकैः पदैः पाणिनीयस्य न्यूनतां परिजहार। वार्तिककारोऽयं दाक्षिणात्य इति सूत्रकारादेकेन शतकेन अर्वाचीन इति च पुरातनेतिहासशोधकानां मतम्। सुनाग, भारद्वाज, क्रोष्टृ। वाडवादयोऽन्येऽपि वार्तिककारा बभूवुरिति महाभाष्यादवगम्यते।

वार्तिकविशिष्टमिदं पाणिनीयं विशदयितुं श्रीशेषावतारत्वेन प्रथितो महाप्रतिभाप्रभावः पतञ्जलिः महाभाष्यमभाषिष्ट। पतञ्जलेः कालस्तु क्रि. पू. द्वितीयं शतकमिति संशोधकानामभिप्रायः। तदिदं पाणिन्युपज्ञं कात्यायनोपबृंहितं पतञ्जलिप्रतिष्ठापितं शास्त्रं 'त्रिमुनि व्याकरण'मिति प्रसिद्धिमवाप।

महाभाष्यस्य प्रौढिं गभीरताञ्चालक्ष्य क्रिस्तीयसप्तमशतके वामनजयादित्याभ्यां काशिकानाम्नी काचन सरला वृत्तिः सूत्रवार्तिकयोः कृता। अत्र चाष्टाध्ययीक्रमेण सोदाहरणं सुलभावगाहं विवरणं वर्तते। काशिकामालम्ब्य भारतवर्षे पठनपाठनपद्धतिर्दीर्घकालमन्ववर्तत। ततश्चाष्टाध्यायीक्रममुलङ्घ्य प्रयोगसिद्धिप्रधानाः रूपावतारप्रक्रियाकौमुदीप्रभृतयः प्रक्रियाग्रन्था निरमीयन्त। तेषु वैयाकरणमूर्धन्येन भट्टोजिदीक्षितेन प्रणीता वैयाकरणसिद्धान्तकौमुदी सर्वातिशायिनी क्रिस्तीयसप्तदशशतके निर्मिता। अद्यत्वे सर्वत्र भारतवर्षे सिद्धान्तकौमुद्येव पाठशालासु व्याकरणाध्ययनाय प्राधान्येनोपयुज्यते।

सिद्धान्तकौमुद्यां प्रक्रियानुरोधेनाष्टाध्याय्याः सर्वाणि सूत्राणि स्वस्थानादाकृष्यापकृष्य च व्याख्यातानि। वैदिकशब्दानां प्रक्रियायाः प्रदर्शनार्थं पृथगेव वैदिकप्रकरणं निर्मितम्। एषा सिद्धान्तकौमुद्यपि छात्राणां दुरवगाहेति मन्वानैः पण्डितैः छात्रानुग्रहार्थं लघुकौमुदी लघुपाणिनीयादयो निर्मिताः।

**एतद्ग्रन्थनिर्माणोद्देशः**

कर्नाटकराज्ये शासनेन प्रवर्त्यमानासु संस्कृतपाठशालासु साहित्यपरीक्षायाः सिद्धान्तकौमुदी पठ्यत्वेन क्लृप्तासीत्। नूतनपठ्यावलीक्रमानुरोधेन संस्कृत

व्याकरणपठ्यपुस्तकनिर्माणार्थं कर्णाटकशासनीयपठ्यपुस्तकनिर्देशकैः (Director of Text Books) इयं समितिर्नियोजिता। सिद्धान्त कौमुद्यध्ययनाय ग्लायतां अध्ययनात् पराजयमानानां छात्राणां सौलभ्य सौकर्यसौमत्यसंपादनावहो व्याकरणग्रन्थो विरचनीय इति निर्देशकानां सूचनासीत्। तमिमं विषयं परिशील्य समितेः सदस्यैरस्माभिः सिद्धान्तकौमुद्येव क्लिष्टांशपरिहाणेन नूतनोपयुक्तांशयोजनेन च परिष्करणीयेति निर्धारितम्।

ग्रन्थोऽयं व्याख्यानसापेक्षो मा भूदिति अनुवृत्तिप्रदर्शनपूर्वकं सूत्राक्षराणि योजयित्वा सूत्राणां सरला वृत्तिः प्रक्रियानुरोधेन सोदाहरणं विरचिता। अद्यत्वे चाप्रसिद्धानां शब्दानां प्रक्रिया प्रायशो वर्जिता। व्याख्यागताः विशेषास्तत्र तत्र ग्रन्थे एव संघटिताः। वर्णद्वित्वप्रक्रिया परित्यक्ता। प्रसिद्धधातूनामेव प्रक्रियादर्शिताः। व्युत्पाद्यमानानां कठिनशब्दानामर्थः प्रकाशितः। महाकविभिः प्रयुक्ताः शब्दविशेषाः समुदाहृताः। क्लेशावहो वाक्यार्थविचारो दूरीकृतः। पठ्यत्वेन नियोजितो व्याकरणभागः केवलमस्मिन् ग्रन्थे संयोजितः।

शास्त्रेषु परिशुद्धं ज्ञानं संपिपादयिषद्भिः सांप्रदायिकी प्राचीनाध्ययनपद्धतिः श्रेयसीत्यस्माकं दर्शनम्। अधुनातननूतनप्रवचनपद्धतौ कांश्चित् गुणानपि पश्यद्भिरस्माभिः कमपि मध्यमं मार्गमवलम्ब्य एतद्ग्रन्थनिर्माणे यथाशक्तिप्रयतितम्। 'गच्छतः स्खलनं क्वापि' इति न्यायेन संभवेयुरत्र प्रमादाः। ते चावश्यं बोधनीया विद्वद्भिः, ये मुद्रणान्तरे निरसितुं शक्ष्यन्ते, अनेनास्मदीयप्रयत्नेनाध्यापकानामधीयानानाञ्च सौकर्यातिशयः कल्पितो भविष्यतीति विद्यतेऽस्माकं विश्वासः।

विदुषां वशंवदाः

एन्. रङ्गनाथशर्मा

एन्. टि. श्रीनिवासय्यंगार्यः

एस्. वि. भीमभट्टः

———

श्रीः

ॐ नमः पाणिनिकात्यायनपतञ्जलिभ्यः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।

कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

व्याकरणशास्त्रं रचयितुं प्रवृत्तो भगवान् पाणिनिः काश्चित् संज्ञाः पर्यकल्पयत्, यासां साहाय्येन परिमितैः शब्दैः सूत्राणां रचना साध्याभवत् । तदर्थमादौ लोकप्रसिद्धां वर्णमालां क्रमभेदं कृत्वा चतुर्दशसूत्ररूपेण निबबन्ध । तानि च सूत्राणि—

**अइउण्, ऋऌक्, एओङ्, ऐऔच्, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय्, शषसर्, हल् ॥**

एषां सूत्राणां चतुर्दशसंख्याकत्वात् चतुर्दशसूत्रीति, वर्णपाठरूपत्वात् वर्णसमाम्नाय इति, महेश्वरप्रसादाधिगतत्वात् माहेश्वराणीति, प्रत्याहाररूपसंकेतोपयोगित्वात् प्रत्याहारसूत्राणीति च व्यवहारः ।

एषां च सूत्राणां प्रत्याहारसिद्धिरेव प्रयोजनम् । प्रत्याहारो नाम मध्यपतितानां वर्णानां ग्रहणाय आद्यन्तयोर्वर्णयोर्मेलनम् । उद्दिष्टमेकं वर्णमादाय तेन सह सूत्रान्तपठितानाम् इत्संज्ञकानां वर्णानां योजनेन सम्पादितः शब्दः मध्यगतानां वर्णानाम् आदेः वर्णस्य च संज्ञा भवति ।

यथा—'अण्' इति अ इ उ वर्णानां संज्ञा ; 'अक्' इति अ इ उ ऋ ऌ वर्णानां संज्ञा ।

प्रत्याहारसिद्धिप्रकारः—

### १ आदिरन्त्येन सहेता १-१-७१

अन्ते भवः अन्त्यः । स्वं रूपमिति सूत्रात् स्वं रूपमिति अनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते ।

"आदिवर्णः अन्त्येन इत्संज्ञकेन वर्णेन सह उच्चार्यमाणः मध्यपतितानां वर्णानां स्वस्य च ग्राहको भवति" ।

यस्मात् पूर्वं नास्ति परमस्ति सः आदिः। यस्मात्परं नास्ति पूर्वमस्ति स अन्तः। अत्र आद्यन्तशब्दाभ्यां मध्यवर्तिनामाक्षेपः। अतः मध्यवर्तिनामपि संज्ञासिद्धिः। स्वपदेन आदिरेव परामृश्यते प्राधान्यात्। इह सूत्रापेक्षमादित्वं न विवक्षितं, किन्तु आद्यन्तशब्दाक्षिप्तसमुदायापेक्षम्। अन्यथा इक्, उक् इत्यादयः संज्ञाः न सिध्येयुः, इकारोकारयोः सूत्रादित्वाभावात्। 'इत्' इति काचन संज्ञा आश्रिता व्याकरणे।

केषां वर्णानामित्संज्ञा भवतीत्यत्राह—

## २. उपदेशेऽजनुनासिक इत् १–३–२

उपदेशो नाम आद्योच्चारणम्। शास्त्रप्रवर्तकानां प्रत्यक्षमाख्यानम्। स च प्रायः आगमादेशधातुप्रत्ययसूत्ररूपः। "तेषु योऽनुनासिकः अच् (स्वरः) सः इत्संज्ञो भवति"। अनुनासिकाननुनासिकविज्ञानं पाणिनिशिष्यपरम्पराव्यवहारतो ज्ञेयम्। आगमे उदाहरणम्—नुट्, नुक्, नुम्, पुक्। अत्र सर्वत्रापि उकारः इत्। आदेशे—तातङ्, अनङ्, इयङ्, उवङ् इत्यत्र अकारः, रुः इत्यत्र उकारः। धातौ—एध, स्पर्ध इत्यादिषु अकारः, चक्षिङ् इत्यादिषु इकारः, गुपू इत्यादौ ऊकारः, कटे इत्यादौ च एकारः इत् भवति। प्रत्यये—शतृ इत्यत्र ऋकारः, मतुप् इत्यत्र उकारः इत्। सूत्रे—लण् इत्यत्र अकारः इत्।

## ३. हलन्त्यम् १–३–३

पूर्वसूत्रात् उपदेशे इति, इत् इति चानुवर्तते। सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र। "उपदेशे अन्त्यं हल् इत् स्यात्"। यथा—नुक्, तिप्, क्त्र् इत्यादौ क-प-त्रकाराः इतो भवन्ति। एवं प्रत्याहारसूत्रेषु अन्त्यहलां ण् क् इत्यादीनां इत्संज्ञा भवति। यथा अइउण् इत्यत्र णकारः। तदेवं द्वाभ्यां सूत्राभ्यामित्संज्ञासिद्धौ 'आदिरन्त्येन सहेता' इति सूत्रेण प्रत्याहारसिद्धिर्भवति।

## ४. न विभक्तौ तुस्माः १–३–४

हलन्त्यमित्यस्यापवादः। तु इति तवर्गस्य ग्रहणम्। उपदेशेऽजनुनासिक इत्यतः अनुवृत्तम् इत् इत्येतत् बहुवचनान्ततया विपरिणम्यते। विभक्तौ

वर्तमाना: तवर्ग-सकार-मकारा: अन्त्या अपि इतो न स्युः"। आत्, स्मात् इत्यादिषु तकारः, स्मिन् इत्यादिषु नकारः, जस्, अस्, तस् इत्यादिषु सकारः ; अम्, ताम् इत्यादिषु मकारश्च इत्संज्ञां न लभन्ते ।

## ५. विभक्तिश्च १–४–१०४

'सुप: ' इति सूत्रं, तिङ: त्रीणि त्रीणीत्यत: ' तिङ ' इति चानुवर्तते । "सुप: तिङश्च विभक्तिसंज्ञा: स्युः"। पुरुष वचनसंज्ञा समावेशार्थश्चकारः ।

## ६. आदिर्ञिटुडव: २–३–५

उपदेशेऽजनुनासिक इत्यत: उपदेशे, इदिति, भूवादयो धातव: इत्यत: धातव: इति च अनुवर्तते । धातव: इत्यस्य षष्ठ्यन्ततया विपरिणाम: । आदिरित्येकवचनं प्रत्येकान्वयतात्पर्येण । "उपदेशे धातूनामादिभूतानि ञि-टु-डु एतान्यक्षराणि इत्संज्ञानि स्युः"। टु-डु अत्र उदिन्निर्देशाभावात् वर्गग्रहणं न भवति । उदा :–ञिमिदा (स्नेहने) टुनदि (समृद्धौ) डुकृञ् (करणे) ।

## ७. ष: प्रत्ययस्य १–३–६

पूर्वसूत्रात् आदिरित्यनुवर्तते । "प्रत्ययस्य आदि: षकार: इत्संज्ञ: स्यात्" । ष्वुन्, ष्यञ्, ष्फ इत्यादौ षकारस्य । प्रत्ययस्येति किम् ? षोडश, षोढा अत्र मा भूत् । आदिरिति किम् ? महिष: अत्र मा भूत् । अत्र अविमह्योष्टिषच् इति सूत्रेण टिषच् प्रत्यय: ।

## ८. चुटू १–३–७

पूर्वसूत्रात् प्रत्ययस्येति, आदिर्ञिटुडव: इत्यत: आदिरिति, उपदेशेऽजित्यत: इदिति चानुवर्तते । आदि: इदित्यस्य च द्विवचनान्ततया विपरिणाम: । चुटू इति वर्गग्रहणम् । "प्रत्ययस्यादी चवर्ग टवर्गौ इत्संज्ञौ स्याताम्"। यथा–च्फञ्, जस्, ञ्य: टच्, ड:, ण: इत्यादि । आदिरिति किम् ? अटच् प्रत्यये ठस्य मा भूत् । इदं सूत्रं कचिन्न प्रवर्तते । तेन चुञ्चुप्, चणप् प्रभृतिषु नेत्संज्ञा ।

## ९. लशक्वतद्धिते १-३-८

ल श कु इति समाहारद्वन्द्वः । इदित्यनुवर्तते । प्रत्ययस्येति, आदिरिति चानुवर्तते । तद्धितभिन्नस्य प्रत्ययस्य आदिभूताः लकार-शकार-कवर्गाः इत्संज्ञाः स्युः । ल्युटि लकारः ; शस्, शप् इत्यादौ शकारः ; क्विप्, खश्, ग्स्नु, घञ्, ङस् इत्यादौ कवर्गः । अतद्धिते इति किम् ? लच्, शः, कन्, तद्धितप्रत्यये मा भूत् ।

## १०. तस्य लोपः १-३-९

इत्संज्ञकस्य वर्णस्य लोपः स्यात् । उपदेशेऽजनुनासिक इत् इत्यतः इत् इत्यनुवर्त्य विभक्तिविपरिणामेन इत इत्यस्य लाभेपि जिद्धूनाम् अन्त्यलोपवारणाय 'तस्य' ग्रहणम् ।

## ११. अदर्शनं लोपः १-१-६०

प्रसक्तस्य अदर्शनं लोप इत्युच्यते ।

## १२. प्रत्ययस्य लुक्श्लुलुपः १-१-६१

अदर्शनमित्यनुवर्तते । लुक्श्लुलुपः इत्यावर्तते । लुक्श्लुलुप् शब्दमुच्चार्य विहितं प्रत्ययस्यादर्शनं क्रमात् लुक्श्लुलुप् संज्ञं स्यात् । अस्य च प्रयोजनम् उत्तरत्र निरूपयिष्यते । अचः उच्चारणकालमात्रानुसारेण ह्रस्वदीर्घप्लुतभेदेन त्रिविधाः भवन्ति ।

## १३. ऊकालोऽज्ह्रस्वदीर्घप्लुतः १-२-२७

ऊ इति मात्रिकद्विमात्रिकत्रिमात्रिकाणां त्रयाणां सवर्णदीर्घेण निर्देशः । ऊकालः कालो यस्य सः ऊकालः । ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रः पुल्लिङ्गनिर्देशः । उ ऊ ऊ३ इत्येवंकालोऽज् यथा क्रमं ह्रस्वः, दीर्घः प्लुतः इत्येवंसंज्ञो भवति । यथा—दधि, मधु ; गौरी, कुमारी ; देवदत्ता ३ अत्र । एचः ह्रस्वभेदो नास्ति । एवं लवर्णस्य दीर्घो नास्ति । एवं त्रिविधा अचः उदात्तानुदात्तस्वरितभेदेन पुनस्त्रिविधाः ।

## १४. उच्चैरुदात्तः १–२–२९

उच्चैरिति श्रुतिप्रकर्षो नेह गृह्यते। किन्तु स्थानकृतमुच्चत्वम्। ताल्वादिकेषु स्थानेषु अस्ति ऊर्ध्वभागः, अधोभागः इति भेदः। ताल्वादिषु सभागेषु स्थानेषु ऊर्ध्वभागे निष्पन्नोऽच् उदात्त संज्ञः।

## १५. नीचैरनुदात्तः १–२–३०

ताल्वादिषु सभागेषु स्थानेषु अधोभागे निष्पन्नोऽच् अनुदात्तसंज्ञः।

## १६. समाहारः स्वरितः १–२–३१

उदात्तः अनुदात्तः, इति अजिति चानुवर्तते। अनुवृत्ते उदात्तानुदात्तपदे धर्मप्रधाने। यत्र समाहरणं स समाहारः। ततश्च उदात्तानुदात्तधर्मौ समाह्रियेते– सहितावुपलभ्येते यस्मिन्नचि सः अच् स्वरितसंज्ञो भवति। एवंभिन्नः अच् अनुनासिकानुनासिकभेदेन प्रत्येकं पुनर्द्विविधः।

## १७. मुखनासिकावचनोऽनुनासिकः १–२–८

मुखसहिता नासिका मुखनासिका, मध्यमपदलोपी समासः। उच्यते– उच्चार्यते इति वचनः। मुखनासिकया वचनः इति विग्रहः। मुखसहित नासिकया उच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। मुख शब्देन मुखस्थितानि कण्ठादिस्थानानि गृह्यन्ते वर्णानामुत्पत्तिस्थानानि अग्रे प्रदर्श्यन्ते। अनुनासिकाननुनासिकभेदो यवलानामपि विद्यते। एवं च अ इ उ वर्णानामष्टादश, लृवर्णस्य द्वादश, एचां द्वादशभेदाः यवलानां द्वौ भेदौ इति सिद्धम्।

वर्णानामुत्पत्तिस्थानानि–

अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। उपूपध्मानीयानामोष्ठौ। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। ञमङणनानां नासिका च। अनुस्वारस्य नासिका। जिह्वामूलीयस्य जिह्वामूलम्। अर्धहकारसदृशो ध्वनिः विसर्गापरपर्यायो विसर्जनीयः। अर्धमकारसदृशध्वनिः अनुस्वारः। ≍क ≍प इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ।

अथ प्रयत्नाः--वर्णा हि मुखगततत्तत्स्थानेभ्यः श्वासोदीरणेनोत्पद्यन्ते । तत्र श्वासोदीरणार्थमाश्रितः प्रयास एव प्रयत्नशब्देनोच्यते । स च द्विविधः । आभ्यन्तरो, बाह्यश्च । आभ्यन्तरः स्पृष्टेषत्स्पृष्टविवृतेषद्विवृत संवृतभेदात् पञ्चविधः ।

कादयो मावसानाः स्पर्शवर्णाः । तेषां स्पृष्टं नाम प्रयत्नः । यरलवा अन्तस्थवर्णाः । तेषाम् ईषत्स्पृष्टं नाम प्रयत्नः । अचः स्वराः । तेषां विवृतं नाम प्रयत्नः । शषसहा ऊष्माणः । तेषाम् ईषद्विवृतं प्रयत्नः । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव । बाह्यप्रयत्नस्तु एकादशविधः । विवारः, संवारः, श्वासो, नादो, घोषः, अघोषः, अल्पप्रमाणो, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्चेति । खरां विवारः श्वासः अघोषश्च प्रयत्नः । हशां संवारः नादः घोषश्च प्रयत्नः । यणां वर्गप्रथमतृतीयपञ्चमानां च अल्पप्राणः प्रयत्नः । शलां वर्गद्वितीयचतुर्थयोश्च महाप्राणः प्रयत्नः । उदात्तानुदात्तस्वरिताः प्रयत्नाः अचाम् । आभ्यन्तरप्रयत्नः सवर्णसंज्ञायामुपयुज्यते । बाह्यस्तु आन्तरतम्यपरीक्षयामिति विवेकः ।

## १८. तुल्यास्यप्रयत्नं सवर्णम् १-१-९

आस्ये भवमास्यं कण्ठादिस्थानम् । प्रकृष्टो यत्नः प्रयत्नः—आभ्यन्तरः । आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य तत् । कण्ठादिस्थानं आभ्यन्तरप्रयत्नश्च ययोः साधारणौ तौ वर्णौ मिथः सवर्णौ स्याताम् । अ-आ, इ-ई इत्यादि । आस्यग्रहणं किम् ? कचटतपानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत् । प्रयत्नग्रहणं किम् ? इ चु यशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत् ।

ऋकारऌकारयोः स्थानभेदादप्राप्तां सवर्णसंज्ञां वार्तिककार आह—

**ऋऌवर्णयोः मिथः सावर्ण्यं वाच्यम्**

ऋकारऌकारयोः परस्परं सवर्णसंज्ञा वाच्या ।

R. Alwar II P.U.C. R. आल्वार आर् आल्वार

ग्रहणकशास्त्रमाह—

## १९. अणुदित्सवर्णस्य चाप्रत्ययः १-१-६९

अणिति लण् सूत्रणकारेण प्रत्याहारः। प्रतीयते—विधीयते इति प्रत्ययः। अप्रत्ययः—अविधीयमानः इत्यर्थः इह विवक्षितः। कु चु टु तु पु एते उदितः।

अविधीयमानः अण्, उदिच्च सवर्णानां स्वस्य च रूपस्य ग्राहकः स्यात्। अण् यथा—आद्गुणः इत्यत्र अकारेण ह्रस्वस्य अकारस्येव दीर्घादीनामपि ग्रहणं भवति। तेन देवेन्द्रः इत्यत्रेव रमेशः इत्यत्रापि दीर्घः सिध्यति। उदित् यथा—चुटू, लशक्वतद्धिते इत्यत्र चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति। अप्रत्यय इति किम्? त्यदादीनामः, इदम इश् इत्यादौ दीर्घो मा भूत्। अस्यापवादमाह—

## २०. तपरस्तत्कालस्य १-१-७०

तः परो यस्मात्सोयं तपरः। तादपि परःतपरः। तपरोवर्णः तत्कालस्य—आत्मनातुल्यकालस्यैव सवर्णस्य ग्राहकः स्यात्, स्वस्य च रूपस्य। यथा—अतोभिसऐस्, रामैः। तत्कालस्येति किम्? मालाभिः अत्र ऐस् मा भूत्। वृद्धिरादैच् इत्यत्र ऐच् दीर्घ एव गृह्यते तात्परत्वात्।

## २१. येन विधिस्तदन्तस्य १-१-७२

तृतीयान्तेन येनेत्यनेन विशेषणमुच्यते। स्वंरूपमित्यतः स्वमित्यनुवर्तते। षष्ठ्यन्ततया विपरिणम्यते। तदन्तस्य—सोऽन्तोस्येति तदन्तः तस्येति बहुव्रीहिः। येन विशेषणेन विधिर्विधीयते सः तदन्तस्य—आत्मान्तस्य समुदायस्य ग्राहकः स्यात्, स्वस्य च रूपस्य। अतो भिस ऐस् इति विधीयमानः भिसः ऐसादेशः अकारान्तात्—अङ्गात्, अकाररूपात् अङ्गाच्च भवति। रामैः, ऐः।

अस्यापवादः—

### समासप्रत्ययविधौ प्रतिषेधः उगिद्वर्णग्रहणवर्जम्

समासविधौ प्रत्ययविधौ च तदन्तविधेः प्रतिषेधो वाच्यः, उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा। यथा—द्वितीयान्तं श्रितादिभिः समस्यते इति विहितः

समासः कृष्णश्रितः इत्यत्रैव कृष्णपरमश्रितः इत्यत्र न भवति । 'नडादिभ्यः फक्' इति विहितः प्रत्ययः नडस्यापत्यं नाडायनः इत्यत्रैव सूत्रनडस्यापत्यं सौत्रनाडिरित्यत्र न भवति । उगिद्ग्रहणे, वर्णग्रहणे तु तदन्तविधिरस्त्येव । तेन उगितश्चेति विहितः ङीप् भवतीत्यत्रैव अतिभवतीत्यत्रापि भवति । अत इञ् इति विहितः इञ्प्रत्ययः दः इत्यत्रैव दाक्षिः इत्यत्र अवर्णान्तादपि भवति ।

### यस्मिन् विधिस्तदादावल्ग्रहणे

यस्मिन्निति सप्तम्यन्तं विवक्षितम् । अलिति वर्णपर्यायः । सप्तम्यन्ते वर्णग्रहणे विशेषणे यो विधिः सः तदादौ भवति । येन विधिरित्यस्यापवादः । विशेषणविशेष्ययोः द्वयोः सप्तम्यन्तत्वे एवायं नियमः । यथा—वान्तो यि प्रत्यये अत्र यादौ प्रत्यये इत्यर्थलाभः ।

## २२. तस्मिन्निति निर्दिष्टे पूर्वस्य १–१–६६

विधिसूत्रस्थ सप्तम्यन्तपदस्य तस्मिन्नित्यनुकरणम् । इतीत्यनन्तरं गम्येऽर्थे इति शेषः । निरिति नैरन्तर्ये । दिशिरुच्चारणे । सप्तम्यन्तपदगम्येऽर्थे अव्यवहितोच्चरिते सति पूर्वस्यैव कार्यं स्यात् ।

व्यवहितोच्चरिते स भवति । उत्तरस्यापि न भवति । व्यवधानं च वर्णान्तरकृतमेव निषिध्यते अनेन सूत्रेण, न कालकृतम् । कालकृतव्यवधानस्य संहितायामित्यधिकारादेव निरासलाभात् । सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य स्यादिति पर्यवसितोऽर्थः ।

यथा—इको यणचीत्यत्र अचीति सप्तमीनिर्देशात् अजव्यवहितपूर्वस्येत्यर्थः सिध्यति ।

## २३. तस्मादित्युत्तरस्य १–१–६७

पूर्वसूत्रात् निर्दिष्टग्रहणमनुवर्तते । तस्मादिति विधिसूत्रस्थ पञ्चम्यन्तस्यानुकरणम् । इति शब्दानन्तरं गम्येऽर्थे इति शेषः पूर्ववत् । पञ्चम्यन्तगम्येऽर्थे अव्यवहितोच्चारिते सति उत्तरस्यैवकार्यं स्यात् । व्यवहितोच्चारिते न भवति ।

पूर्वस्यापि न भवति । पञ्चमी निर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य उत्तरस्य स्यादिति संक्षेपार्थः । यथा—उदस्थास्तम्भोः पूर्वस्येत्यत्र उद इति पञ्चमीनिर्देशात् उदव्यवहितोत्तरस्येति सिध्यति ।

पञ्चमीसप्तम्योरुभयोर्निर्देशे व्यवस्था—

## उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् । इयं परिभाषा

यत्र सूत्रे पञ्चम्यन्तं सप्तम्यन्तं च निर्दिष्टम्, उभयमपि सावकाशं निरवकाशं वा तत्र परत्वात् 'तस्मादित्युत्तरस्येति' नियमः प्रवर्तते । तत्र पञ्चमी सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति । तेन षष्ठीनिर्दिष्टस्य च कार्यं भविष्यति । यथा—'आमि सर्वनाम्नः सुट्, ङमो ह्रस्वादचि ङमुट् नित्यम्'। यत्र तु अन्यतरस्य सावकाशत्वं तत्र या अनवकाशा सा इतरस्याः षष्ठीत्वं प्रकल्पयिष्यति । यथा—'आनेमुक्' अत्र सप्तमी निरवकाशा पूर्वसूत्रे सावकाशायाः अत इति पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति । 'ईदासः'—अत्र पञ्चमी निरवकाशा पूर्वत्र सावकाशायाः आने इति सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति ।

## २४. षष्ठीस्थाने योगा १-१-४९

स्थाने योगो यस्याः इति व्यधिकरणो बहुव्रीहिः । निपातनाच्च सप्तम्याः अलुक् । स्थाने इति निमित्तसप्तमी । योगः सम्बन्धः । स्थाननिमित्तक सम्बन्धेत्यर्थः । इह शास्त्रे या षष्ठी अनियत सम्बन्धा श्रूयते सा स्थान-निमित्तकसम्बन्धैव स्यात् । स्थानशब्दः प्रसङ्गवाची । यथा—इकः यण् इत्युक्ते इग्वर्णोच्चारणप्रसङ्गे यण् वर्णोच्चारणं भवति इत्यर्थः सिध्यति ।

## २५. स्थानेऽन्तरतमः १-१-५०

अन्तरशब्दः सदृशपर्यायः । अतिशयितोऽन्तरः अन्तरतमः । स्थानं च प्रसङ्ग इत्युक्तम् । प्रसङ्गे सति प्राप्यमाणानां सदृशतमः आदेशः स्यात् । शब्दस्यान्तर्यम् ? स्थानार्थगुणप्रमाणतः । अत्रत्यः स्थानशब्दः कण्ठादिस्थानपरः । स्थानतः—दण्डाग्रम् । द्वयोरकारयोः स्थाने भवन् दीर्घः कण्ठ्य एव आकारो

भवति । अर्थतः—तृज्वत्क्रोष्टुरिति क्रोष्टुशब्दस्य तृजन्तः आदेशो भवन् अर्थसाम्यात् क्रोष्टृशब्दः एव भवति । गुणतः—वाग्घरिः । वाग् हरिः इत्यत्र हस्य स्थाने भवन् पूर्वसवर्णः घोषनादसंवारमहाप्राणप्रयत्नवान् घकार एव भवति । प्रमाणतः—अमुष्मै, अमूभ्याम् । 'अदसोसेर्दादु दोमः' इति विहितः उकारः ह्रस्वव्यञ्जनयोर्ह्रस्वः, दीर्घस्य दीर्घः भवति ।

**यत्रानेकविधमान्तर्यं तत्र स्थानतः आन्तर्यं बलीयः (प)**

यथा—चेता, स्तोता इत्यादौ इकारस्य उकारस्य च स्थाने स्थानेन सदृशतमः एकारः, ओकार एव च भवति न तु प्रमाणतस्सदृशः अकारः ।

## २६. अलोऽन्त्यस्य १–१–५२

'षष्ठीस्थानेयोगा' इत्यतः षष्ठीस्थाने इत्यनुवर्तते । षष्ठीति प्रथमान्तं तृतीयान्ततया विपरिणम्यते । निर्दिष्टस्येति शेषः । स्थाने इत्यनन्तरं विधीयमान इति शेषः । स्थाने विधीयमानः आदेशः षष्ठ्यन्तेन निर्दिष्टस्य यः अन्त्यः अल् तस्य स्यात् । यथा—'त्यदादीनामः' इति विहितः अकारः तद् शब्दान्त्यस्य दकारस्य भवति । स्थानषष्ठीनिर्देशस्थले एवास्य प्रवृत्तिः । तेन अवयवसम्बन्धषष्ठी-निर्देशस्थले टित् कित् मिदादयः अवयवस्य भवन्ति । क्वचिदयं नियमः न प्रवर्तते ।

**नानर्थके अलोन्त्यविधिरनभ्यास विकारे (प)**

अनर्थके अलोन्त्यविधिर्न भवति अभ्यासविकारं वर्जयित्वा । तेन इदम् शब्दे इद् इत्यस्यानर्थकतया तदन्तस्येति न । अतः 'हलिलोपः' इति सूत्र-विहितः इदोलोपः सर्वस्यैव भवति । अभ्यासविकारे तु अनर्थकेपि अलोन्त्य-विधिरस्त्येव । अतः 'बिभर्ति' इत्यादौ 'भृञामित्' 'अर्तिपिपर्त्योश्च' इति विहितमित्वम् अभ्यासान्त्यस्य भवति ।

## २७. आदेः परस्य १–१–५४

अलोन्त्यस्येत्यस्यापवादः । 'अलः' इत्यनुवर्तते । परस्य विहितः आदेशः तस्यादेः वर्णस्य स्यात् । यथा—उत्थानम् । 'उदस्थास्तम्भोः-

पूर्वस्य ' इति सूत्रेग उद: परस्य ' स्था ' इत्यस्य विहित: पूर्वसवर्ण: तदादे: सकारस्य भवति ।

## २८. अनेकाल् शित् सर्वस्य १-१-५५

न एक: अनेक:, अनेक: अल् यस्य स: अनेकाल् । श् इत् यस्य स: शित् । अनेकाल् शिच्चादेश: षष्ठीनिर्दिष्टस्य सर्वस्य स्थाने स्यात् । ' अस्तेर्भू: '–भविता । ' अष्टाभ्य औश् '–अष्टौ । शित: शकारानुबन्धेन अनेकाल्त्वेपि शिदिति पृथक्करणं ज्ञापयति–

## नानुबन्धकृतमनेकाल्त्वम् (प)

अनुबन्ध:–इत्संज्ञको वर्ण: । स: अनेकाल्त्वप्रयोजको न भवति । तेन ' दिवउत् ' इति विहित: उदादेश: सर्वस्य न भवति । ' अलोऽन्त्यस्येति ' उत्सर्ग: । तस्य ' आदे: परस्य ' ' अनेकाल्शित्सर्वस्य ' इत्यपवादौ तयो: समावेशे को भवतीति चेत्—

## २९. विप्रतिषेधे परं कार्यम् १-४-२

विप्रतिषेधशब्द: परस्परविरोधार्थक: । विरोधश्च तुल्यबलयोरेव लोकसिद्ध: । न हि मशकमातङ्गयोर्विरोध: इत्यस्ति । द्वयो: शास्त्रयो: क्वचिल्लब्धावकाशयो: एकत्र लक्ष्ये युगपत् सम्भव: तुल्यबलविरोध: । कार्यस्य परत्वं परशास्त्रविहितत्वम् । तुल्यबलविरोधे परशास्त्रविहितं कार्यं स्यात् । ततश्च ' आदे: प्ररस्य ' ' अनेकाल्शित्सर्वस्ये 'त्यनयो: समावेशे ' अनेकाल्शित्सर्वस्ये 'त्यस्य परत्वात् सर्वादेशो भविष्यति । यथा–' आदे: परस्य ' इत्यस्यावकाश:–' उद:स्थास्तम्भो पूर्वस्य ' । उत्थानम् । ' अनेकाल्शित्सर्वस्य ' इत्यस्यावकाश:–' अस्तेर्भू: ।' भविता । इहोभयं प्राप्नोति–' अतोभिसऐस् ', ' अनेकाल्सर्वस्य ' इत्येतद्भवति । ' शित्सर्वस्ये 'त्यस्यावकाश:–' इदम इश् ', इह । ' आदे: परस्ये'त्यस्यावकाश:, उत्थानम् । इहोभयं प्राप्नोति– ' अष्टाभ्य औश् ', ' शित्सर्वस्य ' इत्येतद्भवति । विप्रतिषेधे इति किम् ?

तुल्यबलविरोधाभावे परमपि न स्यात् पूर्वमेव स्यात्। यथा परमपि अनेकाल्सर्वस्येति न भवति। 'ङिच्च' इत्येतत् भवति।

## ३०. ङिच्च १-१-५३

अनेकाल्सर्वस्येत्यस्यापवादः। ङ् इत् यस्य सः ङित्। 'अलोऽन्त्यस्ये' त्यनुवर्तते। ङित् आदेशः अनेकालपि अन्त्यस्यैव स्यात्। 'अवङ्स्फोटायनस्य' इति विहितः अवङ् गवाग्रमित्यादौ अन्त्यस्यैव भवति। तुह्योस्तातङिति विहितः तातङादेशस्तु सर्वादेश एव भवति। तातङि ङित्करणस्य गुणवृद्धिप्रतिषेधार्थत्वेन सावकाशत्वात्।

## पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः

परादीनांमध्ये पूर्वपूर्वापेक्षया उत्तरोत्तरं सूत्रं बलवत्तरमित्यर्थः। परापेक्षया नित्यान्तरङ्गापवादाः, नित्यापेक्षयापि अन्तरङ्गापवादौ, अन्तरङ्गापेक्षयापि अपवादः इत्येवं क्रमेण पूर्वपूर्वापेक्षया उत्तरोत्तरबलवत्वमिति फलितोऽर्थः। परं नाम— अष्टाध्यायीपाठक्रमे उत्तरम्। तच्च पूर्वसूत्रापेक्षया बलवत्, 'विप्रतिषेधे परं कार्य'मिति सूत्रात्। यथा वृक्षेभ्यः। अत्र 'सुपि चे'ति दीर्घं बाधित्वा परं 'बहुवचनेझल्येत्' इति एत्वं भवति। नित्यं नाम—कृताकृतप्रसङ्गिशास्त्रम्। तच्च परादपि बलवत्, कृताकृतप्रसङ्गित्वादेव। यथा तुदति। अत्र तुद् ति इत्यवस्थायां 'तुदादिभ्यः शः' इति शविकरणप्रत्ययं बाधित्वा परत्वात् 'पुगन्तलघूपधस्य च' इति लघूपधगुणः प्राप्तः। परमपि तं बाधित्वा शः नित्यत्वात् भवति। शप्रत्ययः गुणेकृतेऽपि प्राप्नोत्यकृतेपीति नित्यः। गुणस्तु शप्रत्यये कृते उपधात्वभङ्गात् न प्रवृत्तिमर्हतीत्यनित्यः। अन्तरङ्गं नाम—अन्तर्भूतनिमित्तकं, निमित्तनिरपेक्षम्, अल्पापेक्षं वा। अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्विनाविमौ। बहिरङ्गत्वेनाभिमतशास्त्रनिमित्तापेक्षया अन्तर्भूतनिमित्तकत्वमेव अन्तरङ्गत्वम्। अन्तरङ्गशास्त्रत्वेनाभिमतशास्त्रनिमित्तापेक्षया बहिर्भूतनिमित्तकत्वमेव बहिरङ्गत्वम्। तच्च परनित्याभ्यां बलवत्। 'असिद्धं बहिरङ्गमन्तरङ्गे' अन्तरङ्गे कर्तव्ये बहिरङ्गमसिद्धं भवतीति न्यायेन परनित्ययोः असिद्धत्वात्, असिद्धत्वमेव

अन्तरङ्गस्य बलवत्वे बीजम् । परादन्तरङ्गं यथा—उभये देवमनुष्याः । अत्र 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति विकल्पेन प्रवृत्तां परामपि सर्वनाम संज्ञां जस् निमित्तां बाधित्वा विभक्तिनिरपेक्षत्वेन—निमित्तनिरपेक्षत्वेन अन्तरङ्गत्वात् 'सर्वादीनि सर्वनामानी'ति नित्यासंज्ञैव भवति । नित्यादन्तरङ्गं यथा—ग्रामणिनी कुले । अत्र ग्रामणी ई इति स्थिते नित्यमपि 'इकोचिविभक्तौ' इति नुमं बाधित्वा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् 'ह्स्वो नपुंसके प्रातिपदिकस्य' इति ह्स्वः प्रथमं भवति । यदि नित्यत्वात् नुम् पूर्वं प्रवर्तेत तदा अजन्तत्वाभावात् 'ह्स्वो नपुंसके' इति ह्स्वः न स्यात् । परादपवादो यथा—अपवादो नाम बाधकः । गो—अग्रम् । अत्र 'अवङ्स्फोटायनस्ये'ति विहितः अवङ् 'अनेकाल्सर्वस्य' इति सर्वादेशं परमपि बाधित्वा 'ङिच्चेति' अन्त्यस्यैव स्थाने भवति । येन नाप्राप्तिन्यायेन अपवादत्वात् । 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायः । कस्मिश्चित् अवश्यप्राप्ते सति आरभ्यमाणो विधिः तस्य बाधको भवति । विशेषविहितत्वम्, निरवकाशत्वं च अपवादस्य बलवत्वे बीजम् । अनेकाल्सामान्ये प्राप्तं सर्वादेशत्वम्—अनेकाल्विशेषे इति विहितः अन्त्यादेशो बाधते । विशेषविहितत्वात्, निरवकाशत्वाच्च । अस्तेर्भूरित्यनेकाल्सु अङित्सु 'अनेकाल्सर्वस्य' इति सावकाशम् । अन्तरङ्गादपवादो यथा—दैत्यारिः । दैत्य—अरिः इत्यत्र परमपि सवर्णदीर्घं बाधित्वा सवर्णरूपनिमित्तानपेक्षतया अल्पापेक्षत्वेनान्तरङ्गे गुणे प्राप्ते अपवादत्वात् 'अकः सवर्णे दीर्घ' इति सवर्णदीर्घो भवति ।

## ३१. आद्यन्तौ टकितौ १–२–४६

षष्ठीस्थाने योगा' इत्यस्यापवादः । आदिश्च अन्तश्च आद्यन्तौ । टश्च कृच टकौ । टकारादकारः उच्चारणार्थः । टकौ इतौ ययो स्तौ टकितौ । 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते' इति न्यायात् 'इत्' शब्दस्य प्रत्येकं सम्बन्धः । षष्ठीनिर्दिष्टस्य स्थाने विहितः टित् आदिः सन्, किच्च अन्तः सन् भवति । आदिरित्यस्य आद्यवयवः । अन्त इत्यस्य अन्तावयव इत्यर्थः ।

यथा 'ङमोह्रस्वादचि ङमुण्नित्यम्' इति विहितः ङुट् 'सन् अच्युतः' इत्यत्र अकारस्य आद्यवयवः सन् भवति। सन्नच्युतः। 'ङ्णोः कुक्टुक्शरि' इति विहितः कुक् 'प्राङ् षष्ठः' इत्यत्र ङकारस्य अन्तावयवः भवति। प्राङ्क्षष्ठः। 'चरेष्टः' 'गापोष्टक्' इत्यादिषु नायं नियमः प्रवर्तते। प्रत्ययः ३-१-१ परश्च ३-१-२ इति प्रत्ययाः परा भवन्ति पुरस्तादपवादन्यायात्। 'पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायः। पूर्वपठिताः अपवादाः स्वानन्तरपठितानेव विधीन् बाधन्ते ततोऽप्युत्तरान् व्यवहितान् न बाधन्ते इति तदर्थः। सर्वत्र उत्सर्गसूत्रानन्तरम् अपवाद सूत्रपाठः। क्वचित्तु पूर्वमपवादसूत्रं पश्चात् उत्सर्गसूत्रं पठ्यते सूत्रकारेण पाणिनिना, स्वानन्तरसूत्रमात्रबाधकत्वमभिप्रेत्य। 'आद्यन्तौ टकितौ' इत्यपवादसूत्रं पूर्वं पठितम्। ततः 'प्रत्ययः, परश्चेति'। तस्मात् 'आद्यन्तौटकिताविति' सूत्रं स्वानन्तर 'षष्ठीस्थानेयोगा' इत्यस्यैव अपवादः न तु तदुत्तरस्य 'प्रत्ययः परश्चे'त्यस्य।

## ३१. मिदचोऽन्त्यात्परः १-१-४७

अच इति निर्धारणे षष्ठी। जातौ चेदमेकवचनम्। तेन अचां मध्ये इत्यर्थः सिध्यति। 'आद्यन्तौटकितौ' विति सूत्रात् एकदेशस्यापि अन्तशब्दस्यानुवृत्तिः तन्मात्रे स्वरितत्वप्रतिज्ञानात्। समानजातीयस्यैव निर्धारणं भवतीति अन्त्योपि अजेव गृह्यते। तथा च विहितः मित् अचां मध्ये योऽन्त्यः अच् तस्मात् परः तस्यैव अन्तावयवः स्यात्। 'षष्ठीस्थाने' इत्यस्य 'प्रत्ययः, परश्च' इत्यस्य चापवादोऽयम्।

## ३२. परः सन्निकर्षः संहिता १-४-१०९

परशब्दः अतिशये वर्तते। सन्निकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षः वर्णानामर्धमात्राकालव्यवधानं सः संहितासंज्ञः स्यात्।

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे, वाक्ये तु सा विवक्षामपेक्ष्यते॥

### ३३. संहितायाम् ६–१–७२

अधिकारसूत्रमिदम् । अनुदात्तं पदमेकवर्जम् ६–१–१५८ इति सूत्रं यावत् अधिक्रियते । संहितायामिति विषयसप्तमी । कार्यिनिमित्तयोः संहिताविषये एव कार्यं भवति नान्यथा ।

---

## अथ सन्धिप्रकरणम्

# अथ अच्सन्धिः

### ३४. इको यणचि ६–१–७७

इक् यण् अचीति च प्रत्याहारः । संहितायामित्यस्याधिकारः । अचीति सप्तमीनिर्देशात् 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभषया अजव्यवहित पूर्वस्येत्यर्थः सिध्यति । इक इति अनिर्धारितसम्बन्धविशेषायाः षष्ठ्याः श्रवणात् 'षष्ठीस्थाने योगेति' परिभाषया इकः स्थाने इत्यर्थलाभः । 'स्थानेन्तरतमः' इति परिभाषाया उपस्थितिः भवति । (तथा च अजव्यवहितपूर्वस्य इक् वर्णस्य स्थाने (प्रसङ्गे) स्थानतः सदृशतमः यण् वर्णः आदेशः स्यात् संहितायां विवक्षितायामिति सूत्रार्थः ।) अयमर्थः–लाघवात् इकः यण् स्यादचिपरे इति निर्दिश्यते । सप्तमीनिर्देशस्थले सर्वत्र एवमेव । सवर्णे अचि दीर्घविधानसामर्थ्यात् असवर्णे अचि यणादेशो विज्ञायते । आन्तरतम्यात् इकारस्य यः, उकारस्य वः, ऋकारस्य रेफः, ऌकारस्य लः भवति ।

नहि+अस्ति=नह्यस्ति । यदि+आगच्छति यद्यागच्छति । नदी+औ=नद्यौ । मधु+अरिः=मध्वरिः । वधू+आगमनम्=वध्वागमनम् । पितृ+अर्थे=पित्रर्थे । ऌ+आकृतिः=लाकृतिः ।

अचि किम् ? दधि+करोति ।

### ३५. यथासंख्यमनुदेशः समानाम् १–३–१०

यत्रानेके उद्देशिनो विधयः तत्रानियमेन सम्बन्धे प्राप्ते नियमार्थमिदमारभ्यते । संख्यामनतिक्रम्य–यथासंख्यम् । संख्याशब्देन अत्र क्रमो लक्ष्यते ।

अनुदेशः—विधानं, समानाम् समसंख्यानाम्। संख्याद्वारकं साम्यं गृह्यते। समानामिति सम्बन्ध षष्ठी। समसंख्याकसम्बन्धीविधिः यथाक्रमं स्यात्। स्थान्या देशनिमित्तानां समसंख्याकानां क्रमेण प्रथमस्य प्रथमः, द्वितीयस्य द्वितीयः, इत्येवं क्रमेण अन्वयः प्रतिपत्तव्यः इति फलितार्थः।

## ३६. एचोयवायावः ६–१–७८

'इकोयणची'त्यतः अचीत्यनुवर्तते। अय् च अव् च आय् च आव् च अयवायावः। यथासंख्यपरिभाषया क्रमादित्यर्थलाभः। एचः स्थाने अचिपरे क्रमात् अय्, अव्, आय्, आव् आदेशाः स्युः। आदेशान्त्ययोः यकारवकारयोः 'हलन्त्य' मिति इत्संज्ञा, 'तस्यलोप' इतिलोपश्चनभवतः, उच्चारणसामर्थ्यात्। हरये, कवयेहि, नायकः, श्रियायुद्यतः, गौर्यायिदम्, विष्णवे, गुरावगच्छति, पावकः, वागर्थाविव, गुरावुत्कः।

## ३७. सुप्तिङन्तं पदम् १–४–१४

सुप् च तिङ् च सुप्तिङौ। तौ अन्ते यस्य तत् सुप्तिङन्तम्। अन्तशब्दस्य प्रत्येकं सम्बन्धः। शब्दशास्त्रप्रस्तावात् शब्दस्वरूपमिति लभ्यते। 'सुप्' इति—स्वौजस् इति सु इत्यारभ्य सुपः पकारेण, 'तिङ्' इति—तिप् तस् इति ति इत्यारभ्य महिङो ङकारेण प्रत्याहारः। सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं स्यात्। येनविधिस्तदन्तस्येति तदन्तग्रहणे सिद्धे पुनरिह सूत्रे अन्तग्रहणम् अन्यत्र 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनार्थम्।

## ३८. लोपः शाकल्यस्य ८–३–१९

'भो भगो अघो अपूर्वस्य योऽशि' इति सूत्रात् अपूर्वस्येति, अशीति, 'व्योर्लघुप्रयत्नतरः' इति सूत्रात् व्योरिति चानुवर्तते। वकारयकारयोः इत्यर्थः। अपूर्वस्येति व्योरित्यस्य विशेषणम्। अः पूर्वः यस्मात् सः अपूर्वः। प्रत्येकान्वयाभिप्रायमेकवचनम्। अपूर्वस्य वस्य, यस्यचेत्यर्थः। पदस्येत्यधिक्रियते। अवर्णपूर्वाभ्यां यकारवकाराभ्यां विशेष्यते। विशेषणत्वात् तदन्तलाभः। 'अलोन्त्यस्ये'त्यनेन अन्त्यस्येति लभ्यते। ततश्च वकारयकारान्तपदयोरन्त्यस्य,

अवर्णपूर्वस्य च वकारस्य यकारस्य च लोपः स्यादशि परे शाकल्यस्य मते। इतरेषां मते लोपो नास्ति। तेन रूपद्वयम्। हर एहि—हरयेहि। विष्ण इह—विष्णविह। श्रिया उद्यतः—श्रियायुद्यतः। असा आदित्यः असावादित्यः। अवर्णपूर्वस्येति किम्? दध्यत्र; मध्वरिः। पदान्तस्येति किम्? हरये, विष्णवे। लोपपक्षे लोपानन्तरं गुणः कुतो नेति चेत्—

## ३९. पूर्वत्रासिद्धम् ८-२-१

अधिकारोयमा अध्यायपरिसमाप्तेः। अष्टमेऽध्याये द्वितीयपादे प्रथमं सूत्रमिदम्। अतः 'पूर्वत्र' इत्यनेन अनुक्रान्ता सपादसप्ताध्यायी गृह्यते। सपादसप्ताध्यायीं प्रति त्रिपादी असिद्धा भवति। त्रिपाद्यामपि उत्तरोत्तरं सूत्रं पूर्वत्र पूर्वत्र असिद्धं भवति। असिद्धमित्यस्य असिद्धवत् भवतीत्यर्थः, सिद्धकार्यं न करोति इति यावत्। वचनादतिदेशः आश्रीयते। असिद्धवचनम् आदेशनिमित्तस्य कार्यस्य प्रतिषेधार्थम्। स्थानिनिमित्तस्य कार्यस्य उपजननार्थं च। यथा—हर इह, विष्ण इह इत्यत्र यलोपवलोपयोरसिद्धत्वात् 'आद्गुणः' इति, असा आदित्य इत्यत्र वलोपस्यासिद्धत्वात् 'अकः सवर्णेदीर्घः' इति च न भवति। 'अमुष्मै' इत्यत्र उत्वस्यासिद्धत्वात् 'स्मै' आदेशः भवति। ननु सपादसप्ताध्यायीं प्रति त्रिपाद्या असिद्धत्वे त्रिपाद्यां षष्ठीनिर्देशेषु, सप्तमीनिर्देशेषु पञ्चमीनिर्देशेषु च 'षष्ठीस्थाने योगा', 'तस्मिन्निति निर्दिष्टेपूर्वस्य', 'तस्मादित्युत्तरस्ये'ति नोपतिष्ठेरन् ततश्च 'संयोगान्तस्यलोपः' इत्यत्र संयोगान्तपदान्त्यस्य स्थाने इति, 'झलो झलि' इत्यत्र झलिपरे इति 'ह्रस्वादङ्गात्' इत्यत्र ह्रस्वान्तादङ्गादुत्तरस्येति चार्थः न सिध्येत् इति चेत्? नैवम्। विधिसूत्रार्थोपकारकाणां परिभाषाणां त्रिपाद्यामपि प्रवृत्त्यङ्गीकारात्। 'विप्रतिषेधेपरंकार्यम्' इति परिभाषायाः त्रिपाद्यां नोपस्थितिः। तस्याः विधिशास्त्रप्रवृत्तिनियामकत्वेऽपि विधिसूत्रार्थोपकारकत्वाभावात्। तेन 'मनोरथः' इति रूपं सिध्यति। अन्यथा 'हशि च' इत्यस्मात् 'रोरी'त्यस्य परत्वेन प्रवृत्तौ 'मनारथः' इति स्यात्।

## ४०. वान्तो यि प्रत्यये ६-१-७९

व् अन्तः यस्य सः वान्तः—वकारान्तः। अव् आव् च आदेशः विवक्षितः। 'यि' इति सप्तम्यन्तं 'प्रत्यये' इत्यस्य विशेषणम्। वर्णग्रहणेन 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया 'यकारादौ प्रत्यये' इत्यर्थलाभः। 'एच' इत्यनुवर्तते। तत्र पूर्वसूत्रे अवावोः ओकारौकारावेव स्थानित्वेन व्यवस्थितौ। अतः अत्र ओकारौकारावेव गृह्येते। (ओकारौकारयोः स्थाने अवावौ स्याताम् यकारादौ प्रत्यये परे।) गव्यम्। 'गोर्विकारः' इत्यर्थे 'गोपयसोर्यत्' इति सूत्रेण गोशब्दस्य यत् प्रत्ययः गो यम् इत्यत्र अनेन ओकारस्य अवादेशः। नाव्यम्। 'नौवयोधर्म'त्यादि सूत्रेण नौशब्दात् तार्यमित्यर्थे यत् प्रत्यये औकारस्य आवादेशः। यीति किम्? गोभ्याम्, नौभ्याम्। प्रत्यये इति किम्? गोयानम्, नौयानम्।

### गोर्यूतावध्वपरिमाणे (वा)

मार्गपरिमाणेऽर्थे गम्ये गोशब्दोकारस्य यूतिशब्देपरे वान्तादेशो भवति। गो+यूतिः=गव्यूतिः। गव्यूतिमात्रमध्वानं गतः।

## ४१. धातोस्तन्निमित्तस्यैव ६-१-८०

'एचः' इति, 'वान्तोयि प्रत्यये' इति चानुवर्तते। तन्निमितस्य—सः निमित्तं यस्य तस्य। तच्छब्देन यकारादि प्रत्ययः प्रत्यवमृश्यते। पूर्वेणैव सिध्दे नियमार्थं सूत्रमिदम्। (यकारादौ प्रत्यये परे धातोः ओकारौकारयोः वान्तादेशश्चेत् यकारादिप्रत्ययनिमित्तयोरेव) लव्यम्। लू इत्यस्मात् 'अचो यत्' इति यत् प्रत्ययः तन्निमित्तः 'सार्वधातुकार्धधातुकयोः' इति ऊकारस्य गुणे ओकारे लो य इत्यत्र ओकारस्य अवादेशः। अवश्यलाव्यम्। लू इत्यस्मात् 'ओरावश्यके' इति ण्यत्। तन्निमित्तः 'अचोञ्णिति' इति वृद्धिः औकारः। अवश्य लौ य इत्यत्र औकारस्य आवादेशः। धातोरिति किम्। असति हि धातुग्रहणे प्रातिपदिकस्यापि नियमः स्यात्। तथा सति बाभ्रव्यः इत्यत्रैव स्यात् गव्यम् नाव्यम् इत्यत्र न स्यात् एचः तन्निमित्तत्वाभावात्। तन्निमित्तस्येति

किम्? अतन्निमित्तस्य मा भूत्। उपोयते, औयत। वेञ् धातोः लटि, लङि च क्रमात् रूपद्वयम्। अत्रायमोकारः औकारश्च यकारादिप्रत्ययनिमित्तो न भवति। "सिद्धे सति आरभ्यमाणो विधिः नियमार्थः" इति विनाप्येवकारं नियमार्थे सिद्धे पुनरेवकारः, 'प्रत्ययनिमित्तकस्य चेदेचो वान्तादेशः तर्हि धातोरेवैचः' इति विपरीतनियमव्यावृत्त्यर्थः। विपरीतनियमे बभ्रु शब्दात् यञ् प्रत्यये तन्निमित्ते उकारस्य गुणे बभ्रोय इति स्थिते वान्तदेशो न स्यात् धातोरेचोऽभावात्।

## ४२. क्षय्यजय्यौ शक्यार्थे ६–१–८२

क्षि-जि इत्येतयोः एकारस्य यकारादौ प्रत्यये परे शक्यार्थे गम्यमाने अयादेशः निपात्यते। क्षेतुं शक्यः क्षय्यः। जेतुं शक्यः जय्यः। शक्यार्थे इति किम्? क्षेतुं योग्यं क्षेयं पापम्। जेतुं योग्यं जेयं मनः। अत्र अर्हार्थे यत् प्रत्ययः इति शक्यार्थो न गम्यते।

## ४३. क्रय्यस्तदर्थे ६–१–८२

तस्मै इदं तदर्थं तस्मिन्। तच्छब्देन प्रकृतिभूत क्री धात्वर्थः द्रव्य-विनिमयरूपः विवक्षितः। क्रयार्थं यत्, तस्मिन्नभिधेये क्री धातोः यकारादौ प्रत्यये परे अयादेशो निपात्यते। क्रय्यः कम्बलः। क्रेतारः क्रीणीयुः इति बुद्ध्या आपणे प्रसारितः। तदर्थे इति किम्? क्रयणार्हं क्रेयं पुस्तकम्।

## ४४. एकः पूर्वपरयोः ६–१–८४

अधिकारोऽयम्। 'ख्यत्यात्परस्य' इत्येतस्मात् प्राक् इत उत्तरं यदुच्यते तत्र पूर्वस्य परस्य द्वयोरपि स्थाने एकादेशो भवतीति वेदितव्यम्। यथा–वक्ष्यमाणः 'आद्गुणः' इति गुणः अचि पूर्वस्य अवर्णस्य अवर्णाच्च परस्य अचः स्थाने एकः भवति। पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम्। एकग्रहणं पृथगादेशनिवृत्त्यर्थम्। अन्यथा स्थानिभेदात् द्वावादेशौ स्याताम्।

## ४५. अदेङ् गुणः १–१–२

अत् इति तपरनिर्देशः। ह्रस्वः अकारः, दीर्घः एकारः ओकारश्च प्रत्येकं गुणसंज्ञकः स्यात्। गुणप्रदेशाः आद्गुणः इत्येवमादयः।

## ४६. आद्गुणः ६-१-८७

आदिति पञ्चमी । इको यणचीत्यतः अचीत्यनुवर्तते । एकः पूर्वपर-योरित्यधिकृतम् । 'तस्मादित्युत्तरस्य' इति परिभाषया आदित्येषा पञ्चमी अचीति सप्तम्याः षष्ठीत्वं प्रकल्पयति । तथा तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया अचीत्येषा सप्तमी आदिति पञ्चम्याः षष्ठीत्वं प्रकल्पयति । पूर्वपरग्रहणात् तस्मादि-त्युत्तरस्य तस्मिन्निति निर्दिष्टे पूर्वस्येति द्वयोरपि परिभाषयोरिह सम्बन्धः । अवर्णा-त्परो योऽच्, अचि च पूर्वो यो वर्णः तयोः पूर्वपरयो अवर्णाचोः स्थाने एकोगुणः आदेशः स्यात् । वदेति, खट्वेन्द्रः, गणेशः, रमेशः, कृपोदकम् । स्थान-साम्यात् अकारेकारयोः एकारः, अकारेकारयोः, ओकारः ।

## ४७. उरण्रपरः १-१-५१

उः इति ऋशब्दस्य षष्ठ्येकवचनम् । ऋलवर्णयोः सावर्ण्यात् ऋकार लकारयोः ग्रहणम् । रः परः यस्य-सः रपरः । र-इति प्रत्याहारः रलयोः संज्ञा । उः स्थाने प्रसज्यमान एवाण् रपरः स्यात् । तत्र आन्तरतम्यात् ऋकारस्य स्थाने जायमानोऽण् रेफशिरस्कः लकारस्य स्थाने जायमानोऽण् लकारशिरस्कश्च भवति । वनर्श्यः, राजर्षिः, तवल्कारः । अकार ऋकारयोः, अकारलकारयोः द्वयोः स्थाने जायमानोपि ऋकारलकारस्थानिकत्वव्यपदेशं भजत्येव । स्थानसाम्यात् अकार ऋकारयोः स्थाने अर्, अकारलकारयोः स्थाने अल् ।

## ४८. वृद्धिरादैच् १-१-१

आदिति तपरनिर्देशः । आकारःदीर्घः, ऐकारः औकारश्च प्रत्येकं वृद्धिसंज्ञकाः स्युः । वृद्धिप्रदेशाः वृद्धिरेचीत्येवमादयः ।

## ४९. वृद्धिरेचि ६-१-८८

आत् इत्यनुवर्तते । एकः पूर्वपरयोरित्यधिक्रीयते । पूर्वसूत्रे इव अत्रापि तस्मादित्युत्तरस्येति अचीति सप्तम्याः षष्ठीत्वप्रकल्पनं, तस्मिन्निति निर्दिष्टेपूर्वस्येति आदिति पञ्चम्याः षष्ठीत्वप्रकल्पनं भवति । अवर्णात् परः यः एच् वर्णः एचः

पूर्वः यो अवर्णः तयोः स्थाने वृद्धिरेकादेशो भवति । आद्गुणस्यापवादः । तवैः गङ्गैधते, ममैश्वर्यम् , अद्यौघः, शुद्धौदनः, गुणौघैः ।

### ५०. एत्येधत्यूठ्सु ६-१-८९

वृद्धिरेचीति आदिति चानुवर्तते । एतिश्च एधतिश्च ऊठ् च एत्येधत्यूठ तेषु । एचीति एत्येधत्योरेव विशेषणम् न तु ऊठः, एजादित्वासम्भवात् यस्मिन्विधिस्तदादावल्ग्रहणे इति एजादिरित्यर्थः सिध्यति । एति, एधति इति श्तिपानिर्देशात् इण् धातुः एधधातुश्च गृह्यते । अवर्णात् एजादौ इण् धातौ, एध धातौ, ऊठि च परे पूर्वपरयोः वर्णयोः स्थाने वृद्धिरेकादेशो भवति । उपैति, उपैधि, प्रैधते, प्रष्ठौहः, स्नुपैति । एचीति किम् ? उपेतः, प्रेदिधत् ? अटिपरे आद्गुणः इति गुणः प्राप्तः । एत्येधत्योः एङिपररूपम् इति सूत्रेण पररूपं प्राप्तम् । तयोः अपवादः अनेन वृद्धिर्विधीयते ।

### अक्षादूहिन्याम् (वा)

अक्षशब्दात् ऊहिनीशब्देपरे पूर्वपरयोरचोः वृद्धिरेकादेशः स्यात् । गुणापवादः । अक्ष + ऊहिनी = अक्षौहिणी ।

### स्वादेरेरिणोः (वा)

स्वशब्दात् , ईरशब्दे, ईरिन् शब्दे च परे पूर्वपरयोरचोवृद्धिरेकादेशः स्यात् । गुणापवादः । स्व + ईरः = स्वैरः, स्व + ईरी = स्वैरी ।

### प्रादूहोढोढ्येषैष्येषु (वा)

प्र इत्युपसर्गात् ऊह, ऊढ, ऊढि, एष, एष्य एतेषु परेषु पूर्वपरयोरचोः वृद्धिरेकादेशः स्यात् । गुण पररूपयोरपवादः । प्रौहः, प्रौढः, प्रौढिः अत्र गुणः प्राप्तः । प्र + ऊढवान् इत्यत्र तु ऊढशब्देपरेपि वृद्धिर्न भवति ।

### अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् (प)

अर्थवतः शब्दस्य ग्रहणसम्भवे अनर्थकस्य ग्रहणं न । ऊढवदेकदेशस्य ऊढेत्येकदेशस्यानर्थकत्वात् । प्र + एषः = प्रैषः, प्र + एष्यः = प्रैष्यः । इषधातोः

घञ् प्रत्यये निष्पन्नं रूपम् एषः इति, ण्यत् प्रत्यये निष्पन्नं एष्य इति च रूपम्, न तु एतच्छब्दात् निष्पन्नम् अत्र एङिपररूपं प्राप्तम् ।

### ऋते च तृतीयासमासे (वा)

तृतीयासमासे अकारान्तात् ऋतशब्दे परे पूर्वपरयोरचोः वृद्धिः स्यात् । सुखार्तः, दुःखार्तः । वृद्धिः आकारः रपरः भवति । तृतीयेति किम् ? सुखेन ऋतः इति तृतीयान्तेन समासे (विवक्षिते) यथा स्यात्, परमश्चासौ ऋतश्चेति कर्मधारये (विवक्षिते) मा भूत् । तत्र गुण एव, परमर्तः । समासे इति किम् ? वाक्ये मा भूत् । सुखेन + ऋतः = सुखेनर्तः ।

### प्रवत्सतरकम्बलवसनदशार्णानामृणे (वा)

प्र—वत्सतर—कम्बल—वसन—दश—ऋण एतेषां ऋणशब्दे परे पूर्वपरयोरचोः वृद्धिरेकादेशः स्यात् । प्रार्णम्, वत्सतरार्णम्, कम्बलार्णम्, वसनार्णम्, दशार्णम्, ऋणार्णम् ।

### ५१. उपसर्गाः क्रियायोगे १–४–५९

### ५२. गतिश्च १–४–६०

प्रादयः इति पूर्वसूत्रमनुवर्तते । क्रियया योगः तस्मिन् । अन्वय इति यावत् । प्रादयः क्रियान्वये सति उपसर्गसंज्ञाः गतिसंज्ञाश्च स्युः । यथा— प्रणयति, परिणयति । प्रशब्दस्य परिशब्दस्य च उपसर्गत्वात् 'उपसर्गादसमासेपि' इति सूत्रेण नयतेर्नकारस्य णत्वं सिध्यति । प्रकृत्य, प्रहृत्य । प्रशब्दस्य गतित्वात् कुगतिप्रादयः इति सूत्रेण विहितः समासः, तेन च 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् सिध्यति । क्रियायोगे इति किम् ? प्रगतो नायकः, 'अस्माद्देशात्' प्रनायको देशः । अत्र नयनक्रियया प्रशब्दस्य योगो नास्तीति उपसर्गसंज्ञा नयतिं प्रति नास्ति । अतः णत्वं न भवति । यद्यपि गमिक्रियया योगोऽस्त्येव तथापि क्रियायोगग्रहणसामर्थ्यात् 'यत्क्रियायुक्ताः प्रादयः तं प्रत्येव गत्युपसर्गसंज्ञा भवति' इत्यर्थाश्रयणात् उपात्तया नयनक्रियया प्रशब्दस्य योगाभावेन नयतिं प्रति उपसर्गसंज्ञा नास्तीति न णत्वप्रसङ्गः । प्र—परा—अप—सम्—

अनु–अव–निस्–निर्–दुस्–दुर्–वि–आङ्–नि–अधि–अपि–अति–सु–उत्–अभि-प्रति–परि–उप एते प्रादयः ।

### ५३. भूवादयो धातवः १–३–१

भू इत्येवमादयः दशगणीपरिपठिताः क्रियावचनाः शब्दाः धातुसंज्ञाः स्युः ? भू–भवति, एध–एधते। धातुसंज्ञत्वात् 'धातोरिति' विहितः 'वर्तमाने लट्' सिध्यति । क्रियावचनाः इति किम् ? दशगणीपठितत्वेन 'या' इत्यस्य धातुत्वे 'याः पश्यसि' इत्यत्र 'आतोधातोरिति' विहितः आलोपः स्यात् । दशगणींपठिता इति किम् । वचनक्रियावचनस्य हिरुक् इत्यस्य धतुत्वं मा भूत् ।

### ५४. उपसर्गादृति धातौ ६–१–९१

एकः पूर्वपरयोरित्यधिकृतम् । 'वृद्धिरेचि' त्यतो वृद्धिरिति 'आद्गुण' इत्यतः आदिति चानुवर्तते । आद् इति उपसर्गविशेषणम् । तेन तदन्तविधिः । ऋतीति धातोर्विशेषणम् । 'यस्मिन्विधिः इति' ऋकारादिरित्यर्थः सिध्यति । तपरकरणात् ह्रस्वस्य ऋकारस्यैव ग्रहणम् । अकारान्तादुपसर्गात् ह्रस्वं ऋकारादौ धातौ परे पूर्वपरयोरचोः स्थाने वृद्धिरेकादेशः स्यात् । गुणापवादः । प्रार्छति, उपार्छति । उपसर्गादिति किम् । मालर्च्छति । ऋतीति किम् ? उपेतः । तपरकरणं किम् ? उपर्कारीयति । ननु अत्र धातुग्रहणं व्यर्थम् । सम्बन्धिशब्दाः नियतं प्रतियोगिनम् उपस्थापयन्ति । उपसर्गश्चायं धात्वपेक्षत्वात् सम्बन्धिशब्दः । तत्र उपसर्गग्रहणादेव धातुग्रहणं सिध्यतीति चेत् ? सत्यम् । उपसर्गग्रहणादेव सिद्धे पुनः धातुग्रहणं योग-विभागेन पुनर्वृद्धिविधानार्थम् । उपसर्गात् ऋति वृद्धिर्भवति । ततो धाताविति, इहोपसर्गादिति वर्तते । द्वितीयं सूत्रं बाधकबाधनार्थं विज्ञायते । तेन प्र–ऋच्छति इत्यत्र ऋत्यकः इति शाकल्यमते परत्वात् विहितेऽपि प्रकृतिभावः न भवति ।

### ५५. एङि पररूपम् ६–१–९४

आदिति, उपसर्गात् धातौ इति चानुवर्तते । एङीति धातौ इत्यस्य

विशेषणम् । यस्मिन्विधिरिति तदादिग्रहणम् । अवर्णान्तात् उपसर्गात् एङादौ धातौ परे पूर्वपरयोरचोः पररूपमेकादेशः स्यात् । वृद्धिरेचीत्यस्यापवादः । प्रजते, उपोषति । प्रैति, प्रैधते इत्यत्र तु इदं सूत्रं न प्रवर्तते । 'एत्येधत्यूठ्सु' इति अपवादेन बाधितत्वात् । तेन तत्र वृद्धिरेव ।

### शकन्ध्वादिषु पररूपं वाच्यम् (वा)

शकन्ध्वादीगणपठितानां शब्दरूपाणां सिद्ध्यर्थं पूर्वपरयोः पररूपं वक्तव्यम् । शकन्धुः, कर्कन्धुः, कुलटा । सवर्णदीर्घापवादः ।

### सीमन्तः केशवेशे (वा)

केशानां सन्निवेशविशेषः केशवेशः । तस्मिन् गम्ये पररूपेण सीमन्त इति रूपम् । अन्यत्र सीमान्त इति रूपम् ।

### सारङ्गः पशुपक्षिणोः (वा)

पशुपक्षिणोरर्थयोर्गम्यमानयोः सारङ्ग इति रूपम् । अन्यत्र सारङ्गः ।

### एवे चानियोगे (वा)

नियोगः—अवश्यंभावः, नियमः । न नियोगः अनियोगः तस्मिन् । अकारात् अनियोगार्थके एव शब्दे परे पूर्वपरयोः पररूपं स्यात् । क्वेव भोक्ष्यसे । नियमार्थे तु वृद्धिरेव ।

### ओत्वोष्ठयोः समासे वा (वा)

अवर्णात् ओतुशब्दे, ओष्ठशब्दे च परे समासे पूर्वपरयोरचोः पररूपं वा स्यात् । स्थूलोतुः, पक्षे वृद्धिः, स्थूलौतुः । बिम्बोष्ठः, पक्षे वृद्धिः बिम्बौष्ठः । समासे इति किम् । ममौष्ठः ।

### ५६. अन्तादिवच्च ६-१-८५

अन्तश्च आदिश्च अन्तादी । अन्तादिभ्यां तुल्यम् अन्तादिवत् । वदित्यस्य प्रत्येकमन्वये अन्तवत् आदिवत् इत्यर्थः लभ्यते । एकः पूर्वपरयो-रित्यनुवर्तते । यथासंख्यपरिभाषया पूर्वस्य अन्तवत् परस्य आदिवदिति अन्वयः । योऽयमेकादेशः विधीयते सः पूर्वस्यान्तवत् , परस्य आदिवत् स्यात् । एकादेशस्य

द्वौ वर्णौ स्थानिनौ पूर्वः, परश्च । तयोश्चवर्णयोः प्रत्येकमेकत्वात् अखण्डत्वाच्च तस्यान्तः, आदिर्वा न भवति मुख्यः । अन्तादिशब्दौ अवयवविशेषवाचिनौ । अतः पूर्वपरशब्दाभ्याम् अन्तावयवघटितपूर्वसमुदायः, आद्यवयवघटितपरसमुदायश्च विवक्षितौ । तथा च एकादेशस्य पूर्वः यः स्थानी तद्घटितः यः समुदायः तस्यान्तवत्, परः यः स्थानी तद्घटितः यः समुदायः तस्यादिवत् एकादेशः भवति इत्यर्थः ग्राह्यः । यथा पूर्वसमुदायस्य प्रातिपदिकत्वे परस्य समुदायस्य प्रत्ययत्वे तदन्त तदादिवर्णयोः स्थाने जायमानः एकादेशः प्रातिपदिकान्तवत् गृह्यते अथवा प्रत्ययादिवत् गृह्यते । ब्रह्मबन्धूरित्यत्र ब्रह्मबन्धु इति प्रातिपदिकम्, ऊङिति प्रत्ययः । उकारस्य ऊकारस्य चैकादेशे ऊकारे प्रातिपदिकस्यान्तवद्भावः अतिदिश्यते । तेन प्रातिपदिकात् विहितः सुप्रत्ययः ब्रह्मबन्धूशब्दात् भवति । रामौ इत्यत्र राम इति प्रातिपदिकम् । औ इति सुप् । अकारौकारयोः स्थाने एकादेशः औकारः । औकारे सुपः आदित्वमतिदिश्यते । तेन रामौ इत्यस्य सुबन्तत्वात् पदत्वसिद्धिः ।

## ताद्रूप्यानतिदेशः

अन्तादिवर्णमात्रवृत्तिधर्माणाम् अत्वह्रस्वत्वादीनामतिदेशो नेष्यते, किन्तु अल्समुदायधर्माणां प्रातिपदिकत्व--धातुत्व--सुबन्तत्व--प्रत्ययत्वादीनामेव । तेन खट्वाभिरित्यत्र खट्व + आ इति स्थिते सवर्णदीर्घेण अकाराकारयोः एकादेशे दीर्घे अन्तवद्भावेन ह्रस्वाकारान्तत्वमाश्रित्य ततः परस्य भिसः 'अतोभिसऐस्' इति ऐसादेशो न भवति । अकाररूपवर्णमाश्रित्य भिसः ऐसादेशे कर्तव्ये अन्तादिवद्भावाभावात् । अयजे इन्द्रमित्यत्र अयज इ इति स्थिते आद्गुणः इति गुणेन अकारेकारयोः एकादेशे एकारे परादिवद्भावेन इकारत्वमाश्रित्य तस्य इन्द्रमिति इकारे परे सवर्णदीर्घः न भवति । इकाररूपवर्णमाश्रित्य गुणे कार्ये अन्तादिवद्भावस्यानाश्रयणात् ।

## उभयत आश्रयणे नान्तादिवत्

यत्र च अन्तश्च आदिश्च उभयं युगपदाश्रीयते तत्र अन्तादिवद्भावो नास्ति ।

3

अभि+इयात् इत्यत्र उपसर्गेकारस्य धातुसम्बन्धीकारस्य च सवर्णदीर्घेण एकादेशे ईकारे जाते अभीत्यस्य पूर्वान्तवत्त्वेन उपसर्गत्वम्, ईयात् इत्यस्य परादिवत्त्वेन इण्त्वं च युगपदाश्रित्य 'एतेर्लिङि' इति सूत्रेण उपसर्गात् परस्य इणः विहितः ह्रस्वो न भवति। अन्यथा अभियात् इति रूपं स्यात्।

## ५७. ओमाङोश्च ६-१-९५

आदिति अनुवर्तते। अवर्णात् ओमि आङि च परे पूर्वपरयोरेचोः स्थाने पररूपमेकादेशः स्यात्। ओमि–रामायोंनमः, कोमित्याह। आङि–आ+इहि इत्यत्र अकारेकारयोः स्थाने गुणे एकादेशे एकारे जाते अन्तादिवच्चेति सूत्रेण पूर्वान्तवद्भावेन ए इत्यस्य आङ्त्वेन ग्रहणात् शिव+एहि इत्यत्र अनेन सूत्रेण पररूपे शिवेहि इति रूपं सिध्यति। एवं अव+एहि=अवेहि। अवेहि इति रूपं कथं भवितुमर्हति। अवर्णान्तस्योपसर्गस्य एजादौ इण् धातौ परे पररूपापवादेन एत्येधत्यूठ्सु इति वृद्धेरौचित्यात् इति चेत्? अत्रोच्यते–एत्येधत्यूठ्सु इति वृद्धिः एङि पररूपमिति सूत्रेण प्राप्तं पररूपमेव बाधते न तु ओमाङोश्च इति सूत्रप्राप्तम्। 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इति अपवादन्यायः। नाप्राप्ते–अवश्यप्राप्ते इत्यर्थः। अवश्यप्राप्ते आरभ्यमाणस्य विधेः तद्बाधकत्वम्। एङि पररूपे अवश्यप्राप्ते इयमारभ्यते वृद्धिरिति तद्बाधकत्वं युक्तम्। आङि परे परं, पररूपे प्राप्ते चाप्राप्ते चारभ्यते न अवश्यप्राप्ते। अव+एहि इत्यत्र प्राप्ते। उप+एति इत्यत्र नाप्राप्ते।' तस्मात् वृद्धिः आङि पररूपं न बाधते।

### अथवा

'पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन एत्येधत्यूठ्सु इति सूत्रं स्वानन्तरं एङि पररूपमेव बाधते न तु ततोप्युत्तरम् ओमाङोश्च इति सूत्रमपि। तथा च अवेहि इति रूपं साधु। ननु शिवेत्यकारेण आकारस्य सवर्णदीर्घे शिवा+इहि इत्यत्र ततः परेण इकारेण सह आद्गुणः इति गुणे च शिवेहीति सिद्धमेवेति सूत्रे आङ्ग्रहणं किमर्थमिति चेत्? धातूप-

सर्गयोः कार्यनन्तरङ्गमिति पूर्वम् आद्गुणे शिव+एहि इत्यत्र वृद्धिः स्यात् । अतः आङ्ग्रहणं कर्तव्यम् ।

### ५८. अतोगुणे ६–१–९७

उस्यपदान्तादित्यतः अपदान्तादित्यनुवर्तते । पररूपमिति वर्तते । अत इति तपरनिर्देशात् ह्रस्वाकारस्यैव ग्रहणम् । अपदान्तात् ह्रस्वाकारात् गुणे परतः पूर्वपरयोः स्थाने पररूपमेकादेशः स्यात् । सवर्णदीर्घस्य वृद्धिरेचीति वृद्धेश्चापवादः । अकारे–पचन्ति, यजन्ति । अत्र दीर्घः प्राप्तः न भवति । एकारे-पन्त+ए–पचे, यजे । इह वृद्धिः प्राप्ता न भवति । अत इति किम् ? यान्ति, वान्ति । गुण इति किम् ? अपच+इ=अपचे, अयज+इ=अयजे । अपदान्तादिति किम् ? दण्डाग्रम्, रामेवम्, जलौघः ।

### ५९. झलां जशोन्ते ८–२–३९

पदस्येति अधिकृतम् । अन्तशब्दः अवसानवाची । पदस्य अन्ते–अवसाने विद्यमानानां झल्वर्णानां जश्वर्णाः आदेशास्युः । वागत्र । अलिडत्र । त्रिष्टुबत्र । तद्गाशु ।

### ६०. अकः सवर्णे दीर्घः ६–१–१०१

अकः सवर्णे परे पूर्वपरयोरचोः स्थाने दीर्घः एकादेशः स्यात् । दैत्यारिः, मालात्र, ममास्नम्, शालाचार्यः, नदीति, श्रीशः, भानूदयः, पितॄणाम् । अप इति किम् ? अग्ने+ए=अग्नये । सवर्णे इति किम् ? नहि+अत्र=नह्यत्र ।

### ६१. एङः पदान्तादति ६–१–१०८

अमि पूर्वः इत्यतः पूर्व इत्यनुवर्तते । एकः पूर्वपरयोः इत्यधिकृतम् । अतीति तपरनिर्देशात् ह्रस्वस्य ग्रहणम् । पदान्तादेङः ह्रस्वाकारे परे पूर्वपरयोः स्थाने पूर्वरूपमेकादेशः स्यात् । अयवादेशयोरपवादः । हरेव । विष्णोव । ऋत्वेद्य । गुरोत्र । एङः इति किम् ? दध्यत्र, मध्वत्र । पदान्तादिति किम् ? चयनम्, लवनम् । अतीति किम् ? अग्न इति । तपरकरणं किम् ? गुरवायाहि ।

## ६२. सर्वत्र विभाषा गोः ६-१-१२२

एङः पदान्तादित्यस्य सम्बन्धः । एङः पदान्तादित्यनयोः षष्ठ्यन्ततया विपरिणामः । एङः पदान्तस्येति । प्रकृत्यान्तः इत्यंतः प्रकृत्या इत्यनुवर्तते । सर्वत्र—छन्दसि भाषायां चेत्यर्थः । विभाषा—वेत्यर्थः । गोरिति अवयवषष्ठी । छन्दसि भाषायां च गोशब्दस्य पदान्तस्य एङः अतिपरे वा प्रकृत्या स्यात् । स्वभावेन निर्विकारस्वरूपेणावतिष्ठते । संहिताकार्यं न प्राप्नोति इति यावत् । गो अग्रम् । पक्षे गोऽग्रम् । गो+अश्वेभ्यः=गो अश्वेभ्यः । एङः इति किम् ? चित्रगु+अग्रम्=चित्रग्वग्रम् ।

### एकदेशविकृतमनन्यवत्

एकदेशेन विकृतं शब्दस्वरूपं अन्यवत् न भवति किन्तु तदेव भवति इति वचनेन गुरित्यपि गोशब्दः इति प्राप्तिः । पदान्तस्येति किम् ? गोः । हे चित्रगोग्रम् इत्यत्रापि न भवति ।

### लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्

लाक्षणिकसाक्षादुच्चरितयोः मध्ये शीघ्रोपस्थितिकत्वात् साक्षात् उच्चरितस्यैव, ग्रहणम् । इति नियमेन प्रतिपदोक्तस्यैव एङो ग्रहणम् । प्रकृते ओकारस्य ह्रस्वस्य गुणः इति सूत्रेण गुणप्रवृत्या निष्पन्नतया लाक्षणिकत्वम् ।

## ६३. अवङ् स्फोटायनस्य ६-१-१२३

अतीत्यस्य नेह सम्बन्धः । अचीत्यस्यानुवृत्तिः । गो शब्दस्य पदान्तस्य एङः अचिपरे अवङ् आदेशः स्यात् स्फोटायनस्य मते । गो+अग्रम्=गव अग्रम्, ततः सवर्णदीर्घे गवाग्रम् । पक्षे पूर्वरूपे गोऽग्रम् । गवाजिनम्, गोऽजिनम् । गव+ओदनम्, वृद्धिरेचीति वृद्धौ गवौदनम्, पक्षे अवादेशे गवोदनम् । गो+ऊधः=गव–ऊधः=गवोधः । पक्षे गवूधः । पदान्तस्येति किम् ? गो+इ=गवि । एङ इति किम् ? चित्रगु+अग्रम्=चित्रग्वग्रम् । गो+अक्षि=गवाक्षः, अत्र नित्यमवङ् भवति ।

### ६४. इन्द्रे च ६-१-१२४

गोः अवङ् अचीत्यनुवर्तते। नित्यार्थं पुनरारम्भः। गो शब्दस्य इन्द्रशब्दे परे, नित्यमवङ् आदेशः स्यात्। गो+इन्द्रः=गव+इन्द्रः, गुणे गवेन्द्रः।

### ६५. अचोऽन्त्यादि टि १-१-६४

अच इति निर्धारणे षष्ठी। जातौ एकवचनम्। अन्ते भवः अन्त्यः। अन्त्यः आदिः यस्य तत् अन्त्यादि। निर्धारणस्य सजातीय विषयत्वात् अजिति लभ्यते। अचां मध्ये योऽन्त्यो अच् तदादि शब्दरूपं टिसंज्ञं स्यात्। अग्निचित् अत्र इत् शब्दः टिः। सोमसुत् अत्र उत् शब्दः टिः। देवदत्त—अकारः।

### ६६. अचश्च १-२-२८

परिभाषेयं स्थानिनियमार्था। ऊकालोऽज्ह्रस्वदीर्घप्लुतः इत्यतः ह्रस्व-दीर्घप्लुत इत्यनुवर्तते। ह्रस्वदीर्घप्लुताः स्वसंज्ञया विधीयमानाः अच एव स्थाने वेदितव्याः। अनेन ह्रस्वादिविधायकेषु अच इति षष्ठ्यन्तपदस्योपस्थितिः भवतीति यावत्। स्वसंज्ञया विधाने नियमात् द्यौः, पन्थाः, सः, द्युभ्याम् इत्यादौ दिव औत्, पथिमथ्यृभुक्षामात्, त्यदादीनामः, दिव उत्, इति विहिताः औकारादयः हल एव स्थाने भवन्ति।

### ६७. वाक्यस्य टेः प्लुत उदात्तः ८-२-८२

अधिकारोयम्। वाक्यस्य टेरिति, प्लुत इति, उदात्त इति च त्रयम् आपाद परिसमाप्तेः अधिकृतं वेदितव्यम्। उत्तरसूत्रेषु पदस्येत्यधिकारात् वाक्यस्येत्यभावे पदस्य टेरित्युक्ते वाक्ये यावन्ति पदानि तेषां सर्वेषामेव टेः प्लुतः प्रसज्येत। वाक्यस्येत्युक्तौ तु वाक्यस्य टिरन्त्यस्यैव पदस्य सम्भवतीति न दोषः। टिग्रहणाभावे प्लुतश्रुत्या अचश्चेति परिभाषया अच इत्युपस्थितौ तस्य वाक्य विशेषणत्वे तदन्तविधौ अजन्तस्य वाक्यस्येत्यर्थे सति अलोन्त्यपरिभाषया वाक्यान्त्यस्याचः प्लुत इति पर्यवसानात् हलन्तवाक्येषु अग्निचि ३ त् इत्यादौ प्लुतो न स्यात्। टिग्रहणे कृते तु तत्सामर्थ्यात् टिना अचो विशेषणात् टेरवयवस्याचः प्लुतः इत्यर्थलाभात् न दोषः।

## ६८. दूराद्धूते च ८–२–८४

हूतम्--आह्वानम्, हूतशब्देन सम्बोधनं विवक्षितम्। दूरादित्युच्यते। यद्यपि दूरं चानवस्थितम्, यदेव कञ्चित्प्रति दूरं तदेवापरं प्रति अन्तिकं भवति। तथापि यत्र प्रदेशे स्थितस्य स्वाभाविकप्रयत्नोच्चारितं शब्दं बोध्यमानो न श्रुणोति किन्तु अधिकं प्रयत्नमपेक्षते तद्दूरम्। वाक्यस्य टेरित्यधिकृतम्। दूरात् सम्बोधने यद्वाक्यं वर्तते तस्य टेः प्लुतः स्यात्। सक्तून् पिब देवदत्त ३। पलायस्व माणवक ३। आगच्छ भो माणव यज्ञदत्त ३। हूतमित्यनेन सम्बोधनस्य विवक्षितत्वात् सक्तून् पिब देवदत्तेति वाक्ये आह्वानस्य अभावेपि प्लुतः सिध्यति। दूरादिति किम्? आगच्छ भो माणवक। सन्निकर्षे प्रयुक्तत्वात् इह प्लुतो न। वाक्यान्ते सम्बोधन शब्दप्रयोगे एव वाक्यस्य टेः प्लुतः इष्यते। तेनेह न, देवदत्त आगच्छ।

## ६९. ईदूदेद्द्विवचनं प्रगृह्यम् १–१–२१

ईच्च ऊच्च एच्च इदूदेत् इति समाहारद्वन्द्वः। तपरकरणमसन्देहार्थम्। द्विवचनं विशेष्यम्। ईदूदेदिति विशेषणम्। तदन्तविधिः द्विवचनमित्यस्य प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया द्विवचनान्तमिति अर्थो न, 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति निषेधात्। ईत् ऊत् एत् इत्येवमन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरी एतौ। अग्नी इति। विष्णू इमौ। वायू इति। गङ्गे अमू। पचेते इमौ। अत्र सर्वत्रापि प्रगृह्यसंज्ञया वक्ष्यमाणः प्रकृतिभावः भवति? ईदूदेदिति किम्? वृक्षौ अत्र--वृक्षावत्र। द्विवचनमिति किम्? कुमारी+अत्र=कुमार्यत्र। मणीव, दम्पतीव इत्यादौ प्रगृह्यसंज्ञायां प्रकृतिभावस्य न्याय्यत्वात् कथं सवर्णदीर्घ इति न शङ्कनीयं, तत्र इवार्थस्य व शब्दस्यैव प्रयोगात्।

## ७०. अदसो मात् १–१–१२

ईदूत् इत्यनुवर्तते। अदश्शब्दसम्बन्धिनो मकारात्परस्य एकारस्य असम्भवात् एदित्यस्य सम्बन्धो नास्ति। प्रगृह्यमिति च। द्विवचनमित्यस्य

नेह सम्बन्धः । अदस इत्यवयवषष्ठी । मादिति दिग्योगे पञ्चमी परशब्दस्याध्याहारः । अदश्शब्दावयवमकारात् परौ ईकारोकारौ प्रगृह्यौ स्तः । अमी अत्र । अमी ईशाः । अमी आसते । अमू अत्र । अमू आसाते । मात् किम् ? अमुकेऽत्र । असति माद्ग्रहणे अदसः परत्वस्य एकारेपि सम्भवात् एकारस्यापि सम्बन्धः इह स्यात् ततश्च प्रगृह्यसंज्ञा स्यात् । कृते च तस्मिन् एकारस्य मात्परत्वाभावात् न प्रगृह्यत्वम् । अदस इति किम् ? शम्यत्र । दाडिम्यत्र ।

### ७१. चादयोऽसत्वे १-४-५७

लिङ्गसंख्यान्वितं सत्वम् । असत्वार्थाः चप्रभृतयः निपातसंज्ञाः स्युः । च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, चेत्, कच्चित्, यत्र, हन्त, मा किम्, माङ्, न, यावत्, तावत्, किल, तथा, अथ, यथा, अ, इ, उ, पुरा, किं, धिक्, आहो, उताहो, खलु, ओम्, इत्यादि ।

### प्रादयः १-४-५८

असत्वे इत्यस्य इहापि सम्बन्धः । असत्वार्थाः प्रादयोपि निपातसंज्ञाः स्युः ।

### ७२. निपात एकाजनाङ् १-१-२४

पूर्वसूत्रात् प्रगृह्यमित्यनुवर्तते । पुल्लिङ्गतया च विपरिणम्यते । एकश्चासौ अच्चेति कर्मधारयः । निपातः एकाच् आङ्वर्जितः प्रगृह्यसंज्ञः स्यात् । अ इति अवद्यार्थो निपातः । इ इति विस्मयार्थः । उ इति च वितर्कार्थः । अ अपेहि । इ इन्द्रः । उ उमेशः । सर्वत्र प्रगृह्यसंज्ञया प्रकृतिभावो भवति । अनाङ् इति ङिद्विशिष्टः उपात्तः सूत्रे । प्रयोगे क्वापि ङकारस्याश्रवणात् ङिदङिद्विवेकः कथमिति चेत् ? उच्यते ।

> " ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
> एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित् ॥ "

ईषदर्थकः, क्रियायोगवान्, मर्यादार्थकः-सीमार्थकः, अभिविध्यर्थकः-अभिव्याप्त्यर्थकः आकारः ङित् । पूर्वप्रक्रान्तस्य वाक्यस्यान्यथात्वद्योतनाय प्रयुज्यमानः

आकारः, स्मृतिसूचकः आकारश्च अङित् भवति । निपात इति किम् ? चकारात्, जकारात् । चकार् अ जहार् अ, इत्यत्र णलकारः आदेशसम्बन्धी । न निपातः । एकाजिति किम् ? प्राग्नये वाचम् ईरय । अत्र प्रशब्दो भवति निपातः किन्तु नैकच् । अङित् यथा–'आ एवं नु मन्यसे' पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वबोधकोयमाकारः । पूर्वमित्थं नावमंस्थाः इदानीं त्वेवं मन्यसे इत्यर्थः । 'आ एवं किल तत्' स्मरणबोधकोयमाकारः । अनङिति किम् ? ईषदर्थे-आ+उष्णः=ओष्णः । क्रियायोगे–अ+इतः=एतः । तेन विना मर्यादा-आ+उदकान्तात्=ओदकान्तात् । तेन सह अभिविधिः–आ+आहिच्छत्रात्=आहिच्छत्रात् ।

### ७३. ओत् १-१-१५

निपात इत्यनुवर्तते । ओदिति तस्य विशेषणम् । तदन्तविधिः । प्रगृह्यमित्यनुवृत्तस्य पुल्लिङ्गतया विपरिणामः । ओदन्तो निपातः प्रगृह्यसंज्ञः स्यात् । अहो ईशाः । अहो इति । उताहो इति । अनेकाच्त्वात् पूर्वसूत्रेण न सिध्यति । निपात इति किम् ? विष्णो अव ।

### ७४. एकवचनं सम्बुद्धिः २-३-४९

प्रातिपदिकार्थ इत्यतः प्रथमेत्यनुवर्तते । तस्य षष्ठ्यन्ततया विपरिणामः । सम्बोधने च इत्यतः सम्बोधने इत्यनुवर्तते । सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् । हे राम । हे हरे । हे विष्णो ।

### ७५. सम्बुद्धौ शाकल्यस्येतावनार्षे १-१-१६

सम्बुद्धाविति निमित्तसप्तमी । ओदित्यनुवृत्तेन अन्वेति । ऋषिर्वेदः । ऋषौ भवः आर्षः । न आर्षः अनार्षः तस्मिन् अनार्षे । अवैदिके इत्यर्थः । सम्बुद्धिनिमित्तः ओकारः अवैदिके इति शब्दे परे शाकल्यस्यमते प्रगृह्यसंज्ञकः स्यात् । 'विष्णो+इति' प्रगृह्यसंज्ञाया प्रकृतिभावः । पक्षे अवादेशः । लोपः शाकल्यस्येति वकारस्य लोपे 'विष्ण इति'। लोपस्यापि विकल्पेन विहितत्वात् लोपाभावपक्षे 'विष्णविति' इति त्रीणिरूपाणि । एवमेव भानो

इति, गुरो इति, इति उदाहरणेषु बोध्यम् । सम्बुद्धाविति किम् ? अहो इति । यद्यपि ओत् इत्यनेन अत्र प्रगृह्यसंज्ञा भवत्येव तथापि सम्बुद्धिग्रहणाभावे परत्वात् अनेन सूत्रेण विकल्पेन प्रगृह्यसंज्ञा स्यात् । इष्यते तु तत्र नित्यम् । सम्बुद्धौ परतः इत्युक्तौ तु त्रपो इत्यादौ सम्बुद्धेर्लुका लुप्तत्वेन सम्बुद्धि परत्वाभावेन प्रगृह्य-संज्ञा न स्यात् । अत उक्तं सम्बुद्धिनिमित्तक इति । इताविति किम् ? विष्णो अत्र । अनार्षे इति किम् ? ब्रह्मबन्धविित्यब्रवीत् । वैदिके इतौ परे प्रगृह्यसंज्ञा मा भूत् ।

प्रकृतिभावः

## ७६. प्लुतप्रगृह्या अचि नित्यम् ६-१-१२५

प्रकृत्यान्तः-इत्यतः प्रकृत्येत्यनुवर्तते । प्लुताः, प्रगृह्याश्च अचि परे नित्यं प्रकृत्या स्युः । एहि माणवक ३ अत्र पाठः प्रचलति । दूराद्धूते चेति माणवकशब्दाकारस्य प्लुते अनेन प्रकृतिभावः । तेन सवर्णदीर्घो न, हरी एतौ, विष्णू इमौ, माले अमू, अमू आसाते, अमी आसते, अहो ईशाः, विष्णू इति । सर्वत्र प्रगृह्यत्वात् अचिपरे प्रकृतिभावेन यथायथं प्राप्तः सन्धिर्न ।

## ७७. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६-१-१२७

इक इति षष्ठ्यन्तम् । एङः पदान्तादित्यतः पदान्तादित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । अचीति अनुवर्तते । चकारेण प्रकृत्येत्यस्यानुकर्षः । पदान्तस्य इकः असवर्णे अचि परे शाकल्यस्य मतेन प्रकृत्या-प्रकृतिभावः स्यात् । इकः स्थाने ह्रस्वश्च ? चक्री+अत्र=चक्रि अत्र, पक्षे चक्र्यत्र । कुमारी+अत्र=कुमारि अत्र, कुमार्यत्र । ह्रस्वविधानसामर्थ्यादेव सन्धिर्न भविष्यतीति प्रकृत्येत्यस्यानुकर्षणार्थश्चकारः न कर्तव्य इति चेत् ? उच्यते । ह्रस्वविधानं दीर्घाणामेव इति सम्भाव्येत तथा सति दीर्घाणामेव सन्धिर्न स्यात्, ह्रस्वानां तु स्यादेव । इष्यते तु ह्रस्वानामपि प्रकृतिभावः । अतः चग्रहणम् । दधि+, अत्र=दधि अत्र, पक्षे दध्यत्र । मधु अत्र, पक्षे मध्वत्र । इक इति किम् ? खट्वेन्द्रः । पदान्तस्येति किम् ? नदी+औ=नद्यौ । असवर्णे इति किम् ? कुमारीन्द्रः ।

## न समासे

समासे पदान्तस्य इकः असवर्णे अचि परे प्रकृतिभावः ह्रस्वश्च न भवति । वाप्यश्वः कुमार्यर्थम् ।

## ७८. ऋत्यकः ६-१-१२८

पदान्तादिति, शाकल्यस्य ह्रस्वश्चेति चानुवर्तते । प्रकृत्येत्यस्य सम्बन्धः । पदान्तस्य अकः ऋकारे परे वा प्रकृत्या स्यात्, अकः ह्रस्वश्च स्यात् । राज ऋषिः पक्षे राजर्षिः । ब्रह्म ऋषिः । खट्व ऋश्यः । कुमारि ऋश्यः । अक इति किम्? वृक्षावृश्यः । ऋतीति किम्? राजेन्द्रः । सवर्णार्थम् अनिगर्थं च सूत्रमिदम् । सवर्णार्थम्—होतृ ऋश्यः=होतृ ऋश्यः । अनिगर्थ-मुक्तम्—राज+ऋषिः ।

---

# अथ हल्सन्धिः

## ७९. स्तोः श्चुना श्चुः ८-४-४०

स् च तुश्चेति समाहारद्वन्द्वः । पुंस्त्वमार्षम् । एवं श्चुनेत्यत्रापि श् च चुश्चेति समाहारद्वन्द्वः । तु चु इति वर्गग्रहणम् । योगे इत्यस्याध्याहारः । आनन्तर्ये इत्यर्थः विवक्षितः । सकारतवर्गयोः शकारचवर्गाभ्यां योगे—आनन्तर्ये शकारचवर्गावादेशौ स्तः । स्तोः श्चुनेति यथासंख्यं नेष्यते । सकारस्य शकारेण जवर्गेण च योगे शकारः भवति । तवर्गस्यापि शकारेण चवर्गेण च योगे चवर्गो भवति । आदेशे तु यथासंख्यमिष्यते सकारस्य शकारः, तवर्गस्य चवर्ग इति । सकारस्य शकारेण योगे—रामस्+शेते=रामश्शेते । रमणीया-श्शालयः । सस्य चवर्गेण योगे—बालश्चिनोति । मज्जति । गजश्छायायाम् । तवर्गस्य शकारेण—सोमसुच्शेते । तवर्गस्य चवर्गेण—विद्वज्जनः । स्तोः श्चौ इति सप्तमीनिर्देशमकृत्वा श्चुनेति तृतीयानिर्देशात् पूर्वेण परेण च श्चुना योगेपि श्चुत्वं भवति । सप्तमीनिर्देशे तु तस्मिन्निति निर्दिष्टे पूर्वस्येति परभूतेनैव श्चुनायोगे स्यात् । न पूर्वभूतेन । यज्+नः=यज्ञः । याच्+ना=याच्ञा ।

### ८०. शात् ८-४-४४

स्तोश्चुनेत्यतः तोः चुरिति, न पदान्तादित्यतः नेति चानुवर्तते। परस्येत्यध्याहार्यम्। शकारात्परस्य तवर्गस्य चुत्वं न स्यात्। प्रश्+नः=प्रश्नः।

### ८१. ष्टुना ष्टुः ८-४-४१

स्तोरित्यनुवर्तते। योगे इत्यस्याध्याहारः। सकारतवर्गयोः षकारटवर्गाभ्यां योगे सकारस्य षकारः, तवर्गस्य टवर्गः आदेशः स्यात्। अत्रापि स्थानिनिमित्तयोः न यथासंख्यम्, किन्तु स्थान्यादेशयोरेव। सकारस्य षकारेण—वृःष्षण्डे। अज्ञष्षष्ठः। सकारस्य टवर्गेण—मन्दष्टीकसे। तवर्गस्य षकारेण—पेष्+ता=पेष्टा। तवर्गस्य टवर्गेण—तट्टीका। चक्रिण्ढौकसे।

### ८२. न पदान्ताट्टोरनाम् ८-४-४२

स्तोः इति ष्टुः इति चानुवर्तते। पदान्तात् टवर्गात्परस्य स्तोः ष्टुत्वं न स्यात् नामो नकारं वर्जयित्वा। षट् सन्तः, षट् सायम्, षट् ते, मधुलिट् तरति। पदान्तादिति किम्? ईड्+ते=ईट्टे। टोः किम्। सर्पिष्+तमम्=सर्पिष्टमम्। अनामिति किम्? षट्+नाम्=षण्णाम्।

**अनवतिनगर्योरपीति वाच्यम्**

नवति नगरीशब्दयोरपि नकारं वर्जयित्वा ष्टुत्वं नेति वक्तव्यमित्यर्थः। षट्+नवतिः=षट्णवतिः, षट्+नगर्यः=षट्णगर्यः।

### ८३. तोः षि ८-४-४३

नेति, ष्टुरिति चानुवर्तते। तवर्गस्य षकारे परे ष्टुत्वं न भवति। सन् षष्ठः।

### ८४. यरोऽनुनासिकेऽनुनासिको वा ८-४-४५

न पदान्तादित्यतः पदान्तादित्यनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणम्यते। पदान्तस्य यरः अनुनासिके परे अनुनासिक आदेशो विकल्पेन स्यात्। वाङ्मम षण्णाम्, षण्णगर्यः, एतन्मदीयम्। पदान्तस्येति किम्? वेद्मि।

## प्रत्यये भाषायां नित्यम्

पदान्तस्य यरः अनुनासिकादौ प्रत्यये परे अनुनासिकः नित्यं स्यात्। वाङ्मयम्, चिन्मयम्, तन्मात्रम्। क्वचिन्नभवति ककुद्मन्तः।

## ८५. झलां जश् झशि ८-४-५३

झल् वर्णानां झश् वर्णेषु परेषु जश् वर्णाः आदेशा स्युः। दुग्धम्। बुद्धः। लब्धम्। झशीति किम्? दध्+मः=दध्मः, लभ्+यम्=लभ्यम्।

## ८६. खरि च ८-४-५५

झलां जश् इत्यतः झलामिति, अभ्यासे चर्च इत्यतः चरिति चानुवर्तते। झल् वर्णानां खर् वर्णेषु परेषु चर् वर्णाः आदेशाः स्युः। लिड्+सु=लिट्सु पद्+तिः=पत्तिः, युयुध्+सा=युयुत्सा।

## ८७. विरामोवसानम् १-४-११०

विरामः—क्रियायाः अभावः। स च शब्दशास्त्रप्रस्तावात् वर्णानामुच्चारणाभावः। यस्मिन् वर्णे उच्चारिते सति वर्णान्तराणाम् अव्यवहितोरकाले उच्चारणाभावः सः अन्त्यवर्णः अवसानसंज्ञकः स्यात्।

## ८८. वावसाने ८-४-५६

झलामिति, चर इति चानुवर्तते। अवसाने वर्तमानानां झल् वर्णानां चर् वर्णाः आदेशाः स्युः। वाक्—वाग्, लिट्—लिड्, रामात्—रामाद्, त्रिष्टुप्—त्रिष्टुब्।

## ८९. मोऽनुस्वारः ८-३-२३

हलिसर्वेषामित्यतः हलीत्यनुवर्तते। पदस्येत्यधिकृतम्। मः इति षष्ठ्यन्तम्। म इति पदस्य विशेषणम्, तदन्तविधिः। अलोन्त्यपरिभाषया मकारस्यैव विज्ञायते। पदान्तस्य मकारस्य हलिपरे अनुस्वारः आदेशः स्यात्। हरिं नमति। गृहं गच्छति। पदान्तस्येति किम्? गम्यते, रम्यते। हलि किम्? किमत्र, त्वमागच्छ।

## ९०. नश्चापदान्तस्य झलि ८-३-२४

चकारेण पूर्वसूत्रस्थः मः इत्यनुकृष्यते । अनुस्वार इत्यनुवर्तते । अपदान्तस्य नकारस्य मकारस्य च झलिपरे अनुस्वारः आदेशः स्यात् । यशांसि, पयांसि, सर्पींषि । आक्रंस्यते, अधिजिगांस्यते । अपदान्तस्य इति किम् ? राजन् गच्छ । झलि किम् ? राजानौ । नम्यते । गम्यते ।

## ९१. मो राजि समः क्वौ ८-३-२५

मः इति प्रथमान्तम् । मोनुस्वारः इत्यतः म इति षष्ठ्यन्तमनुवर्तते । समः इति अवयवषष्ठी । क्वौ इति प्रत्ययग्रहणात् प्रत्ययग्रहणपरिभाषया क्विप्रत्ययान्तलाभः । राजि इति राज् धातु निर्देशः । समः मकारस्य मकारः आदेशः स्यात् क्विप्रत्ययान्ते राजधातौ परे । मकारस्य मकारवचनं मोऽनुस्वार इति अनुस्वारो मा भूदिति । सम्राट्, साम्राज्यम् । सम इति किम् ? किम् राट्=किंराट् । राजीति किम् ? सम् यत्=संयत् । क्वाविति किम् ? सम् राजिता=संराजिता । संराजते ।

## ९२. अनुस्वारस्य ययि परसवर्णः ८-४-५८

अनुस्वारस्य यय् वर्णे परे परसवर्णः आदेशः स्यात् । शङ्का । अञ्चितः । अवगुण्ठनम् । शान्तः । आनन्दः । कम्पनम् । गुम्फनम् । ययीति किम् ? आक्रंस्यते ।

## ९३. वा पदान्तस्य ८-४-५९

पूर्वसूत्रमनुवर्तते । पदान्तस्य अनुस्वारस्य ययि परे वा परसवर्णः आदेशः स्यात् । त्वं+करोषि=त्वङ्करोषि । कथं चित्, कथञ्चित् । गगनण्डयमानम् । सय्ँयन्ता । सव्ँवत्सरः । यल्ँलोकम् ।

## ९४. तोर्लि ८-४-६०

तु इति वर्गग्रहणम् । अनुस्वारस्य ययि परसवर्णः इत्यतः परसवर्णः इत्यनुवर्तते । तवर्गस्य लकारे परे परसवर्णः आदेशः स्यात् । तल्लङ्का : तल्लयः । अग्निचिल्लुनाति । महाल्ँलाभः । विद्वाल्ँलिखति । किसलयाल्लुँ-

नाति । नकारस्य स्थानिनः आन्तरतम्यात् परसवर्णः भवन् अनुनासिकः भवति ।

## ९५. उदः स्थास्तम्भोः पूर्वस्य ८-४-६१

अनुस्वारस्य ययि परसवर्णः इत्त्र समासनिर्दिष्टमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते एकदेशे स्वरितत्वप्रतिज्ञानात् । उद इति पञ्चमी, अतः तस्मादित्युत्तरस्येति परिभाषया उदः अव्यवहितोत्तरयोः इत्यर्थः लभ्यते । आदेः परस्य इति परिभाषया स्थास्तम्भ्वोः आदेः सकारस्येति लभ्यते । उदः अव्यवहितोत्तरयोः स्थास्तम्भ्वोः आदेः सकारस्य स्थाने पूर्वसवर्णः आदेशः स्यात् । पूर्वस्य दकारस्य सवर्णः भवन् तवर्गः, सकारस्य आन्तरतम्यात् थकार एव भवति । यद्यपि स्थानतः आन्तर्यं त थ द ध न एषां पञ्चानामप्यविशिष्टम् । तथापि सति सम्भवे प्रयत्नसाम्यमपि आद्रियते । सकारः--अघोषः महाप्राणश्च भवति । अतः तथाभूत--एव थकारः आदेशः । उद् + स्थानम् = उत्थ्थानम् । उद् + स्तम्भनम् = उत्थ्तम्भनम् । उदो दकारस्य 'खरिच' इति चर्त्वं भवति ।

## ९६. झरो झरि सवर्णे ८-४-६५

'हलो यमां यमिलोपः' इति सूत्रात् 'हल' इति 'लोप' इति 'झयो होऽन्यतरस्यामि'त्यतः 'अन्यतरस्याम्' इति चानुवर्तते । अन्यतरस्यामित्यस्य विकल्प इत्यर्थः । 'हल' इति पञ्चम्यन्तम् । 'तस्मादित्युत्तरस्येति' परिभाषया हल उत्तरस्येत्यर्थलाभः । हल उत्तरस्य झरः सवर्णे झरिपरे वा लोपः स्यात् । उत्थ्थानम्, उत्थ्तम्भनम् अत्र थस्य लोपः, उत्थानम्, उत्तम्भनम् । लोपाभावपक्षे थकारस्यैव श्रवणं भवति उत्थ्थानमिति । ननु तस्य 'खरिचे'ति सूत्रेण चर्त्वं भवति । 'पूर्वत्रासिद्धमिति' सूत्रेण चर्त्वं प्रति थकारस्य असिद्धत्व बोधनात् । प्रतत् + तम् + प्रत्तम् । दतृत् + तम् + दत्तम् । मध्यतकारस्य लोपः । झर इति किम् ? शार्ङ्ङ्गम्, अत्र ङकारस्य लोपो न भवति झरत्वाभावात् । झरीति किम् ? प्रियपञ्च्ञा, ञकारः झर् न भवतीति झर्परत्वाभावेन चस्य लोपो न । सवर्णे इति किम् ? 'तर्प्ता' अत्र यस्य लोपो न, सवर्णझर् परकत्वाभावात् । 'यथासंख्यमनुदेशः समानम्' इत्याश्रित्य संख्यातानुदेशेन

'तरप्ता' इत्यादौ दोषाभावे सवर्णग्रहणं व्यर्थं सत् संख्यातानुदेशो नेति बोधयति। तेन सवर्णमात्रे लोपो भवति। महान्‍ च्‍ छत्रुः इत्यत्र छकारे परे छस्य, शिनूड्‍+ढि=शिण्ढि इत्यादौ ढकारेपरे डकारस्यापि लोपः सिध्यति।

## ९७. झयो होऽन्यतरस्याम् ८-४-६२

'उदस्थास्तम्भोः पूर्वस्ये'त्यतः पूर्वस्येति, 'अनुस्वारस्य ययी'त्यतः सवर्ण इति चानुवर्तते। ह इति षष्ठ्यन्तम्। झय उत्तरस्य हकारस्य वा पूर्वसवर्णादेशः स्यात्। वाग् घसति, पक्षे वाग् हसति। पयोलिड्ढसति पयोलिड् हसति। घृतस्पृग् घव्यवाहः। मधुलिड् ढरति। महद्धर्म्म्। घोषवतः नादवतः महाप्राणस्य संवृतकण्ठस्य हकारस्य स्थाने तादृश एव पूर्वस्य सवर्णः घः आदेशः भवति। झय इति किम्? भवान् हसति अत्र न भवति।

## ९८. शश्छोटि ८-४-६३

पदान्तादिति, 'झयो होऽन्यतरस्यामित्यतः झय इति अन्यतरस्यामिति चानुवर्तते। श इति षष्ठ्येकवचनम्। पदान्तात् झयः परस्य शकारस्य अटिपरे वा छकारादेशः स्यात्। वाक् छरः। मधुलिठ् छेते। मित्रध्रुगुछेते। ऋत्विक् छुद्धः भिषक् छुल्कः। बलवान् छत्रुः। महान्च् छाल्मलीतरुः: पदान्तादिति किम्? विरश्शिन्।

### छत्वममीति वाच्यम्

'शश्छोटि' इत्यत्र अटीति स्थाने अमीति वक्तव्यमित्यर्थः। तच्छ्लोकेन। तच्छ्मश्रुणा। अमीति किम्? वाक् श्च्योतति। विराट् श्रीमान्।

## ९९. ङमो ह्रस्वादचि ङमुण् नित्यम् ८-३-३२

ङमम् ङमुट् इति उभयत्रापि प्रत्याहारग्रहणम्। उडिति प्रत्येकं ङकार-णकारनकारैः सम्बध्यते। संज्ञायां च कृतं आगमलिङ्गं संज्ञिनां भवति। तेन ङुट् णुट् नुट् आगमाः प्रवर्तन्ते। 'ङम' इति पञ्चम्यन्तम्। अधिकृतस्य पदस्येत्यस्य ङम इत्यनुरोधात् पञ्चम्यन्ततया विपरिणामः। ह्रस्वादित्यस्य ङमि अन्वयः। ङम् च पदस्य विशेषणम्। 'यस्मिन् विधिः तदादावल्ग्रहणे' इति

अजादौ पदे इत्यर्थलाभः । 'उभयनिर्देशेपञ्चमीनिर्देशोबलीयान्' इति ङम इति पञ्चमीबलात् अचि पदे इति सप्तम्याः षष्ठीत्वप्रकल्पनम् । ह्रस्वात्परो यो ङम् तदन्तात्पदादुत्तरस्य अजादेः पदस्य नित्यं ङमुडागमः स्यात् । टित्वात् आगमाः अचः आद्यवयवाः यथासंख्यं प्रवर्तन्ते । ङकारादुत्तरस्य अचः ङकारः, णकारादुत्तरस्य अचः णकारः नकारादुत्तरस्याचः नकारश्च भवतीति बोध्यम् । प्रत्यङ्ङास्ते । प्राङ्ङिति । युङ्ङुवाच । सुगण्णवोचत् । सुगण्णीशः । पश्यन्नास्ते । कुर्वन्नस्ति । गच्छन्नाह । धावन्नञ्जसा । पतन्नर्भकः । ङम इति किम् ? त्वम्+असि=त्वमसि । ह्रस्वादिति किम् ? प्राङ् . आस्ते । धीमान् अवोचत् । सुगाण् आगतः । अचीति किम् ? प्रत्यङ् करोति । गच्छन् बालः । अजादेः पदस्येति किम् ? परमदण्डिनौ इत्यत्र मा भूत् ।

## १००. छे च ६-१-७३

ह्रस्वस्य पिति कृति तुगित्यतः ह्रस्वस्य, तुगिति चानुवर्तते । संहिताधिकारः वर्तते । ह्रस्वस्य छे परे तुगागमः स्यात् । तुकि उकारककारयोः इत्संज्ञा लोपश्च । गच्छति । मेघच्छाया । पारच्छाया । इच्छति । तरुच्छाया । तुकि सति तकारस्य श्चुत्वेन चकारः भवति ।

## १०१. दीर्घात् ६-१-७५

दीर्घात् छेपरे दीर्घस्यैव तुक् स्यात् । ह्रीच्छति । म्लेच्छति । इदं सूत्रं अपदान्ते एव प्रवर्तते ।

## १०२. पदान्ताद्वा ६-१-७६

पदान्तात् दीर्घात् छे परे तुक् विकल्पेन स्यात् । लताच्छाया, लताछाया । कुटीच्छाया, कुटीछाया ।

## १०३ आङ् माङोश्च ६-१-७४

आङः माङश्च छे परे तुक् स्यात् । ईषदादिषु चतुर्षु अर्थेषु वर्तमानस्य आङः, प्रतिषेधवचनस्य माङश्च ग्रहणम् । दीर्घात् इति सूत्रेणैव सिद्धे पुनरिदं सूत्रं पदान्ताद्वा इति विकल्पबाधनार्थम् । आङः—ईषच्छायेत्यर्थे—आच्छाया ।

क्रियायोगे–आच्छादयति । मर्यादाभिविध्योः–आच्छायायाः । माङ्–माच्छिदत् ।

### १०४. समः सुटि ८–३–५

मतुवसोरुसम्बुद्धौ इत्यतः रुरित्यनुवर्तते । समः सुटिपरे , अन्त्यस्य मकारस्य रुः स्यात् । सम्+स्कर्ता=सर् स्कर्ता । सम इति किम् ? उपस्कर्ता । सुटीति किम् ? सम्+कृतिः=संकृतिः ।

### १०५. अत्रानुनासिकः पूर्वस्य तु वा ८–३–२

अत्रेत्यनेन रुप्रकरणं विज्ञायते । मतुवसोरुसम्बुद्धौ इति रुत्वविध्यनन्तरमस्य पाठात् । यस्य रुर्विधीयते तदपेक्षं पूर्वत्वं विवक्षितम् । इत उत्तरं यस्य स्थाने रुर्विधीयते ततः पूर्वस्य तु वर्णस्य वा अनुनासिकः स्यात् । सँर् स्कर्ता ।

### १०६. अनुनासिकात्परोऽनुस्वारः ८–३–४

अनुनासिकादिति ल्यब्लोपे पञ्चमी । तेन अनुनासिकं विहायेत्यर्थः । अनुनासिकाभावे इति यावत् । पूर्वसूत्रात् अनुवृत्तस्य पूर्वस्येत्यस्य पञ्चम्यन्ततया विपरिणामः । अनुनासिकाभावे रोः पूर्वो यो वर्णः तस्मात् परः अनुस्वारः आगमः स्यात् । टित्वकित्वाद्यागमलिङ्गाभावेपि पर शब्देन अनुस्वारस्य देशविशेषसम्पादनादागमत्वम् ।

### १०७. खरवसानयोर्विसर्जनीयः ८–३–१५

खर् च अवसानं च तयोः । रोरीति सूत्रात् रः इति षष्ठ्यन्तमनुवर्तते । अधिकृते पदस्येत्यत्र विशेष्यते तेन तदन्तलाभः । अलोन्त्यपरिभाषया अन्त्यस्येति लभ्यते । अवसानं अभावरूपम् । तेन पौर्वापर्यं न सम्भवतीति अवसाने इति विषयसप्तमी ग्राह्या । रेफान्तपदस्य अन्त्यरेफस्य खरिवर्णे परे, अवसाने विषये च विसर्जनीयः आदेशः स्यात् । खरि–संर् स्कर्ता–सं : स्कर्ता । बालः तत्र । अवसाने–रामः । हरिः । वायुः । खरवसानयोरिति किम् ? रविर्गच्छति । वायुर्नयति । नृकुट्यां भव इत्यर्थे नार्कुटः इति, नृपतेरपत्यमित्यर्थे नार्पत्यः इति रूपम् । अत्र तु खरि परेपि विसर्गो न भवति । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति विसर्जनीये कर्तव्ये बहिर्भूततद्धित प्रत्ययापेक्षस्य रेफस्य असिद्धत्वात् ।

## १०८. रोः सुपि ८-३-१६

विसर्जनीय इत्यनुवर्तते। नियमार्थोयमारम्भः। सप्तमीबहुवचने परे रोरेव रेफस्य विसर्जनीयः। सर्पिःषु, यशःसु। अन्यरेफस्य न भवति चतुर्षु, गीर्षु, धूर्षु।

## १०९. विसर्जनीयस्य सः ८-३-३४

खरवसानयोरित्यतः खरीत्येकदेशस्यानुवृत्तिः। विसर्जनीयस्य खरिपरे सकारः आदेशः स्यात्। बालस्तत्र। सूर्यस्तपति। गावस्तरन्ति। मूर्खस् टीकते, ष्टुत्वे च मुर्खष्टीकते। अलसस्शेते, श्चुत्वे च अलसश्शेते।

## ११०. शर्परे विसर्जनीयः ८-३-३५

शर्परो यस्मादिति बहुव्रीहिः। पूर्वसूत्रात् विसर्जनीयस्येत्यस्यानुवृत्तिः। खरवसानयोरित्यतः खरि इत्येकदेशस्यानुवृत्तिः। शर्परे खरि परे विसर्जनीयस्य विसर्जनीयः आदेशः स्यात। सत्वस्य ≍क ≍पयोश्चापवादः। वासः क्षौमम्। काञ्चनः त्सरुः। आद्भः प्सातम्। विसर्जनीयस्य न इत्येवोच्यताम्। सकारस्य प्रतिषेधे हि विसर्जनीयः स्वेनरूपेणावतिष्ठते इति विसर्जनीयविधानं व्यर्थमिति न वाच्यम्। तथा सति 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन सकारादेशस्यैव प्रतिषेधः स्यात् न तु जिह्वामूलीयोपध्मानीययोः। विसर्जनीयविधाने तु विकारान्तरस्य सर्वस्य प्रतिषेधः सिद्धो भवति।

## १११. वा शरि ८-३-३६

विसर्जनीयस्य सः इत्यतः विसर्जनीयस्येति, पूर्वसूत्रात् विसर्जनीय इति चानुवर्तते। विसर्जनीयस्य शरि परे वा विसर्जनीयादेशः स्यात्। अलसः शेते। पक्षे विसर्गस्य सः, अलसस्शेते।

सः स्कर्ता इत्यत्र विकल्पेन विसर्गे प्राप्ते—

### संपुंकानां सो वक्तव्यः (वा)

सम्, पुम्, कान् एतेषां विसर्गस्य सकारादेशो वक्तव्यः। तथा च नित्यमेव विसर्गस्य सत्वे सँस्कर्ता, संस्कर्ता इति रूपं भवति। समो मस्य

सुटिपरे लोपो भवतीति केचित् वैयाकरणाः। तन्मते सँ स्कर्ता, सं स्कर्ता इति एकसकारघटितं रूपम्। लोपस्यापि रुप्रकरणस्थत्वात् अनुनासिकानुस्वारौ भवत एव।

## ११२. पुमः खय्यम्परे ८-३-६

अम् परो यस्मादिति बहुव्रीहिः। रुरित्यनुवर्तते। पुमो मस्य रुः स्यात् अम्परे खयिपरे। पुम्+कोकिलः—पुर् कोकिलः, अनुनासिकानुस्वार विकल्पः विसर्गः, संपुंकानां सः इति सत्वं च, पुँस्कोकिलः, पुंस् कोकिलः इति रूपं भवतः। एवमेव पुम्+पुत्रः=पुँस् पुत्रः पुंस् पुत्रः। पुँस्कामा, पुंस्कामा। पुँश्चली, पुंश्चली इति। खयीति किम्? पुंदासः। पुंगवः। अम्परे किम्? पुंक्षीरम्। पुंख्यानमित्यत्र तु पुमो मस्य रुत्वं न भवति 'रुशान्तः शस्य यो वा' इति असिद्धकाण्डे शकारस्य यकारादेशः पठितः। तेन पूर्वत्रासिद्धमिति यत्वस्य असिद्धतया खकारस्य अम्परकत्वाभावात्।

## ११३. तस्य परमाम्रेडितम् ८-१-२

सर्वस्य द्वे इति सूत्रानन्तरमिदं सूत्रं पठ्यते अष्टाध्याय्याम्। पूर्वसूत्रे द्विरुक्तस्य प्रकृतत्वात् इह तस्येत्यस्य द्विरुक्तस्येत्यर्थः सिध्यति। तस्येत्यवयव षष्ठी। तस्य द्विरुक्तस्य परमवयवभूतं शब्दरूपं आम्रेडितसंज्ञं स्यात्। चौर चौर बन्धयिष्यामि त्वाम्। अत्र द्वितीयः चौरशब्दः आम्रेडितसंज्ञः।

## ११४. कानाम्रेडिते ८-३-१२

रुः इत्यनुवर्तते। कान् इति द्वितीयान्तशब्दस्वरूपपरम्। षष्ठ्याः सौत्रो लुक्। कान् शब्दान्तस्य नकारस्य आम्रेडिते परे रुः स्यात्। कान्+कान्=कार् कान्। अनुनासिकानुस्वार विकल्पः भवति। रेफस्य विसर्गः। 'संपुंकानां सः' इति विसर्गस्य सत्वम्। काँस्कान्, कांस्कान् इति रूपं भवति। आम्रेडिते इति किम्? कान् कान् पश्यति। नात्र कान् इत्यस्य द्विर्वचनन्। एकोऽत्र किं शब्दः प्रश्ने। द्वितीयस्तु कुत्सायाम्। कान् कुत्सितान् पश्यति? इत्यर्थः। अत्र मा भूत्।

## ११५. नश्छव्यप्रशान् ८-३-७

नः इति षष्ठ्यन्तं अधिकृतस्य पदस्य विशेषणम् । तदन्तविधिः । अम्परे इति रु इति च वर्तते । अम्परे छविपरे नान्तस्य पदस्य योऽन्त्यो नकारः तस्य रुः स्यात् । प्रशान् शब्द नकारस्य तु न भवति । शार्ङ्गिन्+छिन्धि = शार्ङ्गिंश्छिन्धि, शार्गिंश्छिन्धि । भवाँश्छादयति । भवाँश्चिनोति । भवाँष्टीकते । चक्रिँस्त्रायस्व । भवाँस्तरति । पदस्येति किम् ? हन्ति । अम्परे किम् ? भवान्+त्सरुकः । छवीति किम् ? भवान्+करोति । अप्रशान् किम् ? प्रशान्+तनोति ।

## ११६. कुप्वोः ≍क ≍पौ च ८-३-६७

विसर्जनीयस्येति वर्तते । चकारेण विसर्गः अनुकृष्यते । कु पु इति वर्गग्रहणम् । विसर्जनीयस्य कवर्गे पवर्गे च परे क्रमात् जिह्वामूलीयः उपध्मानीयश्च स्यात्, विसर्गश्च । बाल ≍ करोति, बालः करोति । खनक ≍ खनति, खनकः खनति पाचक ≍ पचति । वृक्ष ≍ फलति । इदं सूत्रं येन नाप्राप्तन्यायेन 'विसर्जनीयस्य सः' इत्यस्यैवापवादः । सत्वे अवश्यप्राप्ते एतदारम्भात् । 'शर्परे विसर्जनीयः' इत्यस्य तु नायमपवादः कः करोति इत्यादौ शर्परे इत्यस्याप्रास्या अवश्यप्राप्त्यभावात् । तेन वासः क्षौमम्, घनाघनः क्षोभणः, अद्भिः प्सातम् इत्यादौ 'शर्परे विसर्जनीय' इति केवलं विसर्ग एव भवति । परत्वादपि शर्परे न बाध्यते, पूर्वत्रासिद्धे नास्ति विप्रतिषेधः अभावादुत्तरस्येत्युक्तत्वात् ।

## ११७. सोपदादौ ८-३-३८

कुप्वोरिति अनुवर्तते । अपदादाविति तद्विशेषणम् । अपदाद्योरिति द्विवचने वक्तव्ये एकवचनमार्षम् । प्रत्येकाभिप्रायं वा एकवचनम् । विसर्जनीयस्य अपदाद्योः कुप्वोः परयोः सः स्यात् । कुप्वोरित्यस्यापवादः । अपदादावित्युक्त्या पाश–कल्प–क–काम्येष्वेव इदं सत्वं भवति । पयस्पाशम् । याप्ये पाशप् इति कुत्सितार्थे विहितः पाशप् प्रत्ययः । यशस्कल्पम् । ईषदसमाप्तौ कल्पप् प्रत्ययः विहितः यशस्कम् । कुत्सितेऽर्थे कुत्सिते इति कः प्रत्ययः ।

यशस्काम्यति । यशः आत्मन इच्छतीत्यर्थे काम्यचेति काम्यच् प्रत्ययः । अपदादाविति किम् ? यशः कामयते । पयः पिबति ।

### अनव्ययस्येति वाच्यम् (वा)

सोऽपदादाविति विधिः अव्ययविसर्गस्य न भवतीति वक्तव्यम् । प्रातः कल्पम् । पुनः कल्पम् । अत्र विसर्गस्य अव्ययसम्बन्धितया न सत्वम् ।

### काम्ये रोरेवेति वाच्यम् (वा)

काम्यप्रत्यये परे रुस्थानिकस्यैव विसर्गस्य सोपदादाविति सत्वं भवतीति वक्तव्यम् । पयस्काम्यतीत्यादौ भवति । इह न भवति, गीः काम्यति । अत्र विसर्गस्य रुस्थानिकत्वाभावात् ।

### ११८. साक्षात्प्रभृतीनि च १–४–७४

'विभाषा कृञि' इत्यनुवर्तते । साक्षात्–मिथ्या–आम्–श्रद्धा–लवणम्–उष्णम्–शीतम्–उदकम्–आर्द्रम्–प्रादुस्–नमस–आविस् आदीनि कृञि परे विकल्पेन गतिसंज्ञकानि स्युः ।

### ११९. पुरोऽव्ययम्

असिप्रत्ययान्तः पुरस् शब्दः गतिसंज्ञः स्यात् । पुरस्कृत्य । अव्ययमिति किम् ? पूः पुरौ पुरः ।

### १२०. तिरोऽन्तर्धौ

अन्तर्धिः–व्यवधानम् । तस्मिन्नर्थे तिरस्शब्दः गतिसंज्ञः स्यात् । तिरोभूय । तिरोभूतम् । तिरोभवति । अन्तर्धाविति किम् ? तिरोभूत्वास्थितः पार्श्वतः भूत्वेत्यर्थः ।

### १२१. नमस्पुरसोर्गत्योः ८–३–४०

अपदादाविति नेहानुवर्तते । विसर्जनीयस्य सः इति कुप्वोः इति चानुवर्तते । गतिसंज्ञयोः नमस् पुरस् इत्येतयोः विसर्गस्य सकारादेशः स्यात् कुप्वोः परयोः । नमः+करोति=नमस्करोति । नमस्कर्ता । नमस्कर्तुम् । गतिसंज्ञाभावे नमः करोति । नमः कर्ता । नमः कर्तुम् । पुरस्करोति[1] ।

पुरस्कृत्य । पुरस्कर्तुम् । पुरः प्रवेष्टव्या इत्यत्र नगरार्थक पूर् शब्दस्यानव्ययत्वेन गतिसंज्ञाभावात् न सत्वम् ।

## १२२. तिरसोऽन्यतरस्याम् ८–३–४२

गतेरित्यस्येह सम्बन्धः । गतिसंज्ञकस्य तिरसः विसर्गस्य सकारादेशो वा स्यात् कुप्वोः परयोः । पक्षे जिह्वामूलीयविसर्गौ । तिरस्कर्ता, तिरः कर्ता । तिरस्कर्तुम् । तिरस्करोति । तिरस्कारः । गतेः किम् ? काण्डं तिरः कृत्वा गतः ।

## १२३. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८–३–४६

अत इति पञ्चमी । तपरनिर्देशात् ह्रस्वस्यग्रहणम् । नित्यंसमासेनुत्तरपदस्थस्येति सूत्रमनुवर्तते । विसर्जनीयस्येति वर्तते । ह्रस्वाकारादुत्तरस्य अनुत्तरपदस्थस्यानव्ययस्य विसर्गस्य समासे कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णी इत्येतेषु परतः नित्यं सकारादेशः स्यात् । कुप्वोरित्यस्यापवादः ! अयस्कारः, पयस्कामः, अयस्कंसः, अयस्कुम्भः,- अयस्पात्रम्, अयस्कुशा, असस्कर्णी । कुम्भपात्र इति सूत्रे निर्देशेपि "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" प्रातिपदिकस्य ग्रहणे लिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणं भवति ; इति न्यायात् कुम्भीपात्री शब्दयोः परयोरपि सत्वं भवति । तेन अयस्कुम्भी, अयस्पात्री इति सिध्यति । कर्णी इति ईकारान्तनिर्देशात् कर्ण शब्दे परे अनेन सूत्रेण सत्वस्याप्राप्तावपि कस्कादिषु चेति सूत्रेण सत्वे शुनस्कर्णः इति सिध्यतीति बोध्यम् । अतः इति किम् ? स्वः कामः । पुनः कारः । समासे इति किम् ? यशः करोति । अनुत्तरपदस्थस्येति किम् ? परमयशः कारः । परम पयः कामः ।

## १२४. अधः शिरसी पदे ८–३–४७

अधस्, शिरस् इत्येतयोः समासे अनुत्तरपदस्थस्य विसर्गस्य सकारादेशः स्यात् पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समासे इति किम् ? अधः पदम् । शिरः पदम् । अनुत्तरपदस्थस्येति किम् ? परमशिरः पदम् ।

## १९५. कस्कादिषु च ८–३–४८

कस्कादिः गणः । कस्कादिष्विति विषयसप्तमी । विसर्जनीयस्येति,

स इति वर्तते । इणः ष इत्यतः ष इति चानुवर्तते । कस्कादिगणे पठितेषु कस्क इत्येवमादिषु विसर्गस्य सकारः षकारो वा यथायोगं स्यात् कुप्वोः परयोः । इणः परस्य विसर्गस्य षः, अनिणः परस्य विसर्गस्य सः इति विवेकः । कुप्वो-रित्यस्यापवादः । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । भ्रातुष्पुत्रः । शुनस्कर्णः । सद्यस्कालः । बहिष्पूलम् । यजुष्पात्रम् इत्यादि । यद्यपि वक्ष्यमाणेन नित्यंसमासेऽनुत्तरपदस्थस्येति, इसुसोः सामर्थ्ये इति वा सूत्रेण सर्पिष्कुण्डिका इत्यत्र षत्वं सिध्यति । तथापि तिष्ठतु सर्पिष्, कुण्डिकां पश्य इत्यादौ असमासत्वात् नित्यं समासे इत्यस्य, सामर्थ्यविरहात् इसुसोः सामर्थ्ये इत्यस्य च अप्रवृत्त्या षत्वार्थम्; "इदं सर्पिष् कुण्डिकाया"-इत्यादौ सामर्थ्ये नित्यषत्वार्थं च कस्कादिगणे सर्पिष्कुण्डिका शब्दस्य पाठः ।

## १२६. इणः षः ८–३–३

इणः इति पञ्चमी । विसर्जनीयस्येति वर्तते । सोपदादावित्यतः अपदादौ इत्यनुवर्तते । अनव्ययस्येत्यस्य सम्बन्धः । इण उत्तरस्य अनव्ययस्य विसर्गस्य षकारादेशः स्यात् अपदाद्योः कुप्वोः परयोः । इदमपि पाशकल्पक-काम्येष्वेव प्रवर्तते । काम्ये परे रोर्विसर्गस्यैव भवति । सर्पिष्पाशम् । धनुष्पाशम् । सर्पिष्कल्पम् । यजुष्कल्पम् । सर्पिष्कम् । यजुष्कम् । सर्पिष्काम्यति । यजुष्काम्यति । अनव्ययस्येति किम् । उच्चैः कल्पम् । अपदाद्योरिति किम् ? वायुः करोति । अग्निः पचति । वायुः पचति । कुप्वोः किम् ? सर्पिस्ते । यजुस्ते । काम्ये रोरेवेति किम् ? गीः काम्यति ।

## १२७. इदुदुपधस्य चाप्रत्ययस्य ८–३–४१

विसर्जनीयस्येति वर्तते । इदुदुपधस्येति तद्विशेषणम् । इच्च उच्च इदुतौ, इदुतौ उपधे यस्येति बहुव्रीहिः । प्रत्ययपदं प्रत्ययसम्बन्धिपरम् । अप्रत्ययस्य–प्रत्ययसम्बन्धिभिन्नस्य–प्रत्ययावयवभिन्नस्येत्यर्थः । इकारोकारोपधस्य प्रत्ययावयव भिन्नस्य विसर्गस्य षकारः आदेशः स्यात् कुप्वो परयोः । पदाद्योः कुप्वोः इणः षः इत्यस्याप्रवृत्तेः इदं सूत्रमारब्धम् । निष्कृतम् । निष्पीतम् । निष्प्रत्यूहम् ।

आविष्कृतम् । बहिष्कृतम् । दुष्कृतम् । दुष्पीतम् । प्रादुष्कृतम् । चतुष्कृतम् । चतुष्कलम् । अप्रत्ययस्येति किम् ? अग्निः करोति । वायुः करोति । प्रत्ययावयवभिन्नस्येत्युक्तेः कविभिः कृतम् इत्यत्र न भवति । प्रत्ययभिन्नस्येत्युक्तौ तु भिसः प्रत्ययत्वेन विसर्गस्य प्रत्ययभिन्नत्वात् स्यादेव । मातुः करोति, पितुः करोति, मातुः कृपा इत्यादौ रेफस्य स्थाने जातस्य विसर्गस्य अप्रत्ययत्वेऽपि षत्वं न भवति कस्कादिगणे भ्रातुष्पुत्रशब्दपाठेन एकादेशशास्त्रनिमित्तकस्य न षत्वं भवतीति ज्ञापनात्। एकादेश शास्त्रनिमित्तकस्यापि विसर्गस्य षत्वप्रवृत्तौ कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठो व्यर्थः स्यात् । षत्वार्थो हि तत्र पाठः । अनेनैव षत्वस्य सिद्धौ किं तेन। भवति प्रकृते एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्य एकादेशशास्त्रनिमित्तकत्वमिति षत्वं न ।

### मुहुसः प्रतिषेधो वक्तव्यः (वा)

मुहुः कामा ।

### १२८. द्विस्त्रिश्चतुरिति कृत्वोर्थे ८–३–४३

तिरसोन्यतरस्यामित्यतः अन्यतरस्यामिति अनुवर्तते । ष इति वर्तते। इति इत्यनन्तरं शब्दानामिति शेषः । संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् इति कृत्वसुचोऽर्थः कृत्वोर्थः । कृत्वोर्थे वर्तमानानां द्विस्, त्रिस्, चतुस् इत्येतेषां शब्दानां विसर्गस्य षकारः आदेशो वा स्यात् कुप्वोः परयोः । चतुः शब्दस्य, इदुदुपधस्येति नित्ये षत्वे प्राप्ते, इतरयोस्तु अप्राप्ते सूत्रमिदं प्रवृत्तम् । द्विष्करोति, द्विः करोति । द्विष्पचति, द्विः पचति । एवमेव त्रिष्करोति इत्यादीनि ऊह्यानि कृत्वोर्थे इति किम् ? चतुष्कपालः । अत्र चतुरशब्दस्य कृत्वोर्थे अवृत्तेः नानेन विसर्गस्य षत्वविकल्पः किन्तु इदुदुपधस्येति नित्यमेव षत्वम् ? चतुः शब्दः अव्युत्पन्नः अतः अप्रत्ययस्येति पर्युदासो न भवति ।

### १२९. इसुसोः सामर्थ्ये ८–३–४४

इसुसोः विसर्गस्य षकारादेशः वा स्यात् कुप्वोः परयोः सामर्थ्ये। सामर्थ्यं द्विविधम्—व्यपेक्षालक्षणम्, एकार्थीभावलक्षणं च । तत्र स्वार्थपर्यवसायिनां

पदानाम् आकांक्षा–योग्यता–सन्निधिवशात् यः परस्परान्वयः तत् व्यपेक्षाभिधं सामर्थ्यम्, विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः । इदं च राज्ञः पुरुषः इत्यादि वाक्ये एव भवति । तत्र च एकैकस्य शब्दस्य यो यः सन्निहितः योग्यश्च तेन तेनान्वयो भवति । यथा राज्ञः पुरुषः अश्वश्चेति, ऋद्धस्य राज्ञः पुरुष इति च । प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथक् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् एकार्थीभावलक्षणसामर्थ्यम् । इदं च सामर्थ्यं राजपुरुषः इत्यादिवृत्तावेव । अस्मिन् सूत्रे व्यपेक्षालक्षणमेव सामर्थ्यमाश्रीयते । सर्पिष्करोति, सर्पिः करोति । सर्पिष्पिबति । धनुष्करोति । हविष्करोति । यजुष्करोति । अत्र विसर्गस्य प्रत्ययसम्बन्धित्वात् इदुदुपधस्येत्यस्य न प्राप्तिः । सामर्थ्ये इति किम् ? तिष्ठतु सर्पिः । पिब त्वमुदकम् । अत्र सर्पिरित्यस्य पिबेत्यत्रान्वयाभावात् न सामर्थ्यम् । अतो नात्र षत्व विकल्पः ।

### १३०. नित्यं समासेऽनुत्तरपदस्थस्य ८–३–४५

इसुसोरित्यनुवर्तते । समासे इसुसोरनुत्तरपदस्थस्य विसर्गस्य नित्यं षत्वं स्यात् कुप्वोः परयोः । सर्पिष्कुण्डिका । सर्पिष्पात्रम् । सर्पिष्पानम् । चक्षुष्कमलम् । चक्षुष्पात्रम् । धनुष्कोटिः । धनुष्पातः । अनुत्तरपदस्थस्येति किम् ? परमसर्पिः कुण्डिका । प्रभूतहविः पात्रम् । सुन्दरचक्षुः कमलम् । महाधनुः पातः ।

### १३१. ससजुषोरुः ८–२–६६

सश्च सजूश्च ससजुषौ तयोः, स इति सकारो विवक्षितः अकारः उच्चारणार्थः । पदस्येत्यधिक्रियते । सकारेण सजुष् शब्देन च विशेष्यते । तदन्तविधिः । अलोन्त्यस्येति अन्त्यस्य कार्यं विज्ञायते । सकारान्तं सजुष् शब्दान्तं च यत् पदं तदन्तस्य रुः स्यात् । झलां जशोन्ते इति जस्त्वस्यापवादोयं रुः । रुविधौ उकारः इत् । सकारान्तस्य–हरिरत्र । वायुरत्र । सजुष् शब्दान्तस्य–परमसजूरत्र । सजूष् इत्यस्यापि ।

## व्यपदेशिवदेकस्मिन्

असहाये मुख्यतदन्तत्वाभावेऽपि तदन्ततुल्यत्वमाश्रित्य कार्याणि भवन्तीति न्यायात् सजुष् शब्दान्तत्वमाश्रित्य सस्य रुत्वम् । सजूर्देवैः ।

## १३२. अहन् ८-२-६८

रुरिति वर्तते । स्कोः संयोगाद्योरन्ते च इत्यतः अन्ते इति अनुवर्तते । पदस्येत्यधिक्रियते । अहन् इति लुप्तषष्ठीकं पदम् । पदान्ते वर्तमानस्य अहन् इत्येतस्य नकारस्य रुः आदेशः स्यात् । नलोपः प्रातिपदिकान्तस्येति नलोपस्यापवादः । अहन्+भ्याम्=अहर्भ्यां, वक्ष्यमाणेन सूत्रेण रेफस्य उत्वं भवति ।

## १३३. रोऽसुपि ८-२-६९

रः असुपीति छेदः । अहन् इति अनुवर्तते । असुपीति सुपि नेति प्रसज्यप्रतिषेधः । अहन् इत्यस्य नकारस्य रेफादेशः स्यात् न तु सुपि । रोरपवादः । अहरहः । अहर्गणः ।

## रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् (वा)

अहन् शब्दान्त्यस्य नस्य रूपरात्रिरथन्तरशब्देषु परेषु रुः स्यादिति वक्तव्यम् । रोऽसुपीति रेफस्यापवादः । अहन्+रूपम्=अहर् रूपम्= अहोरूपम् । भोस् भगोस् अघोस् इति सस्य रुत्वे भोर् भगोर् अघोर् इति स्थिते कस् इत्यत्रापि सस्य रुत्वे कर् इति स्थिते ।

## १३४. भो भगो अघो अपूर्वस्य योऽशि ८-३-१७

रोः सुपीत्यतः रोरित्यनुवर्तते । रोरिति उकारानुबन्धविशिष्टस्य रेफस्य ग्रहणम् । भोश्च भगोश्च अघोश्च अश्च भो भगो अघोआः, एते पूर्वे येषामिति बहुव्रीहिः । पूर्वशब्दस्य प्रत्येकं सम्बन्धः । भो भगो अघो पूर्वकस्य अकारपूर्वकस्य च रोः यकारः आदेशः स्यात् अशिपरे । भोय् अत्र । भगोय् अत्र । अघोय् अत्र । कय् आस्ते । भो भगो अघो अपूर्वस्येति किम् ? अग्निरत्र । वायुरत्र । अत्र यत्वं मा भूत् । अशिपरे इति किम् ? भोः कः । रोरित्युकारानुबन्धस्यग्रहणात् प्रातरागमनम् इत्यत्र रेफस्य यत्वं न भवति ।

## १३५. ओतो गार्ग्यस्य ८-३-२०

यस्येति वर्तते। ओकारादुत्तरस्य पदान्तस्य यकारस्य अशिपरे लोपः स्यात्। गार्ग्यग्रहणं पूजार्थम्। भो अत्र। भो इदम्। अघो अत्र। देवाय् इह इत्यादौ लोपः शाकल्यस्येति लोपः। देवा इह। लोपाभावे देवायिह। क आस्ते, कयास्ते।

## १३६. हलि सर्वेषाम् ८-३-२२

भो भगो—इत्यनुवर्तते। यग्रहणं वर्तते। भो भगो अघो अपूर्वस्य यकारस्य लोपः स्यात् हलिपरे सर्वेषां मते। भो हसति। भगो हसति। भो देवाः। अघो याहि। देवा हसन्ति। बाला धावन्ति। हलि किम्? देवा इह, देवायिह। अत्र लोपः शाकल्यस्येति वा लोपः।

## १३७. अतोरोरप्लुतादप्लुते ६-१-११३

ऋतउत् इत्यतः उत् इति, एङः पदान्तादित्यतः अतीति चानुवर्तते। अत इति तपरनिर्देशात् ह्रस्वाकारो गृह्यते। अप्लुतादकारादुत्तरस्य उकारानुबन्ध-विशिष्टस्य रेफस्य अप्लुते अकारे परे उः आदेशः स्यात्। भो भगो—इत्यनेन अकारपूर्वस्य रोः प्राप्तस्य यत्वस्यापवादः। राम र्+अर्च्यः=राम उ अर्च्यः। वृक्ष उ अत्र। आद्गुणः इति गुणे एङः पदान्तादति इति पूर्वरूपे च रामोऽर्च्यः, वृक्षोऽत्र इति रूपं भवति। ननु उत्वे कर्तव्ये पूर्वत्रासिद्धमिति त्रिपादीस्थसूत्र-विहितस्य रुत्वस्यासिद्धत्वात् कथं तस्य उत्वमिति चेत्? रुत्वमाश्रित्य उत्वस्येह विधानादेव असिद्धत्वं नाश्रीयते। यदि रुत्वमसिद्धं स्यात् तदा स्थानित्वेन रोराश्रयणमनर्थकं स्यात्। आश्रयात्सिद्धं भवतीति भावः? अत इति किम्? अग्निरत्र। वायुरत्र। तपरकरणं किम्? वृक्षा अत्र। अतीति किम्? वृक्ष इह। तपरकरणं किम्? वृक्ष आश्रितः। अप्लुतादिति किम्? एहि सुस्रोत ३: अत्र स्नाहि। अत्र दूराद्धूते च इति प्लुतः। ननु अत्र रोः अतः परत्वाभावादेव उत्वप्राप्तिर्नास्तीति किं अप्लुतग्रहणेनेति चेत्? प्लुतस्यासिद्धत्वात् अतः परो भवतीति स्यादेवोत्वम्। अप्लुतात् इति विशेषणे तु विशेषणसामर्थ्यात्

असिद्धत्वं नास्ति । यद्वा असिद्धत्वेन अप्लुतात्परत्वमाश्रित्य इदं सूत्रं न प्रवर्तते इति विशेषणसामर्थ्यात् कल्प्यते । अप्लुते इति किम् ? तिष्ठतु पय अ ३ ग्निदत्त । अत्र आकारस्य प्लुतः विहितः अप्लुते इत्यस्य पूर्ववत् प्रयोजनम्। उकारानुबन्धविशिष्टस्य रेफस्येत्युक्तत्वात् प्रातर् अत्र, पुनर् अव इत्यत्र रेफस्य उत्वं न ।

## १३८. हशि च ६–१–११४

अतोरोरप्लुतादिति पदत्रयम्, ऋत उत् इत्यतः उदिति चानुवर्तते। अप्लुतादवर्णादुत्तरस्य रोः अकारादेशः स्यात् हशि परे । शिवर्+वन्द्यः=शिव उ वन्द्यः । अकारोकारयोः गुणे शिवो वन्द्यः । एवं पुरुषो याति । देवो हसति । मनोरथः । अप्लुतादिति किम् ? सुस्रोता३ः देहि । अत्र न भवति । अत इति किम् ? देवा हसन्ति । रोरित्युकारानुबन्धग्रहणात् भ्रातर्गच्छ इत्यत्र रेफस्योत्वं न भवति ।

## १३९. रोरि ८–३–१४

रः इति षष्ठी । ढोढे लोप इत्यतः लोप इत्यनुवर्तते । रेफस्य रेफे परे लोप : स्यात् । पुनर्+रमते=पुन रमते । प्रात राजा । हरि रम्यः। एषु रेफस्य लोपे सति—

## १४०. ढ्रलोपे पूर्वस्य दीर्घोऽणः ६–३–१११

ढ् च रश्च ढ्रौ, ढ्रौ लोपयतीति ढ्रलोपः तस्मिन् । अथवा ढ्रयोः लोपो यस्मिन् सः ढ्रलोपः तस्मिन् । ढलोपनिमित्तं, रेफलोपनिमित्तं च विवक्षितम्। तच्च निमित्तं ढकाररेफात्मकमेव । ढोढेलोप इत्यत्र रोरि इत्यत्र च ढरेफयोरेव ढ्रलोपनिमित्तत्वागमात् । ढलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परे पूर्वस्य अणो दीर्घः स्यात् । ढलोपे–गूढम्, मूढः, लीढः । रेफलोपे–पुनारमते। प्राताराजा । हरीरम्यः। अण इति किम् ? तृढः । वृढः । ऋकारस्य दीर्घो मा भूत् । मनर् रथः इत्यत्र परत्वात् रोरीति लोपे सति ढ्रलोप इति दीर्घे मनारथः इति स्यादिति नाशंकनीयम् । रोरीत्यस्य परत्वेऽपि, हशि चेत्यपेक्ष्या

पूर्वत्रासिद्धमिति असिद्धत्वात् हशि चेत्युत्वमेव। ततश्च आद्गुणः इति गुणे मनोरथः इत्येव।

### १४१. एतत्तदोः सुलोपोऽकोरनञ् समासे हलि ६–१–१३२

सु इति पृथक्पदं लुप्तषष्ठीकम्। अविद्यमानः ककारः ययोस्तौ अकौ तयोः अकोरिति बहुव्रीहिः। अककारयोः एतत्तच्छब्दयोः सम्बन्धिनः सोः लोपः स्यात् हलि परे। नञ् समासे वर्तमानयोस्तु एतत्तदोः सोः लोपो न। एष ददाति। एष विष्णुः। एष राजा। स शम्भुः। स ददाति। स भुङ्क्ते। एष पठति। स क्रीडति। एतत्तदोरिति किम्? यो ददाति। यो भुङ्क्ते। सोरिति किम्? एतौ गावौ। तौ वृषभौ। द्विवचनप्रत्ययस्य औकारस्य लोपो न भवति। अकोरिति किम्? एषको ददाति। सको भुङ्क्ते। न तु ककार सहितत्वे शब्दान्तरत्वात् सोर्लोपस्य प्राप्तिरेव नेति चेत्? एषकः, सकः इत्यत्र 'अव्यय सर्वनाम्नामकच् प्राक्टेः' इति अकच्। 'तन्मध्यपतितः तद्ग्रहणेन गृह्यते' इति परिभाषया साकच्कस्यापि शब्दान्तरत्वाभावात् लोपप्राप्तिरिति बोध्यम्। अनञ् समासे इति किम्? अनेषो वदति। असो भाषते। हलीति किम्? एषोऽत्र। सोऽवदत्।

इति सन्धि प्रकरणम्

---

## अथ शब्दाधिकारः

### १४२. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १–२–४५

अर्थोऽस्यास्तीत्यर्थवत्। अभिधेयवचनोऽत्रार्थशब्दः विवक्षितः। नपुंसक-लिङ्गानुसारात् शब्दस्वरूपमिति विशेष्यमध्याहार्यम्। अधातुरिति अप्रत्यय इति च तद्विशेषणम्। न धातुः अधातुः, न प्रत्ययः अप्रत्ययः। अप्रत्यय इत्यावर्तते। एकस्य प्रत्यय इत्यस्य प्रत्ययान्त इत्यर्थः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति निषेधो नेह प्रवर्तते। प्रत्ययस्यैव यत्र संज्ञा विधीयते तत्रैव तन्निषेधात्। धातुभिन्नं प्रत्ययभिन्नं प्रत्ययान्तभिन्नं च अर्थवच्छब्दस्वरूपं प्राति-पदिकसंज्ञं स्यात्। डित्थः, कुण्डम्, पीटम् इत्यादीनि। अर्थवदिति किम्? धनं,

यनम् इत्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञा मा भूत्। प्रातिपदिकसंज्ञायां प्रतिवर्णं सुबुत्पत्तिः, नलोपापत्तिः। अधातुरिति किम्? अहन्, धातुनकारस्य लोपो मा भूत्। अप्रत्यय इति किम्? हरिषु, करोषि इत्यत्र सु–सि इति प्रत्ययोः अर्थवत्त्वात् प्रातिपदिकत्वं मा भूत्। प्रातिपदिकत्वे ततः सुबुत्पत्तौ पदत्वे सात्पदाद्योरिति षत्वनिषेधः स्यात्। अप्रत्ययान्त इति किम्? काण्डे, कुड्ये। समुदायस्य प्रातिपदिकत्वे ह्रस्वो नपुंसके प्रातिपदिकस्य इति ह्रस्वः स्यात्।

## १४३. कृत्तद्धितसमासाश्च १–२–४६

कृच्च, तद्धितश्च, समासश्चेति विग्रहः। प्रत्ययग्रहणपरिभाषया कृतद्धितेति तदन्तग्रहणम्। केवलयोः कृत्तद्धितयोः प्रातिपदिकसंज्ञायां प्रयोजनाभावात् संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति निषेधोऽत्र न भवति। कृत्तद्धितान्तयोः प्रत्ययान्तत्वात् पूर्वसूत्रेणाप्राप्तौ इह कृत्तद्धितग्रहणम्। अर्थवदिति प्रातिपदिकमिति चानुवर्तते। अर्थवान् कृदन्तः तद्धितान्तः समासश्च प्रातिपदिकसंज्ञः स्यात्। कृदन्ते–कारकः, कर्ता। हारकः, हर्ता, रामः। तद्धितान्ते–औपगवः, दाशरथिः। समासे–राजपुरुषः, ब्राह्मणकम्बलः। ननु समासग्रहणमिह व्यर्थम्। राजपुरुष इत्यादेः समासस्य पूर्वसूत्रेणैव प्रातिपदिकसंज्ञासिद्धेरिति चेत्? 'सिद्धे सत्यारभ्यमाणो विधिर्नियमाय भवति' इति न्यायेन नियमार्थमावश्यकत्वात्। अर्थवतां समुदायानां समास एव प्रातिपदिकसंज्ञा इति। लोके अर्थबोधकतया पृथक् प्रयुज्यमानानां शब्दानां समुदायस्य प्रातिपदिकसंज्ञा भवति यदि समासस्यैवेति नियमाकारः। तेन वाक्यस्य प्रातिपदिकसंज्ञा न। नियमानाश्रयणे वाक्यस्य धातु प्रत्यय प्रत्ययान्तभिन्नार्थवच्छब्दरूपत्वेन पूर्वसूत्रेण प्रातिपदिकसंज्ञा स्यादेव। तथा च सुपोधातुप्रातिपदिकयोः इति प्रातिपदिकावयवत्वात् सुपः लुक् स्यात्।

## १४४. प्रत्ययः ३–१–१

पञ्चमाध्याय परिसमाप्ति यावत् प्रत्यय शब्दः संज्ञात्वेनाधिक्रियते।

## १४५. परश्च ३–१–२

इदमपि पञ्चमाध्यायपरिसमाप्ति यावत् अधिक्रियते। तेन धातोः प्राति-

पदिकाद्विहितः प्रत्ययः परः सन् भवति इत्यर्थः सिध्यति । यथा-तव्यत्-तव्य-अनीयर् इति धातोः प्रत्ययः परः सन् भवति ।

### १४६. ङ्याप् प्रातिपदिकात् ४-१-१

ङीच आप् च प्रातिपदिकं चेति समाहारद्वन्द्वः । ङी इति ङीप् ङीष् ङीनां प्रत्ययानां सामान्येन ग्रहणम् । आबिति टाप् डाप् चापां प्रत्ययानां ग्रहणम् । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । ङ्यन्तात्, आबन्तात्, प्रातिपदिकात् इति पञ्चमाध्याय परिसमाप्तिं यावत् अधिक्रियते । तेन इत ऊर्ध्वं विधीयमानाः प्रत्ययाः सर्वे ङ्यन्तात्, आबन्तात् प्रातिपदिकाद्वा भवन्ति । तृतीयाध्याये विहिताः प्रत्ययाः धातोर्भवति । चतुर्थपञ्चमयोश्च विहिताः ङ्याप् प्रातिपदिकात् भवन्तीति विवेकः । ननु प्रातिपदिकादित्येव सूत्रमस्तु । ङ्याब्ग्रहणं मास्तु । ऊङ् प्रत्ययान्तात् श्वश्रू शब्दात् सुबादिप्रत्ययोत्पत्त्यर्थम् अवश्यं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषा आश्रयणीया । प्रातिपदिकस्य विहितं कार्यं लिङ्गबोधकप्रत्ययविशिष्टस्यापि भवति इति परिभाषार्थः । तयैव दण्डिनी इत्यादि ङ्यन्तात्, अजा इत्यादि आबन्ताच्च सुबादिप्रत्ययोत्पत्तिर्भविष्यतीति ङ्याब्ग्रहणं व्यर्थमिति चेत् ? ङ्याबन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणम् । तच्च ङ्याब्ग्रहणे सत्येव सिध्यति । अन्यथा विप्रतिषेधे परं कार्यमिति तद्धितस्य प्रथमं प्रवृत्तिः स्यात् । ततश्च लोहिनिका आर्यका इति न सिध्येत्; लोहितशब्दात् 'लोहितान्मणौ' इति स्वार्थिके कनि प्रत्यये पूर्वं प्रवृत्ते, तोपधत्वाभावेन वर्णादनुदात्तात्तोपधात्तो नः इति विहितयोः ङीप् नत्वयोः अप्रवृत्तेः । एवं आर्यशब्दात् पूर्वं स्वार्थिके कनि कन्नन्तात् टापि आकारस्थानिकस्य अकारस्याभावात् उदीचामातः स्थाने इति इत्वविकल्पाप्रवृत्त्या प्रत्ययस्थादिति नित्यमित्वस्य प्रवृत्तेः ।

### १४७. स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योसुप् ४-१-२

प्रत्ययः परश्च ङ्याप् प्रातिपदिकात् इति चाधिकृतम् । सु-औ-जस् । अम्-औट्-शस् । टा-भ्याम्-भिस् । ङे-भ्याम्-भ्यस् । ङसि-भ्याम्-भ्यस् ।

ङस्-ओस्-आम् । ङि-ओस्-सुप् । इत्येकविंशतिः स्वादयः प्रत्ययाः । ङ्यन्तात्, आबन्तात्, प्रातिपदिकाच्च स्वादयः प्रत्ययाः पराः स्युः । ङ्यन्तात्-कुमारी । आबन्तात्—अजा । प्रातिपदिकात्—रामः । सप्तानां त्रिकाणां क्रमेण प्रथमा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी इति संज्ञाः । प्रतित्रिकं क्रमेण त्रयाणां एकवचन- द्विवचन—बहुवचन संज्ञाः ।

### १४८. द्व्येकयोर्द्विवचनैकवचने १–४–२२

द्विशब्देन साहचर्यात् एकशब्दः संख्यावाची । द्व्येकयोरिति भावप्रधानो निर्देशः । द्वित्वैकत्वयोरित्यर्थः । द्वित्वैकत्वयोरर्थयोः द्विवचनैकवचने स्तः । द्वित्वे द्विवचनम् । एकत्वे एकवचनम् । पाचकौ पचतः, पाचकः पचति । प्रायोवादः अयम् । तेन एकस्यामेव व्यक्तौ दाराः, गृहाः इति बहुवचनं साधु । शिष्टप्रयोगः अत्र प्रमाणम् ।

### १४९. बहुषु बहुवचनम् १–४–२१

बहुशब्दः बहुत्वपरः । तेन वैपुल्यवाचिनः बहुशब्दात् तु न बहुवचनम् । बहुत्वं च त्रित्व चतुष्ट्वादि संख्या व्यापकीभूतो धर्मः । बहुत्वे अर्थे बहुवचनं स्यात् । छात्राः पठन्ति । राम इत्यस्य कृदन्तत्वात् कृत्तद्धितेति प्रातिपदिकत्वे प्रथमैकवचने स्वौजसित्यादिना सुप्रत्यये रामस्, ससजुषोरुः इति रुत्वे, खरवसानयोरिति विसर्गे च रामः इति रूपम् । द्विवचने औ प्रत्यये प्रत्यर्थं शब्दनिवेशात् न एकशब्देनानेकार्थस्याभिधानमिति अनेकशब्दप्रयोगे प्राप्ते एकशेषारम्भः । राम राम औ इति स्थिते—

### १५०. सरूपाणामेकशेष एकविभक्तौ १–२–६४

समानं रूपं येषां तानि सरूपाणि तेषाम् । निर्धारणे षष्ठी । वृद्धो यूना तल्लक्षणश्चेदेव इति सूत्रात् एवेत्यस्यापकर्षः । एकश्चासौ शेषश्चेति कर्मधारयः । एकशब्दः संख्यावचनः । शेषशब्दः इतरनिवृत्तिपूर्वकमवस्थानमाह । तेन एकस्य शेषः इतरस्य निवृत्तिः इत्यर्थः सिध्यति । एका चासौ विभक्तिश्च एकविभक्तिः तस्याम् । अत्रैकशब्दः समानार्थः । एकविभक्ताविव्यस्य सरूपाणामित्यत्रान्वयः ।

समानायां विभक्तौ परतः सरूपाणामेव शब्दानाम् एकः शिष्यते। इतरे निवर्तन्ते। राम औ, वृद्धिरेचीति वृद्धिः, रामौ। सरूपाणामिति किम्? लतावृक्षाः। रूपग्रहणं किम्? अर्थभेदेपि यथा स्यात्। अक्षाः। अक्ष शब्दः इन्द्रिये, शकटाङ्गे, विभीतकादौ च वर्तते। पादाः। पाद शब्दोपि कार्षापणे-श्लोकभागे-शरीरावयवे च वर्तते। एकग्रहणं किम्? द्विबह्वोः शेषो मा भूत्। शेषग्रहणं किम्? असति शेषग्रहणे सरूपाणामिति स्थान षष्ठी स्यात् ततश्च एकः आदेशः इति स्यात्। तदा स्वरे दोषो भवति। तदर्थं शेषग्रहणम्। एकविभक्ताविति किम्? पयः पयो जरयति इत्यत्र मा भूत्। एकः प्रथमान्तः, अन्यो द्वितीयान्त इति भिन्नविभक्तिकत्वम्। सरूपाणामेवेति एवकारः किम्? अस्ति मातृशब्दः जननीवाची परिच्छेत्तृवाची च। तयोः एकशेषो मा भूत्। मातृभ्यामित्यादौ क्वचित्सारूप्येपि औजसादिषु मातरौ मातारौ इति वैरूप्यदर्शनात् एकशेषो न भवति। अनैमित्तिकोयम् एकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते। द्वन्द्वापवादः। असति ह्येकशेषे सुबुत्पत्तौ द्वन्द्वः स्यात्।

## १५१. प्रथमयोः पूर्वसवर्णः ६-१-१०२

अकः सवर्णे इत्यतः अकः दीर्घः इति, इको यणचीत्यतः अचीति चानुवर्तते। एकः पूर्वपरयोरित्यधिकृतम्। प्रथमा च प्रथमा च प्रथमे तयोः। अवयवषष्ठी। प्रथमा द्वितीये सुब्विभक्ती विवक्षिते। अकः प्रथमाद्वितीया-विभक्त्योः अचि परे पूर्वपरयोः पूर्वसवर्णदीर्घः एकः आदेशः स्यात्। अकःसवर्ण-दीर्घापवादः। रामाः, बालाः. मालाः। अक इति किम्? नौ+औ=नावौ अचीति किम्? वृक्षः।

राम+औ इत्यत्रापि अनेन पूर्वसवर्णदीर्घे प्राप्ते—

## १५२. नादिचि ६-१-१०४

न आदिति छेदः? आदिति पञ्चमी। पूर्वसवर्ण इत्यनुवर्तते। अवर्णात् इचि परे पूर्वसवर्णदीर्घः न स्यात्। वृक्षौ, माले, फले। अनेन पूर्वसवर्णदीर्घस्य निषेधः। अतः वृद्धिरेचीति वृद्धिरेव रामौ। बहुवचने एकशेषे राम+जस्

जकारस्येत्संज्ञया निवृत्तौ राम+अस् इत्यवस्थायाम् अकः सवर्णे दीर्घ इति दीर्घं अपवादत्वात् बाधित्वा अतोगुणे इति पररूपे प्राप्ते परत्वात् प्रथमयोः पूर्वसवर्ण इति सवर्णदीर्घः। रामास् रुत्वविसर्गयोः रामाः इति रूपम्। अतोगुणे इति पररूपं 'पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन अकः सवर्णे इति दीर्घमेव बाधते न तु प्रथमयोरिति पूर्वसवर्णदीर्घमपि।

## १५३. एङ् ह्रस्वात्सम्बुद्धेः ६-१-६९

एङ् च ह्रस्वश्च अनयोः समाहारः एङ्ह्रस्वं तस्मात्। सम्बुद्धेरिति अवयवषष्ठी। लोपो व्योर्वलि इत्यतः लोप इति, हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यतः हल् इति चानुवर्तते। लुप्यते इति लोपः। सम्बुद्धेः प्रत्ययत्वात् अङ्गस्याक्षेपः। आक्षिप्ते अङ्गे एङ् ह्रस्वयोः विशेषणत्वम्। तदन्तविधिः। लक्ष्यानुरोधात् सम्बुद्ध्याक्षिप्तस्याङ्गस्य सम्बुद्ध्यवयवहलि अन्वयः न तु सम्बुद्धौ। एङन्तात् ह्रस्वान्ताच्च अङ्गात् परं सम्बुद्ध्यवयवभूत हल् लुप्यते। अग्ने+स्=अग्ने। वायो+स्=वायो। हे राम+स्=हे राम। एङ् इति किम्? हे हरे। हे विष्णो। परत्वात् नित्यत्वाच्च पूर्वं गुणे कृते ह्रस्वात्परत्वाभावेन न स्यात्। अत्रापि सम्बुद्धिलोपार्थमेङ् ग्रहणम्। अङ्गादिति किम्? हे कतरत्। कतर-शब्दात् नपुंसकलिङ्गात् सम्बुद्धिः सुः, तस्य अद्ड्डतरादिभ्यः पञ्चभ्यः इति अद्ड् आदेशः। डकारः इत्, डित्वात् टेः रेफादकारस्य लोपः, हे कतर+अत् इति स्थिते तकारस्य हलः सम्बुद्ध्यवयवत्वेन लोपः स्यात्। तन्माभूदित्येवमर्थम् अङ्गग्रहणत्। सति तु तस्मिन् यच्चाङ्गं कतर न तत् ह्रस्वान्तं यच्च ह्रस्वान्तं कतर न तत् अङ्गमिति ह्रस्वान्ताङ्गात्परत्वं हलो नास्तीति न दोषः। अङ्गस्य सम्बुद्ध्यवयव हलि अन्वयात् हे ज्ञानम् इत्यत्र मकारस्य लोपः सिध्यति। राम+अम्।

## १५४. अमि पूर्वः ६-१-१०७

अक इति अचीति चानुवर्तते। अमीति अधिकरणसप्तमी। अमि विद्यमाने अचीति लभ्यते। अकः अमिविद्यमानेऽचि परे पूर्वरूपमेकादेशः स्यात्। पूर्वसवर्णदीर्घापवादः। रामम्। हरिम्। वायुम्। अचीति किम्?

अमि परे पूर्वरूपमित्युक्तौ अमो मकारसहितस्य पूर्वरूपं स्यात्। द्वितीया बहुवचने शस् प्रत्यये प्रथमयोरिति पूर्वसवर्णदीर्घे रामास् इति स्थिते—

### १५५. तस्माच्छसो नः पुंसि ६-१-१०३

तस्मादित्यनेन अनन्तरसूत्रकृतः पूर्वसवर्णदीर्घः परामृश्यते। शस इति अवयवषष्ठी। कृतपूर्वसवर्णदीर्घादुत्तरस्य शसवयव सकारस्य नकारादेशः स्यात् पुंसि। रामान्। हरीन्। वायून्। कृतपूर्वसवर्णदीर्घादिति किम्? गो शब्दात् शस् प्रत्यये गाः इत्यत्र मा भूत्। शस इति किम्? वृक्षाः। बालाः। जसः सस्य मा भूत्। पुंसि इति किम्? रमाः। नदीः।

### १५६. रषाभ्यां नो णः समानपदे ८-४-१

समानं च तत् पदं चेति कर्मधारयः। समानशब्दः एकपर्यायः। निमित्तनिमित्तिनोश्चायमाधारनिर्देशः। निमित्ते रषौ। निमित्ती नकारः। एकं पदे स्थिताभ्यां रेफषकाराभ्याम् उत्तरस्य नस्य णकारादेशः स्यात्। एकपदत्वं च अखण्डत्वमिह विवक्षितम्। आस्तीर्णम्। पूर्णम्। उष्णम्। पुष्णाति। समानपदे इति किम्? अग्निर्नयति। वायुर्नयति।

**ऋवर्णान्नस्य णत्वं वाच्यम् (वा)**

तिसृणाम्, चतसृणाम्, पितृणाम्।

### १५७. अट्कुप्वाङ्नुम्व्यवायेऽपि ८-४-२

पूर्वसूत्रमनुवर्तते। व्यवधानेऽपि प्राप्त्यर्थमिदं सूत्रम्। अट् च कुश्च पुश्च आङ् च नुम् च अट्कुप्वाङ्नुमः तैः व्यवायः तस्मिन्। अट् प्रत्याहारः, कु कवर्गः, पु पवर्गः। अट् प्रत्याहारान्तर्भूतत्वात् अटा सिद्धे आङ् ग्रहणं यद्यपि पृथक् न कार्यं तथापि आङः पदत्वेन पदव्यवायेऽपि इति सूत्रेण णत्वनिषेधं बाधितुं पुनरिह आङ् ग्रहणम्। प्रयोगानुसारात् नुम् इत्यस्य लक्षणया अनुस्वार इत्यर्थ विवक्षितः। व्यवायः=व्यवधानम्। अट् कवर्ग पवर्ग आङ् अनुस्वार- इत्येतैः व्यस्तैः यथासंभवं मिलितैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः आदेशः स्यात् समानपदे। अड् व्यवाये—करणम्; हरणम्, हरिणा, गुरुणा। कवर्गे

व्यवाये—अर्केण, मूर्खेण, गर्गेण, अर्घेण। पवर्ग व्यवाये—दर्पेण, रेफेण, गर्भेण, चर्मणा, वर्मणा। आङ् व्यवाये—पर्याणद्धम्, निराणद्धम्। अनुस्वार व्यवाये—बृंहणम्, तृंहणम्। नुमित्यस्य अनुस्वारार्थत्वाश्रयणेन बृंहणमित्यत्र णत्वं भवति। समानपदमित्यनेन अखण्डस्यैव पदस्य विवक्षणात् रामनाम इत्यादौ न णत्वम्। अनेन सूत्रेण रामान् इत्यत्र णत्वे प्राप्ते—

## १५८. पदान्तस्य ८–४–३७

रषाभ्यां नोण इति, न भाभूपूकमिगमित्याप्यीवेपाम् इत्यतः नेति चानुवर्तते। अट्कुप्वाङिति प्राप्तस्य णत्वस्य निषेधार्थमिदम्। रषाभ्यां परस्य पदान्तस्य नस्य णकारादेशो न स्यात्। रामान्, हरीन्, गुरून्।

## १५९. यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १–४–१३

प्रत्ययस्य विधिः। विधीयते इति विधिः। तत् आदि यस्य तत् तदादि। यस्मात् धातोः प्रातिपदिकाद्वा प्रत्ययो विधीयते तदादि शब्दरूपं तस्मिन् प्रत्यये परे अङ्गसंज्ञं स्यात्। यः प्रत्ययः विधीयते तस्मिन्नेव प्रत्यये परे इति प्रत्यासत्तिलभ्यम्। तृतीयैकवचने राम इत्यस्मात् टा प्रत्यये राम इत्यस्याङ्गसंज्ञा। तदादि इत्युक्तत्वात् भवामि इत्यादौ भूधातोः प्रत्ययविधानेपि भव इति विकरणप्रत्ययविशिष्टस्यापि अङ्गत्वम्। तदादि इत्यनुक्तौ तु विकरणविशिष्टस्य न स्यात्, ततो मि प्रत्ययस्य अविहितत्वात्। विधिरिति किम्? स्त्री इयती, अत्र इयत् इति प्रत्यये परे मा भूत्। विधिग्रहणे स्त्री शब्दात् इयदिति प्रत्ययस्याविधानात् न दोषः। प्रत्यये परे इति किम्? प्रत्ययविशिष्टस्य मा भूत्। राम इत्यस्य व्यपदेशिवद्भावेन तदादित्वमाश्रित्य अङ्गसंज्ञा सुलभा।

## १६०. अङ्गस्य ६–४–१

अधिकारोयम् आसप्तमाध्यायपरिसमाप्तेः। इतः ऊर्ध्वं विधीयमानेषु कार्येषु अङ्गस्येत्यस्य सम्बन्धो वेदितव्यः।

## १६१. टाङसिङसामिनात्स्याः ७-१-१२

अङ्गस्येत्यधिकृतं पञ्चम्यन्ततया विपरिणम्यते। अतोभिसऐस् इत्यतः अत इति पञ्चम्यन्तमनुवर्तते। अस्य अङ्गस्येत्यत्र विशेषणत्वम्। तदन्तविधिः। तपरनिर्देशात् ह्रस्वस्यैव ग्रहणम्। इनश्च आच्च स्यश्च इनात्स्याः। यथासंख्य-परिभाषया यथासंख्यमित्यर्थलाभः। ह्रस्वाकारान्तादङ्गात् परेषां टा-ङसि-ङसां क्रमात् इन-आत्-स्य आदेशाः स्युः। राम इन, आद्गुणः इति गुणे अट्कुप्वाङ् इति णत्वे च रामेण। बालेन, बालात्, बालस्य। अत इति किम्? पति+आ=पत्या, सखि+आ=सख्या। तपरकरणं किम्? रमया।

## १६२. सुपि च ७-३-१०२

अतो दीर्घो यञीत्यनुवर्तते। यञीति सुपीत्यस्य विशेषणम्। यस्मि-न्विधिरिति परिभाषया यञादिरित्यर्थो लभ्यते। //ह्रस्वाकारान्तस्याङ्गस्य यञादौ सुपि परे दीर्घः आदेशः स्यात्।" राम+भ्याम्=रामाभ्याम्। अत इति किम्? हरिभ्याम्। यञादाविति किम्? बालस्य। तृतीया बहुवचने भिस् प्रत्यये राम+भिस् इति स्थिते—

## १६३. अतोभिस ऐस् ७-१-९

अत इति पञ्चम्यन्तम्। अधिकृतस्य अङ्गस्येत्यस्य पञ्चम्यन्ततया विपरि-णामः। अत इति तद्विशेषणम्। तदन्तविधिः। ह्रस्वाकारान्तादङ्गात् परस्य भिसः ऐस् आदेशः स्यात्। अनेकाल्त्वात् सर्वादेशः। रामैस्, रुत्व विसर्गौ रामैः। अत इति किम्? हरिभिः, गुरुभिः। तपरकरणं किम्? मालाभिः। चतुर्थीविभक्त्येकवचने ङे प्रत्यये, ङकारस्य लशक्वतद्धिते इति इत्संज्ञायां राम+ए।

## १६४. ङेर्यः ७-१-१३

ङेरिति चतुर्थ्येकवचनस्य ग्रहणं न तु सप्तम्येकवचनस्य। अत इति वर्तते। अकारान्तादङ्गात् परस्य ङे इत्यस्य य इत्यादेशः स्यात्। राम य इति स्थिते—'य' इत्यादेशस्य यञ्त्वेऽपि सुप्त्वाभावात् सुपि चेति दीर्घे अप्राप्ते—

## १६५. स्थानिवदादेशोऽनल्विधौ १-१-५६

स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यं आदेशे न प्राप्नोति इत्ययमादेशः आरभ्यते। यस्य स्थाने किंचिद्विधीयते सः स्थानी। यो विधीयते सः आदेशः। स्थानिना तुल्यः स्थानिवत्। विधीयते इति विधिः = कार्यम्। अलाश्रयोविधिः अल्विधिः। न अल्विधिः अनल्विधिः तस्मिन्। अलिति वर्णपर्यायः। अल् चेह स्थानिभूतः स्थान्यवयवश्च गृह्यते। आदेशः स्थानिवत् = स्थानिना तुल्यो भवति, स्थानि धर्मको भवति। स्थानिभूतालाश्रये स्थान्यवयवभूतालाश्रये च कार्ये कर्तव्ये आदेशः स्थानिवन्न भवति। अलाश्रयेति सामान्यवचनात् अला विधिः, अलःपरस्य विधिः अलोविधिः, अलिविधिः सर्वश्चासौ गृह्यते। धात्वादेशः धातुवद्भवति-अस्तेर्भूः, ब्रुवो वचिः धातुत्वात् धातोरिति विहिताः तव्यदादयः प्रत्ययाः भवन्ति; भवितव्यम्, वक्तव्यम्। अङ्गादेशः अङ्गवद्भवति–केन, काभ्यां, कः किमः कादेशे अङ्गाश्रयाः इन दीर्घ ऐसादेशाः भवन्ति। कृदादेशः कृद्वद्भवति–प्रकृत्य, प्रहृत्य क्त्वाप्रत्ययस्य कृतः ल्यबादेशे सति कृत्प्रत्ययनिमित्तः ह्रस्वस्यपितिकृतितुक् इति तुगागमः भवति। तद्धितादेशः तद्धितवद्भवति–दाधिकम्, दध्नः, परस्य तद्धितस्य ठकः इकादेशे तद्धितत्वमाश्रित्य कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञा भवति। सुबादेशः सुब्वद्भवति–वृक्षाय, बालाय, यादेशस्य सुप्त्वेन सुपि चेति दीर्घः भवति। तिङादेशः तिङ्वद्भवति–अकुरुताम्, अकुरुतम् तसः थस्य च स्थाने ताम् तम् आदेशे सति तिङ्त्वात् सुप्तिङन्तं पदमिति पदसंज्ञा भवति। पदादेशः पदवद्भवति–ग्रामो वः, जनपदो नः बहुवचनस्य वस् नसौ इति वस् नस् आदेशे पदान्तत्वप्रत्युक्तः रुः भवति। अल्विधौ स्थानिवत्वं न। अलाविधौ–व्यूढोरस्केन, अत्र सोपदादाविति विसर्जनीयस्य स्थाने विहितस्य सकारस्य विसर्गत्वमाश्रित्य (विसर्गस्याट् प्रत्याहारे उपदेशात्) अड्व्यवाये इति णत्वं प्राप्तं न भवति। अलः परस्य विधौ–द्यौः, दिवऔदिति वकारस्थानिकस्य औकारस्य स्थानिवद्भावेन हल्त्वात् ततः परस्य सोः हल्ङ्याभ्यो–इति लोपः प्राप्ते न भवति। अलो विधौ–

द्युकामः, दिव उदिति वकारस्थानिकस्य उकारस्य स्थानिवद्भावेन वकारत्वात् लोपोव्योर्वलि ति प्राप्तो लोपो न भवति । अलिविधौ–क इष्टः, यज् धातोः क्तः यकारस्थानिकस्य सम्प्रसारणस्य इकारस्य स्थानिवत्वेन हशत्वात् को यष्टेत्यत्रेव हशि चेति प्राप्तमुत्वं न भवति । स्थान्यलाश्रये कार्ये नेति कथनात् रामाय इत्यत्र यञादि सुबाश्रयस्य सुपि चेति दीर्घस्य आदेशगतयकाररूपालाश्रयत्वेपि स्थान्यलाश्रयत्वाभावात् स्थानिवद्भावो भवत्येव । ननु इत्यत्र नायकनीञ् धातोः ण्वुलि तस्याकादेशे नीति ईकारस्य वृद्धौ नै अक इत्यत्र अकादेशस्य स्थानिवत्वेन ण्वुल् परत्वेन अच् परत्वाभावात् आयादेशो न स्यादिति चेत्–मैवम् । अनेन सूत्रेण स्थानिप्रयुक्तं यत्कार्यं शास्त्रीयं तदेवातिदिश्यते, न तु अशास्त्रीयमपि । अयादेशाभावो न शास्त्रीय इति न तस्यातिदेशः । स्थानिनि इति यद्भवति शास्त्रीयं कार्यं तदेव आदेशेपि भवतीति पर्यवसितोर्थः । लक्ष्यानुरोधात् एवमेव व्यवस्था । स्थानिवदिति वत् करणं किमर्थम् ? स्थानी आदेशस्य संज्ञा मा भूत् स्वाश्रयमपि यथा स्यात् । आङो यमहनः इति विहितमात्मनेपदम् आवधिष्ट, आहत उभयत्रापि भवति । स्थानीति सम्बन्धिशब्दमहिम्नैव आदेश एव स्थानिवदित्यर्थे सिद्धे पुनरादेशग्रहणम् आनुमानिकस्यापि आदेशस्य स्थानिवद्भावो यथा स्यात् तेन पचतु इत्यस्य पदत्वसिद्धिः । अनल्विधाविति किम् ? व्यूढोरस्केन, द्यौः, पन्थाः, सः, द्युकामः, क इष्टः, स इष्टः । अत्र स्थानिवद्भावो मा भूत् । स्थान्यलाश्रयविधौ इतिवत् स्थान्यवयवालाश्रयविधौ इति किमर्थम् ? प्रतिदीव्य ? क्त्वादेशस्य य इत्यस्य स्थानिवत्वेन वलाद्यार्धधातुकत्वात् आर्धधातुकस्येड्वलादेरिति प्राप्तः इडागमः मा भूत् । वल्त्वं स्थान्यवयवभूतम् । अतः इडागमः स्थान्यवयवभूतालाश्रयः ।

## १६६. अचः परस्मिन् पूर्वविधौ १-१-५७

अलाश्रयविधावपि स्थानिवद्भावार्थं सूत्रमिदम् । स्थानिवदादेश इति अनुवर्तते । अचः इत्येतत् आदेश इत्यत्रान्वेति अचः आदेश इति । परस्मिन्निति निमित्तसप्तमी । परनिमित्तके इत्यर्थः, तस्य आदेशो विशेषणत्वम् । विधीयते

इति विधिः—कार्यम् ? पूर्वस्य विधिः पूर्वविधिः। स्थान्यपेक्षया पूर्वत्वं विवक्षितम्। आदेशेन स्थानिनः अपहारेपि भूतपूर्वगत्या स्थानिपूर्वत्वस्य सम्भवात्। पूर्वत्वं च व्यवहिताव्यवहित साधारणम्। परनिमित्तः अजादेशः स्थानिभूतादचः पूर्वस्य कार्ये कर्तव्ये स्थानिवत्स्यात्। गणयति—गणधातुरदन्तः ततो णिच्; अतोलोपः इति धात्वन्तस्य अकारस्य लोपः। अत उपधाया इति णिचं निमित्तीकृत्य गकारोत्तरस्य अकारस्य प्राप्ता वृद्धिः अल्लोपस्य स्थानिवत्वेन उपधात्वभङ्गात् न भवति। अत उपधाया इति वृद्धेरलाश्रयत्वात् न पूर्वसूत्रेण सिद्धिः। वृद्ध्यभावस्य अशास्त्रीयत्वेपि स्थानिवद्भावः, अनेन सूत्रेण अशास्त्रीयस्याप्यतिदेशस्याङ्गीकारात्। अच इति किम् ? प्रश्नः। पृच्छेः नङ् प्रत्यये-च्छ्वोः शूडनुनासिके च इति छकारस्य विहितः शकारादेशः छे चेति तुकि कर्तव्ये स्थानिवत् मा भूत्। परनिमित्तः इति किम् ? युवती जाया यस्य सः, जायाया निङ् इति निङ् लोपो व्योर्वलीति यकारस्य लोपे कर्तव्ये स्थानिवत् मा भूत्। पूर्वविधावति किम् ? हे गौः, अचोञ्णिति इति वृद्धिः, परस्य सम्बुद्धिहलः लोपे कर्तव्ये स्थानिवन्मा भूत्। स्थानिभूतादचः पूर्वस्येति विवक्षणात् वैयाकरणः, सौवश्वः इति सिध्यति। अन्यथा व्याकरणमधीते, स्वश्वस्येदम् इत्यर्थे अणि न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् इति इकारस्थानिकात् उकारस्थानिकाच्च यणादेशात् पूर्वं ऐजागमे छ्वोः स्थानिवद्भावेन ऐचोरायावौ स्याताम्। आदेशात् यणः पूर्वत्वेऽपि यण् स्थानिभूतादचः पूर्वत्वं नास्तीति नात्र स्थानिवद्भावः। पूर्वविधिरित्यत्र पूर्वस्य विधिः इतिवत् पूर्वस्माद्विधिः पूर्वविधिरित्यपि आश्रित्य पूर्वस्मात् परस्य कार्ये कर्तव्येऽपि अजादेशः स्थानिवद्भवतीति क्वचित् आश्रीयते। अन्यथा तन् धातोर्लटि तन्वन्ति इत्यत्र तन् उ अन्ति, उकारस्य यणि तन् व् अन्ति इति स्थिते वलादेरार्धधातुकस्य इट् स्यात्। यण् स्थानिभूतादुकारात्पूर्वः यः नकारः तस्मात्परस्य वस्य इटि कर्तव्ये स्थनिवत्वे तु वलादित्वहान्या इण् न भवति। पूर्वस्मात्परस्य कार्ये कर्तव्ये स्थानिवद्भावः अनित्यः तेन हे गौरित्यत्र स्थानिवत्वाभावात् सम्बुद्धिलोपो न।

## १६७. न पदान्त द्विर्वचन वरे यलोपस्वर सवर्णानुस्वारदीर्घ जश्चर्विधिषु १-१-५८

स्थानिवद्भावेन प्राप्तातिप्रसक्तिपरिहाराय स्थानिवद्भाव निषेधवचनमिदमारभ्यते । पदान्तश्च द्विर्वचनं च वरे च यलोपश्च स्वरश्च सवर्णश्च अनुस्वारश्च दीर्घश्च जश्च चर्चेति द्वन्द्वः । तेषां विधयः । विधिशब्दः प्रत्येकमन्वेति । पदान्तविधौ, द्विर्वचनविधौ इत्यादि । पदस्य अन्तः पदान्तः पदचरमावयवः । पदचरमावयवे, विधौ इत्यर्थः । वरे इत्यनेन वरे परे योऽजादेशः सः विवक्षितः । विधिशब्दः भावसाधनः कर्मसाधनश्च । यथायोगं क्वचित् भावसाधनः आश्रीयते, क्वचिच्च कर्मसाधनः । द्विर्वचने यलोपादौ च भावसाधनः द्विर्वचनस्यैव यलोपादेरेव च विधातव्यत्वात् । तस्य कार्यान्तराविधानात् । पदान्तविधौ वरेविधावपि कर्मसाधनः । व्यवस्थितस्य पदान्तस्य कार्यान्तरविधानात् वरे परे अजादेश विधानाच्च । स्थानिवदादेशः, अचः परस्मिन् इत्यनुवर्तते । पदान्तविधौ द्विर्वचनविधौ वरे परे अजादेशविधौ यलोपविधौ स्वरविधौ सवर्णविधौ अनुस्वारविधौ दीर्घविधौ जश्विधौ चर्विधौ च परनिमित्तोऽजादेशः स्थानिवन्न स्यात् । पदान्तविधौ—कौ स्तः, कानि सन्ति । श्नसोरल्लोपः इति अल्लोपः पूर्वस्य आवादेशे, यणादेशे च कर्तव्ये स्थानिवन्न भवति । द्विर्वचनविधौ—दध्य् अत्र मध्व् अत्र । परनिमित्तः यणादेशः पूर्वस्य धस्य द्वित्वे कर्तव्ये स्थनिवन्नभवति । वरे विधौ—यायावरः । याधातोर्यङन्तात् वरच् प्रत्यये यायाय वर अतो लोपः इति यङोऽकारस्य लोपे, लोपो व्योर्वलि इति यकारस्य लोपे याया वर इति स्थिते वर निमित्तः अल्लोपः पूर्वस्य आकारस्य आतो लोप इटि चेति लोपे कर्तव्ये स्थानिवन्न भवति । यलोपविधौ—कण्डूतिः । कण्डूयतेः क्तिनि अतोलोपः परनिमित्तकः पूर्वस्य यकारस्य लोपोव्योर्वलीति लोपे कर्तव्ये स्थानिवन्न भवति । स्वरविधौ—चिकीर्षकः । चिकीर्ष इति सन्नन्तात् ण्वुलि तस्य अकादेशे सनोऽकारस्य अतोलोपः परनिमित्तः पूर्वस्येकारस्य लितीत्युदात्तस्वरे कर्तव्ये स्थानिवन्न भवति । सवर्णविधौ—पादमाचष्टे पादयति ततः क्विपि पात् इति रूपम् । पात् हसति

इत्यत्र परनिमित्तः अल्लोपः पूर्वस्मात्परस्य हकारस्य झयोहोऽन्यतरस्यामिति पूर्वसवर्णे कर्तव्ये स्थानिवन्न भवति । अनुस्वारविधौ–शिंषन्ति । शिषॢ धातोः लिटि झि प्रत्यये झोन्तः इत्यन्तादेशे श्नम् विकरणप्रत्यये शिनष् अन्ति परनिमित्तः श्नसोरल्लोपः इति अल्लोपः पूर्वस्य नकारस्य नश्चापदान्तस्य झलि इति अनुस्वारे कर्तव्ये स्थानिवन्न भवति । दीर्घविधौ–प्रतिदीव्ना । प्रतिदिवन् शब्दात् टा प्रत्यये प्रतिदिवन् आ, अल्लोपोनः इति परनिमित्तः अल्लोपः पूर्वस्य दकारादिकारस्य हलि चेति दीर्घे कर्तव्ये स्थनिवन्न भवति । जश्विधौ–सग्धिः । अद् धातोः क्तिन् तस्य घसॢ आदेशे, उपधालोपे, सलोपे, तकारस्य धत्वे च परनिमित्तः घसिभसोर्हलि इति उपधालोपः, पूर्वस्य घकारस्य झलां जश् झशीति जश्त्वे कर्तव्ये स्थानिवन्न भवति । ततः समाना ग्धिः, समानशब्दस्य सभावे सग्धिरिति भवति । चर्विधौ–जक्षतुः । घसेर्लिटि अतुसि द्वित्वे, अभ्यासकार्ये उपधालोपे चर्त्वे सस्य षत्वे जक्षतुः । अत्र जघ्स् अतुस् इति स्थिते परनिमित्तः गमहनजनखनघसां लोपः क्ङित्यनङि इति उपधालोपः पूर्वस्य घकारस्य खरि चेति चर्त्वे कर्तव्ये स्थानिवन्न भवति । स्वरदीर्घयलोपेषु विधिषु लोपरूप एवाजादेशः न स्थानिवत् अन्यरूपः अजादेशः स्थानिवदेव लक्ष्यानुसारात् । तेन गिर्योः इत्यत्र यणादेशस्य स्थानिवत्वेन हलि चेति दीर्घो न भवति । वाय्वोरित्यत्र यणादेशस्य स्थानिवत्वेन लोपो व्योर्वलीति यकारस्य लोपो न भवति । ततश्च प्रकृते स्थानिवद्भावेन यादेशस्य सुस्वात् यञादि सुप्परकत्वमाश्रित्य रामाय इति रूपं भवति । रामाभ्याम् पूर्ववत् दीर्घः । चतुर्थी बहुवचने भ्यस् प्रत्यये राम भ्यस्, सुपि चेति दीर्घे प्राप्ते–

### १६८. बहुवचने झल्येत् ७–३–१०३

अतो दीर्घ इत्यतः अत इति सुपि चेत्यतः सुपीति चानुवर्तते । झलीति सुपीत्यत्र विशेषणम् । तदादिलाभः । ह्रस्वाकारान्तस्य अङ्गस्य बहुवचने झलादौ सुपि परे एकारः आदेशः स्यात् । रामेभ्यस्, रुत्वविसर्गयोः रामेभ्यः । वृक्षेभ्यः । बहुवचने इति किम् ? रामाभ्याम् । झलीति किम् ? वृक्षाणाम् । सुपि किम् ? पचध्वम् । ङसि प्रत्यये ङस्य, इकारस्य चेत्संज्ञालोपयोः राम

अस्, टाङसिङसामिनात्स्याः इति आत् आदेशे अकः सवर्णे दीर्घः रामात् ? झलां जशोन्ते इति नित्यं जश्त्वे वावसाने इति चर्त्वे विकल्पे रामात्, रामाद् इति रूपद्वयम्। रामाभ्याम्। रामेभ्यः पूर्ववत्। ङस् प्रत्यये तस्यं टाङसिङसामिति स्यादेशे रामस्य। षष्ठी द्विवचने ओस् प्रत्यये राम ओस्।

## १६९. ओसि च. ७-३-१०४

अत इति वर्तते। बहुवचने झल्येत् इत्यतः एदित्यनुवर्तते। ह्रस्वाकारान्तस्य अङ्गस्य ओसि परे एकारः आदेशः स्यात्। रामे अस्, अयादेशे रामयोस्, रुत्वविसर्गयोः रामयोः।

आम् प्रत्यये राम आम्—

## १७०. ह्रस्वनद्यापो नुट् ७-१-५४

ह्रस्वश्च नदी च आप् च ह्रस्वनद्याप् तस्मात्। अधिकृतस्य अङ्गस्येत्यस्य पञ्चम्यन्ततया विपरिणामः। तत्र ह्रस्वनद्याप इति विशेषणम्, तदन्तविधिः। आमि सर्वनाम्नः सुट् इत्यतः आमीति अनुवर्तते। तस्मादित्युत्तरस्येति परिभाषा आमीति सप्तम्याः षष्ठ्यन्ततां कल्पयति। ह्रस्वान्तात् नद्यन्तात् आबन्ताच्चाङ्गादुत्तरस्य आमः नुट् आगमः स्यात्। नुट् टित्वात् आमः आद्यवयवः सन् भवति। राम नाम इति जाते—

## १७१. नामि ६-४-३

नाम् इति षष्ठी बहुवचनम् आगतनुट्कं गृह्यते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इत्यतः दीर्घ इत्यनुवर्तते। दीर्घश्रुत्या च अचश्चेति परिभाषया अच इत्युपस्थितम्। तेन चाङ्गं विशेष्यते। तदन्तविधिः। अजन्तस्य अङ्गस्य दीर्घः स्यात् नामि परे। बालानाम्, अग्नीनाम्, वायूनाम्, कर्तॄणाम्। राम + नाम्, अनेन दीर्घे अट्कुप्वाङिति णत्वं रामाणाम्। ननु राम+नाम् इति स्थिते नामीत्यपेक्षया सुपिचेति सूत्रस्य परत्वेन विप्रतिषेधे परं कार्यम् इति नियमात् सुपि चेत्येव दीर्घो न्याय्यः; इति चेत्?

अस्ति '**संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति**' परिभाषा।

संनिपातः—संश्लेषः लक्षणं—निमित्तं यस्य सः। विधिः—कार्यम्। तं संनिपातं विहन्तीति तद्विघातः। संनिपात निमित्तं कार्यं, संनिपात विघातकं प्रति स्वयं निमित्तं न भवति। उपजीवकम् उपजीव्यस्य विघातकं न भवितुमर्हति इति परिभाषार्थः। तथा च ह्रस्वान्तमङ्गं तदुत्तरनामं चाश्रित्य प्रवृत्तो नुट् ह्रस्वान्ताङ्गविघातकं सुपिचेति दीर्घशास्त्रं प्रति स्वयं निमित्तं न भवितुमर्हति। इति सुपिचेति दीर्घो न प्रवर्तते इति नामीत्यनेनैव दीर्घः युक्तः। यद्यपि नामीति दीर्घप्रवृत्तावपि संनिपातपरिभाषा विरोधः अस्ति तथापि नामीति सूत्रारम्भसामर्थ्यात् परिभाषा बाध्यते। सप्तम्येकवचने ङिप्रत्यये राम+इ आद्गुणः गुणे रामे। रामयोः पूर्ववत्। सप्तमी बहुवचने सु प्रत्यये राम+सु, बहुवचने झल्येदिति एत्वे राम सु—

## १७२. अपदान्तस्य मूर्धन्यः ८–३–५५

अपदान्तस्य इति मूर्धन्य इति च आपादपरिसमाप्तेः अधिक्रियते। मूर्धनि भवो मूर्धन्यः।

## १७३. इण् कोः ८–३–५९

इण् इति प्रत्याहारः, कुः कवर्गः। इण् च कुश्चेति समाहारद्वन्द्वः। इदमपि उत्तरत्राधिक्रियते।

## १७४. आदेशप्रत्ययोः ८–३–५९

सहेः साडः स इति सूत्रात् स इति षष्ठ्यन्तमनुवर्तते। अपदान्तस्य मूर्धन्यः, इण् कोरिति चाधिक्रियते। आदेशश्च प्रत्ययश्च आदेशप्रत्ययौ तयोः। एकापि षष्ठी विषयभेदात् भिद्यते। आदेशे समानाधिकरणार्था, प्रत्यये अवयवार्थिका। इण् कवर्गाभ्यां परस्य, अपदान्तस्य, आदेशभूतस्य सकारस्य प्रत्ययावयवस्य सकारस्य च मूर्धन्यः आदेशः स्यात्। विवृताघोपस्य सस्य मूर्धस्थानकः तादृश एव षः भवति। आदेशस्य—सिषेव, विषेहे। प्रत्ययावयवस्य—बालेषु, अग्निषु, वायुषु, पितृषु, वाक्षु ? इण् कोरिति किम् ? रामस्य अपदान्तस्येति किम् ? हरिस् तत्र। आदेशभूतस्येत्युक्तत्वात् तिस्रः, तिसृणामित्यादौ आदेशा-

वयवस्य षत्वं न भवति । प्रत्ययावयवस्येत्युक्तत्वात् रामेषु, करिष्यति इत्यादौ प्रत्ययावयवस्य सस्य षत्वं भवति । अनेन षत्वे रामेषु । राम शब्दवत् अकारान्ताः शब्दाः भवन्ति । रेफषकारान्यतरसम्बन्धवति शब्दे अट्कुप्वाङिति णत्वं भवति अन्यत्र नेति बोध्यम् । यथा रामेण, नेत्रेण, रामाणाम्, नेत्राणाम् अत्र णत्वम् । माधवेन, बालेन, बालानाम्, गजानाम् इत्यत्र णत्वं न । अकारान्तत्वाविशेषेऽपि सर्वनामशब्देषु सर्वनाम कार्यं विशिष्यते ।

## १७५. सर्वादीनि सर्वनामानि १-१-२७

सर्वः आदिः—प्रथमावयवः येषां तानि सर्वादीनि । सर्वशब्दः स्वरूपपरः । तद्गुणसंविज्ञानो बहुव्रीहिः । आदिशब्दः अवयववचनः । सर्वशब्द घटितः समुदायः समासार्थः । तत्र समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात् तदन्तर्भूतेषु प्रवर्तमाना संज्ञा विश्वादीनामिव सर्वशब्दस्यापि भवति । सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । यद्यपि सर्वादिगणे केवलाः सर्वादय एव पठिताः तथापि द्वन्द्वसमासे द्वन्द्वे चेति सूत्रेण सर्वनामसंज्ञानिषेधात् सर्वाद्यन्तस्यापि सर्वनामसंज्ञा विज्ञायते । सर्व-विश्व-उभ-उभय-डतर-डतम-अन्य-अन्यतर-इतर-त्वत्-त्व-नेम-सम-सिम, व्यवस्थामसंज्ञायां च पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधराणि, ज्ञातिधनवाचि स्वं, बहियोगोपसंख्यानार्थमन्तरं, त्वद्-तद्-यद्-एतद्-इदम्-अदस्-एक-द्वि-युष्मद्-अस्मद्-भवतु-किम् इति सर्वादयः पञ्चत्रिंशत् ।

## संज्ञोपसर्जनीभूतास्तु न सर्वादयः

आधुनिक संकेतः संज्ञा, अन्यविशेषणत्वेन स्वार्थोपस्थापकमुपसर्जनम् । संज्ञाभूताः उपसर्जनीभूताश्च सर्वादयः सर्वनामसंज्ञकाः न भवन्ति । सर्वः, सर्वौ, प्रथमाबहुवचने जस् प्रत्यये—

## १७६. जसः शी ७-१-१७

अतो भिस इत्यतः अत इति, सर्वनाम्नः स्मै इत्यतः सर्वनाम्न इति चानुवर्तते । अदन्तादङ्गात् सर्वनाम्नः उत्तरस्य जसः शी इत्यादेशः स्यात् । अनेकाल्त्वात् सर्वादेशः । 'नानुबन्धकृतमनेकाल्त्वम्' अनुबन्धः—इत्संज्ञो वर्णः ।

तत्रैयुक्तम् अनेकाल्त्वं सर्वादेशनिमित्तं न भवतीति नियमात्, शित्वात्सर्वादेशः इत्येव युक्तम् इति न च वाच्यम्। आदेशप्रवृत्तेः प्राक् प्रत्ययत्वाभावेन लशक्तद्धिते इति प्रत्ययस्यादेः शकारस्य विहिताया इत्संज्ञाया एव दुर्लभत्वात्। आदेशप्रवृत्यनन्तरमेव स्थानिवत्वेन प्रत्ययत्वात् इत्संज्ञा प्रवर्तते। सर्व+ई गुणे सर्वे। यद्यपि शि इत्युक्तेऽपि रूपं सिध्यति तथापि शी इति दीर्घोच्चारणं नपुंसकाच्चेत्युत्तरसूत्रार्थम्। तेन वारिणी इत्यादि सिध्यति।

ङे प्रत्यये ङेर्य इति यादेशे प्राप्ते—

## १७७. सर्वनाम्नः स्मै ७-१-१४

अत इति वर्तते। ङेर्य इत्यतः ङेरित्यस्य सम्बन्धः अदन्तादङ्गात् सर्वनाम्न उत्तरस्य ङे इत्यस्य स्मै आदेशः स्यात्। सर्वस्मै। विश्वस्मै। अत इति किम्? भवते।

ङसि प्रत्यये टाङसिङसामिनात्स्याः इति प्राप्ते—

## १७८. ङसिङ्योः स्मात्स्मिनौ ७-१-१५

ङसिश्च ङिश्चेति द्वन्द्वः। अदन्तादङ्गात् सर्वनाम्नः परयोः ङसिङ्योः क्रमात् स्मात् स्मिन् आदेशौ स्याताम्। सर्वस्मात्। विश्वस्मात्। सप्तम्येकवचने सर्व+इ=सर्वस्मिन्। विश्वस्मिन्। अत इत्युक्तत्वात् भवतः, भवति, इत्यत्र न भवति।

## १७९. पूर्वादिभ्यो नवभ्यो वा ७-१-१६

ङसिङ्योः स्मात् स्मिनौ इति वर्तते। पूर्वादिभ्यः-पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधर-स्व-अन्तरएभ्यो नवभ्यः सर्वनामभ्यः उत्तरयोः ङसिङ्योः स्मात् स्मिन् आदेशौ स्तः। पूर्वस्मात्—पूर्वात्। पूर्वस्मिन्—पूर्वे इत्यादि।

षष्ठी बहुवचने सर्व आम् इत्यत्र ह्रस्वनद्यापो नुट् इति नुट् प्राप्ते—

## १८०. आमि सर्वनाम्नः सुट् ७-१-४२

आज्जसेरसुक् इत्यतः आदिति अनुवर्तते। पञ्चम्यन्ततया विपरिणते अङ्गादित्यत्र विशेषणम्। तदन्तविधिः। तस्मादित्युत्तरस्येति परिभाषा आमि

इति सप्तम्याः षष्ठीत्वं कल्पयति । आमीति षष्ठीबहुवचनमेव विवक्षितम् । सर्वनाम्न इति तु विहित विशेषणम् । अवर्णान्तादङ्गादुत्तरस्य सर्वनाम्नो विहितस्य आमः सुट् आगमः स्यात् । नुटोऽपवादः । सर्व आम्, बहुवचने झल्येत् इति एत्वम्, आदेशप्रत्यययोरिति षत्वम् सर्वेषाम् । एवं विश्वेषाम् । अवर्णान्तात्परस्येत्युक्त्या येषां तेषाम् इत्यत्रापि सुट् भवति । अवर्णान्ताद्विहितस्येत्युक्तौ तु यद्-तद् इति दकारान्तात् आमो विहितत्वेन सुट् न स्यात् । सर्वनाम्नो विहितस्येति किम् ? वर्णाश्रमेतराणाम् अत्र सुड् मा भूत् । परस्येत्युक्तौ तु सुट् स्यादेव । ननु सर्वेषामित्यत्र एत्व षत्वे कथं भवतः ? सुटः सुप्त्वाभावेन झलादौ सुपि विहितस्य एत्वस्य अप्रवृत्तेः । सुटः प्रत्ययावयवत्वाभावात् षत्वस्यापि प्रवृत्त्यभावात् इति चेत् ? सुटः आगमत्वेन

**यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते**

यमुद्दिश्य आगमो विहितः सः तदवयवत्वात् तत्वेन गृह्यते । इति न्यायात् सुड्विशिष्टस्य सुप् प्रत्ययत्वम्, सकारस्य प्रत्ययावयवत्वं चेति एत्व षत्वे निर्बाधे । ङिप्रत्यये ङसिङ्योः स्मात्स्मिनौ इति ङेः स्मिन्नादेशे सर्वस्मिन् । एवं विश्वादयः अदन्ताः । सर्व इति कस्यचित् संज्ञात्वे, उपसर्जनत्वे वा न सर्वनामकार्यम् । राम शब्दवत् रूपम् । सर्वाय देहि । अतिसर्वाय देहि इत्यादि । सर्वादिगणे डतरडतमौ प्रत्ययौ निर्दिष्टौ । केवलयोः प्रत्यययोः संज्ञायां प्रयोजनाभावात् तदन्तौ गृह्येते । तेन कतर कतम इत्यादीनां ग्रहणम् । डतर-डतमप्रत्ययान्तानां बहुत्वेन लाघवार्थं प्रत्यय पाठः । अन्यतरशब्दः अव्युत्पन्नः न डतरान्तः द्वयोर्विषये निर्धारणे वर्तते । तस्य सर्वादिगणे पाठात् सर्वनामकार्यम् । अन्यतमशब्दोपि अव्युत्पन्नः बहुविषये निर्धारणे । तस्यापाठात् न सर्वनामकार्यम् । गणपाठात् प्राप्तां सर्वनामसंज्ञा जसि विकल्पयितुं त्रिसूत्री—

**१८१. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम-संज्ञायाम् १-१-३४**

पूर्वश्च परश्च अवरश्च दक्षिणश्च उत्तरश्च अपरश्च अधरं चेति द्वन्द्वः ।

व्यवस्था–नियमः । स चात्रार्थादवध्यपेक्षः । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोर्थः तमपेक्षते यः सः स्वाभिधेयापेक्षः । स्वाभिधेयापेक्षस्य अवधेर्नियमः । नियमेनावधिसापेक्षार्थे, संज्ञाभिन्नेर्थे च वर्तमानानि पूर्वादीनि जसि वा सर्वनामसंज्ञां लभन्ते । सर्वनामसंज्ञापक्षे जसः शी भवति । पूर्वे-पूर्वाः, परे-पराः, अवरे-अवराः, दक्षिणे-दक्षिणाः, उत्तरे-उत्तराः, अपरे-अपराः, अधरे-अधराः । व्यवस्थायां किम् ? इमे गायकाः दक्षिणाः-प्रवीणा इत्यर्थः । अत्र प्रावीण्य मात्रेण निमित्तेन अवधिनिरपेक्ष एव दक्षिणशब्दो वर्तते इति व्यवस्था न गम्यते । एवमेव अधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्तः इत्यादि। असंज्ञायां किम् ? कुरवः उत्तराः । सुमेरुमवधिमपेक्ष्य कुरुषु उत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था किन्तु संज्ञात्वात् न सर्वनामसंज्ञा । यद्यपि पूर्वादिशब्दानामपि दिक्षु अनादिः संकेतः अस्ति ; तथापि न संज्ञाशब्दत्वम् । आधुनिकसंकेतस्यैव संज्ञात्वेनेह विवक्षणात् । अत एव दिशः सपत्नीभव दक्षिणस्याः इति प्रयोगः संगच्छते ।

### १८२. स्वमज्ञातिधनाख्यायाम् १-१-३५

ज्ञातिश्च धनं च ज्ञातिधने तयोराख्या ज्ञातिधनाख्या न ज्ञातिधनाख्या अज्ञातिधनाख्या तस्याम् । स्वमिति शब्दस्वरूपापेक्षया नपुंसकम् । ज्ञाति धन-भिन्नवाची स्वशब्दः जसि वा सर्वनामसंज्ञः स्यात् । स्वे पुत्राः, स्वाः पुत्राः। स्वे गावः, स्वा गावः । आत्मीया इत्यर्थः । ज्ञातिवाचिनः धनवाचिनो वा स्वाः इत्येव । धूमायन्त इवाश्लिष्टाः, प्रज्वलन्तीव संहताः, उल्मुकानीव मेऽमीस्वाः, ज्ञातय इत्यर्थः । प्रभूताः स्वा न दीयन्ते, प्रभूता स्वा न भुज्यन्ते-प्रभूतानि धनानि इत्यर्थः ।

### १८३. अन्तरं बहिर्योगोपसंव्यानयोः १-१-३६

बहिर्योगश्चोपसंव्यानं च तयोः । बहिरित्यनावृतो देशः, बाह्यं चोच्यते तेन योगः सम्बन्धो यस्य सः बहिर्योगः । उपसंवीयते-परिधीयते इति उपसंव्यानम्-अन्तरीयं वस्त्रम् । बहिर्योगे उपसंव्याने चार्थे गम्यमाने अन्तरशब्दः

जसि वा सर्वनामसंज्ञः स्यात् । अन्तरे—अन्तरा वा गृहाः वहिर्विद्यमाना गृहा इत्यर्थः । अन्तरे--अन्तराः शाटकाः परिधानीयानि वस्त्राणि इत्यर्थः । गणपाठात् नित्यं प्राप्तासंज्ञा त्रिभिः सूत्रैः विकल्पिता । बहिर्योगोपसंव्यानयोः किम् ? अनयोर्ग्रामयोः अन्तरे तापसः प्रतिवसति । मध्यप्रदेशवचनोयमन्तरशब्दः । अस्य सर्वनामसंज्ञाया अभावात् ङेः स्मिन्नादेशो न भवति । जसि वा सर्वनाम-संज्ञायाः विधायके अस्मिन् सूत्रे सप्तम्यन्तप्रत्युदाहरणं कथमिति न शङ्कनीयम् । बहिर्योगोपसंव्यानार्थे एव पूर्वं संज्ञाया उक्तत्वात् तद्भिन्नेऽर्थे संज्ञैव नेत्यत्र तात्पर्यात् ।

## १८४. तृतीया समासे १-१-३०

सर्वादीनि इत्यतः सर्वनामानीति, न बहुव्रीहौ इत्यतो नेति च अनुवर्तते । विभाषा दिक्समासे इति पूर्वसूत्रात् समास इत्यनुवर्तमाने पुनः समासग्रहणं तृतीयासमासार्थवाक्येपि प्रतिषेधप्रवृत्त्यर्थम् । तृतीया समासे तृतीयासमासवाक्ये च सर्वादीनि सर्वनामसंज्ञकानि न स्युः । 'पूर्वसदृशसमानार्थकलहनिपुणमिश्रश्लक्ष्णैः' इति विहितः तृतीयातत्पुरुषसमासो गृह्यते प्रतिपदोक्तत्वात् । न तु कर्तृकरणे कृता बहुलम् इति विहितः । तेन त्वयका कृतम्, मयका कृतम् इत्यत्र सर्वनामसंज्ञाकार्यम् अकच् भवति ।

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्** इति न्यायः ।

अस्यार्थः—लक्षणं नाम लाक्षणिकम् । प्रतिपदोक्तं च तत्तद्विभक्ति-विशेषादिना साक्षादुच्चरितत्वम् । लाक्षणिक साक्षादुच्चरितयोः मध्ये साक्षा-दुच्चरितस्यैव ग्रहणम् । शीघ्रोपस्थितिकत्वात् इति । मासपूर्वाय, मासावराय, संवत्सरपूर्वाय, द्व्यहपूर्वाय, मासेन पूर्वाय, संवत्सरेण अवराय ।

## १८५. द्वन्द्वे च १-१-३१

द्वन्द्वसमासे सर्वादीनि सर्वनामसंज्ञानि न स्युः । पूर्वापराणाम्, कतर-कतमानाम्, वर्णाश्रमेतराणाम् । वर्णाश्च आश्रमाश्च इतरे चेति द्वन्द्वः । सर्वनामत्वाभावेन आमि सर्वनाम्न इति सुट् न भवति । 'वर्णाश्रमेतराणां नो ब्रूहि

धर्मानशेषतः ' इति स्मृतिः । द्वन्द्वसमासस्तु समुदायवृत्तिः न तु अवयववृत्तिः । तेन समुदायस्यैव सर्वनामसंज्ञानिषेधः न त्ववयवानाम् ।

## १८६. विभाषा जसि १-१-३२

द्वन्द्वे इत्यनुवर्तते । जसीति कार्यापेक्षया अधिकरणसप्तमी । तेन जसाधारे कार्ये इत्यर्थः विवक्षितः । जसाधारं कार्यं च शी आदेशः एव । द्वन्द्वसमासे जसाधारे शी इत्यादेशे कार्ये सर्वादीनि सर्वनामसंज्ञानि वा न स्युः । वर्णाश्रमेतरे—वर्णाश्रमेतराः । कतरकतमे—कतरकतमाः । जसाधारे इति किम्? तेन अन्यत्र वा सर्वनामसंज्ञा मा भूत् । वर्णाश्रमेतरकाः इत्यत्र सर्वनामसंज्ञानिमित्तः अकच् न भवति किं तु कप्रत्ययः । ततश्च प्रत्ययेन व्यवधानात् सर्वनाम्नः परत्वाभावेन जसः शी न भवत्येव । अकचि तु ' तन्मध्यपतितः तद्ग्रहणेन गृह्यते ' इति न्यायात् पाक्षिकः शीभावः प्रसज्येत ।

## १८७. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १-१-३३

विभाषा जसि इति वर्तते । प्रथम, चरम, तय, अल्प, अर्ध, कतिपय, नेम इत्येते जसाधारे कार्ये वा सर्वनामसंज्ञकाः स्युः । तय इति तयप् प्रत्ययः । शिष्टानि प्रातिपदिकानि । प्रत्ययग्रहणे तदन्ता ग्राह्या इति तयप् प्रत्ययान्तः गृह्यते । नेम शब्दस्य, सर्वादिगणे पाठात् नित्यं प्राप्ता, अन्येषां चाप्राप्ता सर्वनामसंज्ञा जसि विकल्पेन विधीयते । प्रथमे-प्रथमाः, चरमे-चरमाः, द्वितये-द्वितयाः, अल्पे-अल्पाः, अर्धे-अर्धाः, कतिपये-कतिपयाः, नेमे-नेमाः ।

### तीयस्य ङित्सु उपसंख्यानम् (वा)

तीयप्रत्ययान्तस्य ङित्सु परेषु सर्वनामसंज्ञा वा भवतीति वक्तव्यम् । द्वितीयस्मै-द्वितीयाय, तृतीयस्मै-तृतीयाय । द्वितीयस्मात्-द्वितीयात् । तृतीयस्मात् तृतीयात् । द्वितीयस्मिन्-द्वितीये । तृतीयस्मिन्-तृतीये । निष्क्रान्तो जरायाः निर्गता जरा यस्मादिति वा समासे, जरा इति आकारान्तस्य ह्रस्वे निर्जरशब्दः अकारान्तः, तत्र विशेषं वक्तुमाह—

## १८८. जराया जरसन्यतरस्याम् ७-२-१०१

अष्टन आ विभक्तौ इत्यतो विभक्ताविति, अचिरऋतः इत्यतो अचीति चानुवर्तते। अचीत्यस्य विभक्तौ विशेषणात् यस्मिन् विधिरिति परिभाषया तदादिविधिः। अधिकृते अङ्गस्येतत्र जराया विशेषणत्वात् तदन्तलाभः। जरा शब्दान्तस्याङ्गस्य अजादौ विभक्तौ परतः जरस् आदेशो वा स्यात्। जरसादेशः अनेकाल्त्वात् सर्वादेशः भवति। जरसौ-जरे, जरसा-जरया, जरसे-जरायै। निर्जर+औ=निर्जरसौ, निर्जर+अस्=निर्जरसः। जरा शब्दान्तस्य विधीयमानः जरसादेशः निर्जरशब्दस्य कृत्स्नस्य प्राप्तोपि 'निर्दिश्यमानस्यादेशा भवन्ति' इति न्यायात् विहिताः आदेशाः सूत्रे प्रत्यक्षं निर्दिश्यमानस्यैव भवन्ति न त्वानुमानिकस्येत्यर्थकात् जर इत्यस्यैव भवति। सूत्रे जराशब्द एव स्थानी प्रत्यक्षनिर्दिष्टः जराशब्दान्तस्तु तदन्तविधिलभ्यः आनुमानिकः न प्रत्यक्षनिर्दिष्टः। अतः कृत्स्नस्य न भवत्यादेशः। ननु निर्जरशब्दस्य जर शब्दान्तत्वेऽपि जराशब्दान्तत्वाभावात् कथमत्र जरसादेशः इति चेत्? 'एकदेशविकृतमनन्यवत्' एकदेशस्य विकारेपि अन्यवन्न भवति स एवेति न्यायात् जरशब्दोपि जराशब्द एवेति जरसादेशो निष्प्रत्यूहः। अचि किम्? जराभ्याम्। विभक्ताविति किम्। जराया इदं जारम्। निर्जरसः, निर्जरसं, निर्जरसौ, निर्जरसः। टाप्ङेङसिङसाम्सु अजादिविभक्तिषु य, इन, आत्, स्य, नुट् इत्येतान् बाधित्वा परत्वात् जरसादेशे कृते अदन्तत्वाभावात् इनादयो न भवन्ति। निर्जरसा, निर्जरसे, निर्जरसः, निर्जरसः, निर्जरसाम्, इत्येव रूपम्। तृतीया बहुवचने भिसि, भिसः ऐसादेशे निर्जर ऐस् इति स्थिते जरसादेशो न भवति। अदन्तमङ्गमाश्रित्यप्रवृत्तस्य ऐसः संनिपातपरिभाषया तद्विघातकजरसादेशनिमित्तत्वायोगात्। निर्जरैः इत्येव। जरसादेशाभावे पक्षे, हलादौ विभक्तौ च रामवद्रूपाणि।

## १८९. पद्दन्नोमास्हृन्निशसन् यूषन् दोषन् यकञ्छकन्नुदन् आसञ्छस् प्रभृतिषु ६-१-६३

पद् - दत्-नस्-मास्-हृद्-निश्-असन्-यूषन्-दोषन्-यकन्-शकन्-उदन्-आसन्

इत्यादेशाः सूत्रे निर्दिष्टाः । तदनुगुणाः स्थानिनः आक्षिप्यन्ते । पाद-दन्त-नासिका--मास--हृदय--निशा--असृज्-यूष--दोष-यकृत्-शकृत्-उदक-आस्य इत्येतेषां शब्दानां स्थाने शस् प्रभृतिषु प्रत्ययेषु परेषु क्रमात् पद्-दत्-नस्-मास्-हृद्-निश्-असन्-यूषन्-दोषन्-यकन्-शकन्-उदन् आसन् इत्येते आदेशाः वा स्युः । पाद शब्दात् शस् प्रत्यये पद् इत्यस्य पदादेशे पदः, पक्षे पादान् । पदा-पादेनेत्यादि। इदं सूत्रं छन्दस्येवेति केचित् । भाषायामपि इत्यन्ये । युक्तं चैतत् ।

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः ।

इति लोकेऽपि प्रयोगदर्शनात् । शस् प्रभृतिषु इति प्रायोवादः । तेन क्वचिदन्यत्र सुप्यपि भवति । अत एव पदङ्घ्रिश्चरणोऽस्त्रियाम्, स्वान्तं हृन्मावसं मनः इत्यादयः प्रयोगाः संगच्छन्ते । एवमेव दन्त मास हृदयादयः अकारान्ताः शब्दाः । दन्त शब्दस्य दत् आदेशे दतः, दता इत्यादि ।

## १९०. सुडनपुंसकस्य १-१-४३

सुट् इति सु, औ, जस्, अम्, औट् इति पञ्चानां प्रत्याहारः । शि सर्वनामस्थानम् इत्यतः सर्वनामस्थानमित्यनुवर्तते । नपुंसकभिन्न प्रातिपदिकसम्बन्धि सुट् सर्वनामस्थान संज्ञं स्यात् ।

## १९१. स्वादिष्वसर्वनामस्थाने १-४-१७

सुः आदिः येषां तेषु स्वादिषु । सु इति एकवचनमारभ्य आकप् प्रत्ययाः गृह्यन्ते । उरः प्रभृतिभ्यः कप् इति पञ्चमाध्याये विधीयते। असर्वनामस्थाने इति बहुत्वेप्येकवचनमार्षम् । सर्वनामस्थानवर्जितेषु कप्प्रत्ययावधि स्वादिप्रत्ययेषु परेषु पूर्वं पदसंज्ञं स्यात् । राजभ्याम्, राजभिः, राजत्वम् राजता, राजतरः, राजतमः सर्वत्र नलोपःप्रातिपदिकान्तस्येति नलोपः भवति असर्वनामस्थाने इति किम्? राजानौ, राजानः अत्र नलोपो न भवति ।

## १९२. यचि भम् १-४-१८

य् च अच्चेति समाहारद्वन्द्वः । स्वादिष्वसर्वनामस्थाने इत्यनुवर्तते त

यचीति विशेषणम् । यस्मिन् विधिरिति तदादिविधिः । सर्वनामस्थानवर्जिते यकारादौ अजादौ च प्रत्यये परे पूर्वं भसंज्ञं स्यात् । यकारादौ-गार्ग्यः, वात्स्यः । भसंज्ञया यस्येति चेति अकारलोपो भवति । अजादौ--दाक्षिः, दाशरथिः । यस्येति चेति अकारलोपः ।

**न भोङ्गिरो मनुषां वत्युपसंख्यानं कर्तव्यम् (वा)**

नभस्, अङ्गिरस्, मनुष् इत्येतेषां वतिप्रत्यये परे भसंज्ञा वाच्या । नभ इव नभस्वत् । अङ्गिरा इव अङ्गिरस्वत् । मनुरिव मनुष्वत् । भसंज्ञया पदत्वनिबन्धनं ससजुषोरुः इति रुत्वं न भवति ।

## १९३. आकडारादेका संज्ञा १-४-१

कडाराः कर्मधारये इत्यतः प्राग् एकस्य एकैव संज्ञा । अन्यत्र संज्ञासमावेशात् नियमार्थं वचनमिदम् । का पुनरेका संज्ञा भवतीति चेत् ? या परा अनवकाशा च भवति सा संज्ञा बाधिका । द्वयोः सावकाशत्वे परासंज्ञा प्रबला । अन्यतरस्या निरवकाशत्वे सैव प्रबला । यथा--धनुषा शरैर्विध्यतीत्यत्र धनुषः अपादानत्वे, करणत्वे च प्राप्ते परत्वात् करणसंज्ञैव । पदसंज्ञाभसंज्ञयोः अनवकाशत्वात् भसंज्ञैव । तेन दता, दतः इत्यादौ भसंज्ञया पदसंज्ञाया बाधितत्वात् तकारस्य झलां जशोन्ते इति न जश्त्वम् । दद्भ्याम्, दद्भिः अत्र जश्त्वं भवत्येव । दत्सु । जश्त्वं खरिचेति चर्त्वं च । शेषं रामवत् । एवं मास शब्दस्य मास् आदेशे अजादौ मासः, मासा इत्यादि । हलादौ ससजुषोरुः इति रुत्वे, भो भगो इति रोर्यकारे हलि सर्वेषाम् इति तस्य लोपे च माभ्याम्, माभिरित्यादि भवति । मास् सु इत्यत्र तु रुत्वे, खरवसानयोरिति विसर्गे वा शरि इति वा विसर्गे माःसु । पक्षे सत्वम् मास्सु इति रूपद्वयम् ।

यूष शब्दात्, यूषन्नादेशे यूषन् अस् इति स्थिते----

## १९४. भस्य ६-४-१२९.

अध्यायपरिसमाप्तिं यावत् अधिकारोयम् । इत ऊर्ध्वमुच्यमानेषु भस्येत्यस्य सम्बन्धः ।

## १९५. अल्लोपोऽनः ६-४-१३४

भस्येत्यस्य अङ्गस्य च सम्बन्धः। अत् इति लुप्तषष्ठीकं भिन्नपदं, ह्रस्वाकारस्येत्यर्थः। अन इति अवयवषष्ठ्यन्तम् अतो विशेषणम्। अङ्गस्येत्यप्यवयवषष्ठ्यन्तमिहाश्रीयते। तच्च अन इत्यत्रान्वेति। भस्येत्यस्यापि अन इत्यनेन सम्बन्धः। भस्येत्युक्तत्वात् अनः असर्वनामस्थानयजादि स्वादिपरत्वं सिध्यति। तथा च अङ्गावयवः असर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात्। राज्ञः, तक्ष्णः। यूष शब्दस्य शसि यूषन्नादेशः यूषन् अस् इत्यत्र अल्लोऽकारस्यलोपे यूष्न् अस् इति स्थिते रषाभ्यां नो ण इति नस्य णत्वं यूष्णः। यद्यपि णत्वाभावेऽपि ष्टुना ष्टुरिति ष्टुत्वेनापि इदं रूपं सिध्यति तथापि तस्यासिद्धत्वात् रषाभ्यामिति णत्वमेव न्याय्यम्। यूष्णा।

यूषन् भ्यामिति स्थिते—

## १९६. नलोपः प्रातिपदिकान्तस्य ८-२-७

नेति षष्ठ्यन्तं पृथक् पदम्। सौत्रत्वात् षष्ठ्यालुक् नस्येत्यर्थः। प्रातिपदिकेति च लुप्तषष्ठ्यन्तं पृथक्पदम्। पदस्येत्यधिकृतम्। तस्य अवयवषष्ठ्यन्तस्य अन्त इत्यत्रान्वयः। प्रातिपदिकसंज्ञकस्य पदस्य अन्तावयवो यो नकारः तस्य लोपः स्यात्। यूषन् इति नस्य लोपे यूषभ्याम्। यूषभिः। यूषभ्यः इत्यादि। नस्य लोपे सति यूषभ्यामित्यत्र सुपि चेति दीर्घः, यूषभिरित्यत्र अतोभिस ऐस् इति ऐस्, यूषभ्य इत्यत्र बहुवचने झल्येत् इति एत्वं च नलोपस्यासिद्धत्वात् न भवति। यूष्णः यूष्णोः यूष्णाम्। सप्तम्यां यूषन् इ इत्यत्र अल्लोपोऽनः इति नित्ये अल्लोपे प्राप्ते—

## १९७. विभाषा ङिश्योः ६-४-१३६

अल्लोपोऽनः इत्यनुवर्तते। ङिश्च शीच ङिश्यौ तयोः। शी इत्यनेन नपुंसकाच्च इति सूत्र विहितः शी गृह्यते। अङ्गावयवोऽसर्वनामस्थानयजादि स्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परतः। लोपे यूष्णि लोपाभावे यूषणि ? युषसु नलोपः। यूषन्नादेशाभावे रामवत्। दोष शब्दस्य

द्योपन्नादेशो यूषन्वत् पक्षे रामवत्। अह्नः सायः—सायाह्नशब्दः रामशब्दवत्, सप्तम्यां तु—

१९८. संख्या विसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ६–३–११०

संख्या च विश्च सायश्च संख्याविसायाः ते पूर्वे यस्मात्सः तस्येति विग्रहः। संख्या- वि-साय इत्येवं पूर्वस्य अह्नशब्दस्य स्थाने अहन् आदेशो वा स्यात् ङौ परे। सायाहन् इ विभाषाङिश्योरिति अनोऽकारस्य विकल्पेन लोपे सायाह्नि, लोपाभावे सायाहनि पक्षे सायाह्ने। एवं द्व्यह्नि-द्व्यहनि-द्व्यह्ने। व्यह्नि-व्यहनि-व्यह्ने ॥

---

विश्वं पातीत्यर्थे विश्वपा शब्दः आकारान्तःपुल्लिङ्गः। विश्वपाः विश्वपौ विश्वपाः। सम्बोधने ह्रस्वान्तात्परत्वाभावेन एङ् ह्रस्वात्सम्बुद्धेः इत्यस्याप्रवृत्तेः हे विश्वपाः इत्येव। विश्वपां, विश्वपौ। शसि प्रथमयोः—इति पूर्वसवर्णदीर्घे प्राप्ते—

१९९. आतो धातोः ६–४–१४०

अङ्गस्येति भस्येति चाधिकृतम्। आत इति धातोरित्यस्य विशेषणं, तदन्तविधिः। धातोरिति अङ्गस्येत्यस्य विशेषणं तदन्तविधिः। अल्लोपोऽनः इत्यतः लोप इत्यनुवर्तते। आकारान्तो यो धातुः तदन्तस्याङ्गस्य भस्य लोपः स्यात्। अलोऽन्त्यपरिभाषया अन्त्यस्याकारस्यैव लोपः। विश्वपः। विश्वपा, विश्वपे इत्यादि। आत इति किम्? नियां, निये। धातोरिति किम्? हाहान्। सोमपा-कीलालपा-शुभंया-शंखध्मा इत्यादयः आकारान्ताः विश्वपावत्। हाहा शब्दस्तु अव्युत्पन्नं प्रातिपदिकम्। शसि अधातुत्वात् आलोपो न भवति। शसि—पूर्वसवर्णदीर्घः नत्वम् हाहान्। टा—सवर्णदीर्घः हाहा। ङे—वृद्धिः हाहै। ङसिङसोः—दीर्घः हाहाः। ओसि—वृद्धिः हाहौः। ङौ—गुणः हाहे। शेषं विश्वपावत्। इकारान्तात् हरिशब्दात् सुः हरिः। हरि औ प्रथमयोः पूर्वसवर्णदीर्घे हरी। जसि हरि अस् इत्यत्र पूर्वसवर्णदीर्घे प्राप्ते—

२००. जसि च ७–३–१०९

ह्रस्वस्य गुण इत्यनुवर्तते। अङ्गस्येत्यधिकृतम्। तत्र ह्रस्वस्येति विशेषणं

तदन्तविधि:। ह्रस्वान्तस्याङ्गस्य गुण: स्यात् जसि परे। हरे अस्, अयादेश: रुत्व-विसर्गौ हरय:। एवं वायव:, पटव:, मतय:, धेनव:। सम्बोधने हे हरि स्।

## २०१. ह्रस्वस्य गुण: ७-३-१०८

सम्बुद्धौ च इत्यत: सम्बुद्धावित्यनुवर्तते। ह्रस्वान्तस्याङ्गस्य गुण: स्यात् सम्बुद्धौ। हे हरे स्। एङ् ह्रस्वादिति सम्बुद्धिलोप: हे हरे। एवं हे वायो। अमिपूर्व: हरिम्। शसि पूर्वसवर्ण दीर्घ:, तस्माच्छसो इति नत्वम् हरीन्।

## २०२. शेषो घ्यसखि १-४-७

यू स्त्र्याख्यौ इत्यतो यू इत्यनुवर्तते। इश्च उश्च यू- इवर्ण: उवर्णश्चेत्यर्थ:। ङिति ह्रस्वश्चेत्यतो ह्रस्व इत्यनुवर्तते। तच्च यूभ्यां प्रत्येकमन्वेति। नदीसंज्ञाया उक्तत्वात् तदन्य: शेष:। तस्यापि यू इत्यत्र अन्वय:। तेन नदीसंज्ञभिन्न: ह्रस्व: इवर्ण: उवर्णश्चेति सिध्यति। शब्दस्वरूपमध्याहार्यम्। तत्र यू इत्यस्य विशेषणत्वात् तदन्तविधि:। अनदीसंज्ञौ यौ ह्रस्वेवर्णोवर्णौ तदन्तं शब्दस्वरूपं असखिभूतं घिसंज्ञं स्यात्। हरि, वायु। असखीत्युक्ते: सखिशब्दस्य, शेष इत्युक्ते: मतिशब्दस्य, ह्रस्व इत्युक्ते: वातप्रमीशब्दस्य च न घिसंज्ञा। यू ग्रहणात् मातृशब्दस्यापि घिसंज्ञा न।

## २०३. आङो नाऽस्त्रियाम् ७-३-१२०

अच्च घेरित्यतो घेरित्यनुवर्तते। आङिति टा संज्ञा प्राचाम्। घे: परस्य आङ: ना इत्यादेश: स्यात् अस्त्रियाम्। हरिना णत्वे-हरिणा, अग्निना, वायुना। अस्त्रियाम् किम्? मत्या, धेन्वा। पुंसीति नोक्तम् अमुना ब्राह्मणकुलेनेत्यादौ नपुंसकेऽपि [illegible] हरि आ नादेशे, णत्वे हरिणा। हरिभ्याम्, हरिभि:। ङे प्रत्यये हरि+ए इति स्थिते—

## २०४. घेर्ङिति ७-३-१११

सुपि चेत्यत: सुपीति, ह्रस्वस्य गुण: इत्यतो गुण इति चानुवर्तते। घिसंज्ञकस्याङ्गस्य गुण: स्यात् ङिति सुपि परे। हरे ए अयादेशे हरये। अग्नये, वायवे। घेरिति किम्? सख्ये, पत्ये। ङिति किम्? अग्निभ्याम्।

सुपि किम् ? कुरुतः, पटु+ई=पट्वी। हरिभ्याम्। हरिभ्यः। ङसि ङस् प्रत्यययोः हरि अस् इत्यत्र अपदान्तत्वात् एङः पदान्तादति इति पूर्वरूपे अप्राप्ते अयादेशे च प्राप्ते—

२०५. ङसि ङसोश्च ६-१-११०

एङः पदान्तादित्यतः एङ इति, अतीति चानुवर्तते। अमि पूर्व इत्यतः पूर्व इत्यनुवर्तते। एकः पूर्वपरयोरित्यधिकृतम् ङसिङसोरित्यवयवषष्ठी। यद्यपि ङसि ङसौ द्वौ, एङौ च द्वौ, तथापि नात्र यथासंख्यम्। एङः ङसिङसोः ह्रस्वाकारे परे पूर्वरूपमेकादेशः स्यात्। अपदान्तार्थोऽयमारम्भः। हरे स् रुत्वविसर्गयोः हरेः। अग्नेः, वायोः। हर्योः। हरीणाम्। ङि प्रत्यये हरि इ इत्यत्र घेर्ङितीति गुणे प्राप्ते—

२०६. अच्च घेः ७-३-११९

इदुद्भ्याम्, औत् इति सूत्रं, ङेराम् इत्यतो ङेरिति चानुवर्तते। इदुद्भ्यामुत्तरस्य ङेः औकारादेशः स्यात्, घिसंज्ञकस्य अन्त्यस्य अकारादेशः स्यात्। घेर्ङितीत्यस्यापवादः। हर औ-वृद्धौ हरौ। वायौ। हर्योः। हरिषु। एवम् अग्नि कवि गिरि श्रीपतिरव्यादयः इकारान्ताः।
सखि शब्दात् सु प्रत्यये सखि स् इति स्थिते—

२०७. अनङ् सौ ७-१-९३

सख्युरसम्बुद्धौ इत्यनुवर्तते। सौ इति प्रथमैकवचनस्य ग्रहणं न तु सप्तमीबहुवचनस्य असम्बुद्धौ इति पर्युदासात्। सख्युरङ्गस्य सम्बुद्धिभिन्ने सौ परे अनङ् आदेशः स्यात्। अनङि ङकारः इत्, नकारावकारः उच्चारणार्थः। अनेकाल्त्वेपि ङिच्चेति अन्त्यस्यादेशः भवति। सखन् स्

२०८. अलोऽन्त्यात् पूर्व उपधा १-१-६५

अल इति पञ्चमी अन्त्यादिति सामानाधिकरण्यात्। पूर्वोप्यलेव गृह्यते। वर्णसमुदाये अन्त्यादलः पूर्वो अल् उपधासंज्ञः स्यात्। पच्, पठ् इत्यत्र अकारः; भिद्, छिद्, इत्यत्र इकारः; बुध्, युध्, इत्यत्र उकारः, वृत्,

वृध् इत्यत्र ऋकारः । अल इति किम् ? शास् इत्यत्र आस् इति समुदायात्पूर्वस्य शकारस्य मा भूत् । अल् इति किम् ? शास् इत्यत्र सकारात्पूर्वस्य शा इति समुदायस्य मा भूत् । तथा सति शिष्टः इति रूपं न सिध्येत् ।

### २०९. सर्वनामस्थाने चासम्बुद्धौ ६-४-८

नोपधाया इति सूत्रमनुवर्तते । न इति लुप्तषष्ठ्यन्तम् अङ्गस्येत्यत्रान्वयः तदन्तविधिः । ढ्रलोपे पूर्वस्य दीर्घ इत्यतो दीर्घ इत्यनुवर्तते । नान्तस्याङ्गस्य उपधायाः दीर्घः स्यात् सम्बुद्धिभिन्ने सर्वनामस्थाने परे । राजा, राजानौ । तक्षा, तक्षाणौ, सामानि । सर्वनामस्थाने इति किम् ? राजनि । सामनि । असम्बुद्धाविति किम् ? हे राजन् । हे तक्षन् । अनेन दीर्घे सखान् स् इति जाते—

### २१०. अपृक्त एकाल् प्रत्ययः १-२-४१

एकश्चासौ अल् चेति कर्मधारयः । एकशब्दः असहायवाची । एकाल् प्रत्ययः अपृक्तसंज्ञः स्यात् । क्विन् प्रत्यये ककारनकारेकाराणाम् इत्संज्ञा लोपयोः कृतयोः शिष्टः वकारः अपृक्तसंज्ञां लभते । तेन वेरपृक्तस्येति वस्य लोपः सिध्यति । एकालिति किम् ? जागृविः । वि इति समुदायस्य न भवति । सखान् स् इत्यत्र स् इत्यस्य अपृक्तसंज्ञा ।

### २११. हल् ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ६-१-६८

हल् च ङीच आप् चेति द्वन्द्वः । दीर्घादिति समासैकदेशयोरपि ङ्यापोः केवलं विशेषणं, न हलः असम्भवात् । सुतिसीत्यस्य प्रत्ययत्वेन तदाक्षिप्त प्रकृतौ हल्ङ्याब्भ्य इत्यस्य विशेषणतया तदन्तविधिः । सुतिसि इति समाहार-द्वन्द्वः । उकारे इकारे च लुप्ते परिशिष्टः सकारः तकारश्च सुतिसि इत्यनेन विवक्षितः । तत्र अपृक्तं हल् इत्यन्वेति । लोपो व्योर्वलीत्यतो लोप इत्यनुवर्तते । लुप्यते इति लोपः । तिपा साहचर्यात् सिः विभक्तिरेव गृह्यते । तेन सिचो ग्रहणं न । हलन्तात्, दीर्घङ्यन्तात् दीर्घाबन्ताच्च परं सुतिसि इत्येतदपृक्तं हल् लुप्यते । हलन्तात्-राजन्-राजा, तक्षन्-तक्षा, उखास्रत्, पर्णध्वत्, लिट्,

वाक्। ङ्यन्तात्—कुमारी, नदी, शाङ्गरवी। आबन्तात्—माला, बहुराजा, कारीषगन्ध्या सर्वत्र सोर्लोपः। तिलोप—सिलोपौ हलन्तादेव सम्भवतः। हलन्तात् तिलोपस्य—अबिभर्भवान्। हलन्तात् सिलोपस्य-अभिनोऽत्र, अच्छिनोऽत्र ? हल्ङ्याब्भ्यः इति किम्? ग्रामणीः, सेनानीः। दीर्घादिति किम्? निष्कौशाम्बिः, अतिखट्वः। सुतिसीति किम्? अभैत्सीत्। अत्र तकारात् सकारस्य लोपो न। अपृक्तमिति किम्? भिनत्ति, छिनत्ति। हलिति किम्? बिभेद। अथ किमर्थं हलन्तात् सुतिसीनां लोपो विधीयते? संयोगान्तलोपेनैव सिद्धत्वात् इति चेत्? न सिध्यति। संयोगान्तलोपस्यासिद्धत्वात् राजा, सखा, तक्षा इत्यादौ नलोपः। उखास्रत्, पर्णध्वत् इत्यत्र अपदान्तत्वात् वसुस्रंसुध्वंस्वनडुहां द इति दत्वं, अभिनः अत्र इत्यत्र अतोरोरप्लुतादप्लुते इति उत्वं न स्यात्। अबिभर्भवान् इत्यत्र रात्सस्येति नियमात् संयोगान्तलोपस्यानवकाशात् लोप एव न स्यात्। अतः हलन्तात् लोपः वक्तव्यः। सखान् स् इत्यत्र सोर्लोपे नलोपः प्रातिपदिकान्तस्येति नस्य च लोपे सखा इति भवति।

सखि औ इति स्थिते—

## २१२. सख्युरसम्बुद्धौ ७-१-९२

इतोत् सर्वनामस्थाने इत्यतः सर्वनामस्थाने इत्यनुवर्तते। तत्र असम्बुद्धौ इत्यस्यान्वयः। गोतोणित् इत्यतः णिदिति प्रथमान्तम् अनुवर्तते। तत्सामानाधिकरण्यात् सर्वनामस्थाने असम्बुद्धौ इत्यनयोः प्रथमान्तत्वेन विपरिणामः सख्युरङ्गात्परं सम्बुद्धिभिन्नं सर्वनामस्थानं णिद्वत्स्यात्। णित्कार्यकृत् स्यादित्यर्थः।

## २१३. अचो ञ्णिति ७-२-११५

ञ् च ण् च ञ्णौ तौ इतौ यस्य सः। अङ्गाक्षिप्तः प्रत्ययः अन्यपदार्थः तस्मिन्। मृजेर्वृद्धिरित्यतो वृद्धिरित्यनुवर्तते। अधिकृते अङ्गे अच इत्यस्यान्वयः तदन्तविधिः। अजन्तस्याङ्गस्य वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। ञिति—निश्चायः, निष्पावः, कारः, हारः अत्र प्रत्ययः ञित्। णिति—गौः। सर्वनामस्थानस्य औ इत्यस्य णित्वात् सखि इति इकारस्य वृद्धौ ऐकारः सखै औ

अयादेशे सखायौ, सखायः। सम्बुद्धौ असम्बुद्धावित्युक्त्या अनङभावे ह्रस्वस्य-गुणः इति गुणे एङ् ह्रस्वादिति सुलोपे हे सखे इति। सखायम् सखायौ सखायः। असखीत्युक्तेः घिसंज्ञाभावात् घिसंज्ञाकार्यं न। सख्या, सख्ये। ङसिङसोः सखि अस् घित्वाभावेन घेर्ङितीति गुणाप्रवृत्या इको यणचीति यणि सख्यस् इति स्थिते—

## २१४. ख्यत्यात्परस्य ६–१–११२

ख्यत्यादिति खिशब्द खीशब्दयोः, तिशब्द तीशब्दयोश्च कृत यणादेशयो-र्निदेशः। ङसिङसोश्चेत्यतः ङसिङसोरिति; ऋत उत् इत्यतः उत् इति चानुवर्तते। एङः पदान्तादित्यतः अनुवृत्तस्य अतीत्यस्य षष्ठ्यन्ततया विपरिणामः। कृत यणादेशाभ्यां, खिखी शब्दाभ्यां तिती शब्दाभ्यां च परस्य ङसिङसोरकारस्य उः स्यात्। सख्युस् रुत्वविसर्गयोः सख्युः। पत्युः। सख्योः। आमि नुट् दीर्घौ सखीनाम्। ङौ सखि इ इति स्थिते सवर्णदीर्घप्राप्ते

## २१५. औत् ७–३–११८

इदुद्भ्यामनुवर्तते। ङेराम् इत्यतो ङेरिति च। इदुद्भ्यामुत्तरस्य ङेः औकारः आदेशः स्यात्। सखि औ यणि सख्यौ। पत्यौ। सख्योः। सखिषु। शोभनः सखा इत्यर्थे सुसखि शब्दः। न पूजनात् इति निषेधात् राजाहःसखिभ्यष्टच् इति टच् समासान्तो न भवति। अनङ् णिद्वद्भावयोः तदन्तेपि प्रवृत्या प्रथमाद्वितीयाविभक्त्योः सखिवत्। सुसखा सुसखायौ सुसखायः। सुसखायं सुसखायौ सुसखीन् इति। किन्तु समुदायस्य सखिरूपत्वाभावात् असखीति निषेधाप्रवृत्या घिसंज्ञा प्राप्नोति। तेन घिसंज्ञाकार्यं भवतीति टादिषु हरिवत् सुसखिना, सुसखये। ङसिङसोरपि घेर्ङितीति गुणप्रवृत्या कृतयणादेशत्वाभावात् ख्यत्यादित्युत्वं न भवति। ङसिङसोश्चेति पूर्वरूपे सुसखेः। ङौ सुसखौ। अतिशयितः सखा इत्यर्थे अतिसखिशब्दोपि सुसखिवत्।

## २१६. पतिः समास एव १–४–८

शेषो घ्यसखीत्यतो घि इत्यनुवर्तते। घिसंज्ञायां प्राप्तायां नियमार्थं

वचनम् । पतिशब्दः समासे एव घिसंज्ञः स्यात् । प्रजापतिना, प्रजापतये । भूपतिना, भूपतये । समास इति किम् ? पत्या, पत्ये । यद्यपि सिद्धे सत्यारम्भो नियमार्थ इति एवकारं विनापि नियमो लभ्यते तथापि एवकारः इष्टतोऽवधारणार्थः । अन्यथा समासे पतिरेव इति नियमः सम्भाव्येत । ततश्च महाकविना दृढमुष्टिना इत्यादौ ना भावो न स्यात् । पतिशब्दः तृतीयादिषु घिकार्याभावात् सखिवत्, अन्यत्र हरिवत् । समासे तु हरिवदेन भूपतिना भूपतये इत्यादि । किं शब्दात् बहुत्वसंख्यावच्छिन्न संख्येय विषय प्रश्ने एव डतिप्रत्यये निष्पन्नः कतिशब्दः अतः नित्यबहुवचनान्तः ।

## २१७. बहुगणवतुडतिसंख्या १-१-२३

बहुगणशब्दौ प्रातिपदिके संख्यावाचके गृह्येते न तु संघवैपुल्यवाचकेऽपि, संख्यायते अनयेति अन्वर्थसंज्ञाविज्ञानात् । वतुडती प्रत्ययौ । यत्तदेतेभ्यः परिमाणे वतुप् इति विहितः तद्धितप्रत्ययो वतुरिहविवक्षितः न तु तेन तुल्यं क्रियाचेद्वतिरिति विहितो वतिरपि, वतु इति उकारानुबन्धात् । वतुना साहचर्यात् डतिरपि किमः संख्या परिमाणे डति च इति विहितः तद्धित एव गृह्यते न तु पातेर्डतिरिति विहितः कृत्प्रत्ययोपि । केवलयोः संज्ञाविधौ फलाभावात् संज्ञाविधावपि तदन्तग्रहणम् । बहुगणशब्दौ वत्दन्तडत्यन्तशब्दौ च संख्यासंज्ञा स्युः । संख्या संज्ञकत्वात् बहु-गण-तावत्-कतिशब्देभ्यः संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् इति कृत्वसुच् , संख्याया विधार्थे धा इति धा, संख्यायाः अतिशदन्तायाः कन् इति कन् , संख्यैकवचनाच्चेति शस् च भवन्ति । बहुकृत्वः । बहुधा । बहुकः । बहुशः । गणकृत्वः । गणधा । गणकः । गणशः । तावत्कृत्वः । तावद्धा । तावत्कः । तावच्छः । कतिकृत्वः । कतिधा । कतिकः । कतिशः ।

## २१८. डति च १-१-२५

संख्येति वर्तते, ष्णान्ता षडित्यतः षडित्यनुवर्तते । डत्यन्ता संख्या षट् संज्ञा स्यात् ।

## २१९. षड्भ्यो लुक् ७-१-२२

जश्शसोः शिरित्यतः जश्शसोरित्यनुवर्तते । षट् संज्ञकेभ्यः परयोः जश्शसोः लुक् स्यात् । इत्यन्तः—कति । षट्—पञ्च, सप्त, नव, दश ।

## २२०. प्रत्ययलोपे प्रत्ययलक्षणम् १-१-५२

प्रत्ययो लक्षणं—निमित्तं यस्य तत् प्रत्ययलक्षणम् । कार्यं अन्यपदार्थः प्रत्ययस्य लोपे कृतेऽपि प्रत्ययनिमित्तं कार्यं स्यात् । अत्र लोप शब्दः अदर्शनमात्रमाह । तेन लुगादीनामपि संग्रहः । प्रत्ययस्य लुक् श्लु लुप् इति सूत्रात् प्रत्ययस्य इत्यनुवर्तमाने पुनः प्रत्ययग्रहणात् कृत्स्नप्रत्ययलोपे एव इदं प्रवर्तते, न तु प्रत्ययावयवलोपे । तेन हनिगम्योः लिङात्मनेपदे आघ्नीय, सङ्गमीय इत्यत्र लिङःसलोपोऽनन्त्यस्येति सीयुट् सकारस्य प्रत्ययैकदेशस्य लोपे प्रत्ययलक्षणेन झलि विहितः अनुनासिकलोपो न भवति । किं च प्रत्ययस्यासाधारणं रूपं यत्र प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भवति न तु प्रत्ययाप्रत्ययसाधारणम् । तेन राः कुलम् रैकुलम् , गवे हितं गोहितं इत्यत्र आयवादेशौ न भवतः तयोः वर्णाश्रयत्वात् , प्रत्ययासाधारणरूपस्य प्रयोजकत्वाभावात् । दधि, मधु, भव इत्यादौ प्रत्यय-लक्षणेन सुप्तिङन्तं पदमिति पदसंज्ञा भवति । कति शब्दात् जसः लुकिकृतेपि प्रत्ययलक्षणेन जसि चेति गुणे प्राप्ते—

## २२१. न लुमताङ्गस्य १-१-६३

लुशब्दो यस्मिन्नस्ति सः लुमान् । लुक् श्लु लुप् इति त्रयः संज्ञाशब्दा गृह्यन्ते । लुमतेति करणे तृतीया । प्रत्ययलोपे प्रत्ययलक्षणमिति अनुवर्तते । लुमताशब्देन प्रत्ययलोपे विहिते तत्प्रत्ययनिमित्तकमङ्गकार्यं न स्यात् । कति, कति । गर्गाः, गर्गशब्दात् विहितस्य यञो लुकि तन्निमित्ता आदिवृद्धिः न भवति । मृष्टः—मृजेस्तसि शपो लुकि तन्निमित्ता मृजेर्वृद्धिरिति न भवति । जुहुतः—हु धातोः तसि श्लौ तन्निमित्तः सार्वधातुकार्धधातुकयोः इति गुणो न भवति । कतिभिः । कतिभ्यः । कतीनां । कतिषु । त्रिशब्दोऽपि त्रित्वसंख्यावाचितया नित्यं बहुवचनान्तः । त्रयः, त्रीन् इत्यादि हरिवत् । आमि त्रि आम् इति स्थिते—

### २२२. त्रेस्त्रयः ७-१-५३

आमि सर्वनाम्नः सुडित्यतः आमीत्यनुवर्तते । त्रि शब्दस्य त्रय इत्यादेशः स्यात् आमि परे । अनेकाल्त्वात्सर्वादेशः । त्रय आम् ह्रस्वनद्यापो नुट्, नामीति दीर्घः, अट्कुप्वाङिति णत्वम् त्रयाणाम् । तदन्तेपि प्रवर्तते परमत्रयाणाम् । द्वि शब्दः द्वित्वसंख्यानियतत्वात् नित्यं द्विवचनान्तः ।

द्वि औ इति स्थिते—

### २२३. त्यदादीनामः ७-२-१०२

अष्टन आ विभक्तौ इत्यतः विभक्तौ इत्यनुवर्तते । त्यद् आदिः येषां तेषाम् । त्यद् प्रभृति द्विपर्यन्ता एव त्यदादयः इष्यन्ते । त्यद् इत्येवमादीनां विभक्तौ परतः अकारः आदेशः स्यात् । अलोन्त्यपरिभाषया अन्त्यस्य भवति । त्यद् स्यः, तद्-सः, यद्-यः, एतद्-एषः, इत्यादि । द्व+औ वृद्धिरेचीति वृद्धौ द्वौ, द्वौ । विभक्ताविति किम्? तद्-यद् नपुंसके विभक्तेर्लुकि अत्वं मा भूत् । द्विपर्यन्ता इत्युक्तत्वात् भवच्छब्देपि अत्वं न । द्वाभ्यामित्यादि अकारान्तवत् । उडुलोमा नाम कश्चित् तस्यापत्यं औडुलोमिः । तस्य एकवचन द्विवचनयोः हरिवत् रूपम् । बहुवचने तु—

### लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः (वा)

लोमन् शब्दात् बहुष्वपत्येषु विवक्षितेषु अकारः प्रत्ययो वाच्यः इति उक्तत्वात् उडुलोम इति अकारान्तो भवति । तस्य बहुवचनेषु रामवद्रूपम् । उडुलोमाः । वातमृगार्थः वातप्रमीशब्दः ईकारान्तः । वातप्रमीः ।

वातप्रमी औ इत्यत्र पूर्वसवर्णदीर्घे प्राप्ते—

### २२४. दीर्घाज्जसि च ६-१-१०५

प्रथमयोरित्यतः पूर्वसवर्ण इति नादिचि इत्यतो न, इचीति च अनुवर्तते । दीर्घात् जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । गौर्यौ, गौर्यः । पूर्वसवर्णदीर्घ प्रतिषेधात् इकोयणचीति यणि वातप्रम्यौ, जसि वातप्रम्यः । अमिपूर्वः वातप्रमीम् । वातप्रमीन्, वातप्रम्या वातप्रमीभ्यां वातप्रमीभ्यः । वातप्रम्ये,

वातप्रम्यः आमि ह्रस्वाद्यन्तत्वाभावात् नुट् न वातप्रम्याम् । वातप्रमी ङौ यणं परत्वात् बाधित्वा सवर्णदीर्घः । वातप्रम्योः, वातप्रमीषु । एवमेव सूर्यार्थकः पपीशब्दः । नेता इत्यर्थे नीशब्दः ईकारान्तः तस्मात् सु प्रत्यये नीः ।

### २१५. अचिश्नुधातुभ्रुवां य्वोरियङुवङौ ६–४–७७

इश्च उश्च यू तयोः य्वोः । इवर्णोवर्णयोरित्यर्थः । श्नुश्च धातुश्च भ्रूश्चेति द्वन्द्वः । प्रत्ययग्रहणपरिभाषया श्नु इत्यनेन श्नुप्रत्ययान्तं गृह्यते । य्वोरिति धातोरेव विशेषणम् । न तु श्नु भ्रुवोः, व्यभिचाराभावात्, असम्भवाच्च । तदन्तविधिः । अधिकृतेन अङ्गेन प्रत्यये इति लभ्यते । अचीत्यस्य प्रत्ययविशेषणतया तदादिविधिः श्नुप्रत्ययान्तस्य अङ्गस्य, इवर्णोवर्णान्तस्य धातोः, भ्रू इत्यस्य च अङ्गस्य अजादौ प्रत्यये परे इयङ् उवङ् इत्येतावादेशौ स्तः । इयङुवङोरनेकाल्त्वेपि ङित्वादन्तादेशः । आन्तरतम्यात् इवर्णस्य इयङ् उवर्णस्य उवङ् । श्नुप्रत्ययान्तस्य–आप्नुवन्ति, शक्नुवन्ति । इवर्णान्तधातोः–चिक्षियतुः, चिक्षियुः, नियौ, नियः । उवर्णान्तधातोः–लुलुवतुः, लुलुवुः । लुवौ, लुवः । नी, लू इत्यनयोरपि क्विबन्ततया 'क्विबन्ता धातुत्वं न जहति' इति धातुत्वेन इयङुवङौ भवतः । भ्रुवौ, भ्रुवः । अचीति किम् ? आप्नुयात् । श्नुधातुभ्रुवामिति किम् ? लक्ष्म्यै, वध्वै । य्वोः किम् ? चक्रतुः । नी औ इकोयणचीति यणं बाधित्वा इयङ् नियौ । एवं नियः अजादौ प्रत्यये सर्वत्र इयङ् । नियं, नियः, निया, निये, नियः नियोः, नियाम् । सप्तम्यां ङिप्रत्यये नी+इ इति स्थिते–

### २२६. ङेराम्नद्याम्नीभ्यः ७–३–२२६

ङेरिति सप्तम्येकवचनम् । नद्यन्तात् आबन्तात् नी इत्येतस्माच्च परस्य ङेः आम् इत्यादेशः स्यात् । नद्यन्तात्–कुमार्याम् । गौर्याम् । आबन्तात्–खट्वायाम् । मालायाम् । नी शब्दात्–नियाम् परत्वात् ङेरामि ततः इयङ् । सुश्रयतीत्यर्थे सुश्रीशब्दः नी शब्दवत् । सप्तम्यां तु ङेराम् नद्याम्नीत्यस्याप्रवृत्त्या सुश्रियि इति विशेषः । शोभना श्रीर्यस्येत्यर्थे सुश्रीशब्दः । सुश्रीः सुश्रियौ सुश्रियः ।

## २२७. यू स्त्र्याख्यौ नदी १-४-३

ई च ऊच यू । अविभक्तिको निर्देशः । स्त्रियमाचक्षाते स्त्र्याख्यौ । शब्दौ इत्यध्याहारः । तत्र यू इति विशेषणं तदन्तविधिः । स्त्रियामित्येव सिद्धे आख्याग्रहणं नित्यस्त्रीलिङ्गलाभार्थम् । ईकारान्तः ऊकारान्तश्च नित्यस्त्रीलिङ्गः शब्दः नदीसंज्ञकः स्यात् । ईकारान्तः—कुमारी, गौरी, लक्ष्मीः । ऊकारान्तः—वधूः, ब्रह्मबन्धूः, यवागूः । यू इति किम् ? मात्रे, दुहित्रे नदीकार्यं न भवति । स्त्रीलिङ्ग इति किम् ? वातप्रम्ये । नित्यग्रहणं किम् ? हे ग्रामणीः, हे सेनानीः, हे खलपूः, । (ह्रस्वो न)

### प्रथमलिङ्गग्रहणं च (वा)

समासादिवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तौ उपसर्जनतया स्त्रीलिङ्गत्वाभावेपि प्राथमिकस्त्रीत्वं पुरस्कृत्य नदीत्वं वाच्यम् ।

## २२८. अम्बार्थनद्योर्ह्रस्वः ७-३-१०७

सम्बुद्धौ चेत्यतः सम्बुद्धाविति अनुवर्तते । अम्बार्थानां नद्यन्तानां चाङ्गानां सम्बुद्धौ परतः ह्रस्वः स्यात् । अम्बार्थानाम्—हे अम्ब, हे अक्क, हे अल्ल । नद्यन्तानाम्—हे कुमारि, हे शार्ङ्गरवि । सुश्रीशब्दस्यापि नदीत्वेन सम्बुद्धौ अम्बार्थेति ह्रस्वे एङ्ह्रस्वादिति सम्बुद्धिलोपे हे सुश्रि इति रूपम् । सुश्रिया । ङे प्रत्यये सुश्री ए इत्यत्र इयङि प्राप्ते—

## २२९. आण् नद्याः ७-३-११२

घेर्ङितीत्यतो अनुवृत्तं ङितीति सप्तम्यन्तं षष्ठ्यन्ततया विपरिणम्यते नद्या इति पञ्चम्यन्तानुरोधात् । नद्यन्तादङ्गात्परस्य ङितः आट् आगमः स्यात् । आट् टित्वात् आद्यवयवः सन् भवति ।

## २३०. आटश्च ६-१-९०

इकोयणचीत्यतोऽचीति, वृद्धिरेचीत्यतः एचीति चानुवर्तते । एकः पूर्वपरयो-रित्यधिक्रियते । आटः अचि परे वृद्धिः एकादेशः स्यात् । कुमार्यै, गौर्यै, ब्रह्मबन्ध्वै । सुश्री+आ ए, सुश्री+ऐ इति जाते इयङादेशः सुश्रियै । ङसिङसोश्च सुश्रियाः ।

आमिं ह्रस्वनद्यापो नुटि सुश्रीणाम्। ङौ ङेराम्नद्याम्नीभ्य इति आमि सुश्रियाम्। एवं शुद्धधी परमधी शब्दौ सुश्री शब्दवत्। प्रध्यायतीति प्रधीः। प्रधी औ इत्यत्र इयङिप्राप्ते-

## २३१. एरनेकाचोऽसंयोगपूर्वस्य ६-४-८२

अचिश्नुधातुभ्रुवाम् इत्यतः धातुग्रहणं अचीति, इणोयण् इत्यतः यण् इति चानुवर्तते। धातोरित्यनेन संयोगो विशेष्यते। धातोरित्यावर्तते। एकमवयव षष्ठ्यन्तम्। अन्यत् स्थानषष्ठ्यन्तम्। एरिति धातोरित्यस्य विशेषणम् तदन्तविधिः। इवर्णान्तस्य धातोरित्यर्थः। अवयवषष्ठ्यन्तस्य धातोरित्यस्य असंयोगपूर्वस्येत्यत्र संयोगांशे, अन्वयः। तेन धात्ववयव संयोगपूर्वभिन्नस्येत्यर्थो भवति। तस्य च एरित्यत्रान्वयः। अधिकृते अङ्गस्य इत्यत्र स्थानषष्ठ्यन्तधातो रन्वयः। तदन्तविधिः। धात्ववयवसंयोगपूर्वभिन्नो यं इवर्णः तदन्तो यो धातु तादृशधात्वन्तस्य अनेकाचोऽङ्गस्य अजादौ प्रत्यये परे यण् आदेशः स्यात् धात्वन्तः, अनेकाजङ्गसम्बन्धी धात्ववयव संयोगपूर्वभिन्नश्च यः इवर्णः तस्य यण् अजादौ प्रत्यये परे इत्यर्थः। निन्यतुः। निन्युः। उन्नयौ, उन्नयः ग्रामण्यौ,, ग्रामण्यः। एरिति किम्? असंयोगपूर्वग्रहणम् इवर्णविशेषणं यथा स्यात् अङ्गविशेषणं मा भूत्। तथासति यवक्रियौ यवक्रियः इत्यत्रापि स्यात् अङ्गस्यासंयोगपूर्वत्वात्। एरित्युक्तौ तु इकारस्य धात्ववयवसंयोगपूर्वत्वात् न दोषः। अनेकाच इति किम्? नियौ। नियः। असंयोगपूर्वस्येति किम्? सुश्रियौ सुश्रियः। धातुना संयोगविशेषणं किम्? उन्नयौ। उन्यः। इहापि यथास्यात्। उत् इति उपसर्गसम्बन्धेन इवर्णस्य संयोगपूर्वत्वेपि संयोगो धातो रवयवो नेति धात्ववयवसंयोगपूर्वभिन्न एव इवर्ण इति यण् भवत्येव। प्रध्यायतीति प्रधीः। प्रध्यौ। प्रध्यः। हे प्रधीः-अनदीत्वात् अम्बार्थेति ह्रस्वो न। प्रध्यं प्रध्यौ। प्रध्यः। प्रध्या। प्रध्ये। प्रध्यः प्रध्योः। प्रध्याम्। प्रध्यि एवं शुद्धं (ब्रह्म) ध्यायतीति शुद्धधीशब्दः। ग्रामणी-सेनानी शब्दावपि प्रकृष्टा धीर्यस्येत्यर्थे प्रधीशब्दः। अत्र धी इत्यस्य नित्यस्त्रीत्वेन प्रथमलिङ्गग्रहण

चेति नदीत्वात् नदीकार्य विशेषः । सम्बुद्धौ अम्बार्थेति ह्रस्वः सम्बुद्धिलोपः हे प्रधि । ङित्सु आण् नद्याः, आटश्च प्रध्यै । प्रध्याः । आमि नद्यन्तत्वात् ह्रस्वनद्याप इति नुट् प्रधीनाम् । ङौ-ङेराम् प्रध्याम् इति । शुद्धा धीर्यस्येति, परमाधीर्यस्येति चेत्यर्थे शुद्धधी परमधी शब्दौ । ताभ्याम् अजादौ एरनेकाच इति यणि प्राप्ते—

## गतिकारकेतरपूर्वपदस्य यण् नेष्यते (वा)

एरनेकाच इति विहितः यण् गतिभिन्नपूर्वस्य, कारकभिन्नपूर्वस्य, च न भवति । शुद्ध परमशब्दयोः गतिकारकेतरत्वात् तत्पूर्वत्वेन धीशब्देकारस्य यणः अप्राप्तौ अचिश्नुधातुरिति विहितः इयङेव । शुद्धधियौ परमधियौ । नदीकार्यं भवति । शुद्धधियै परमधियै इत्यादि । सुष्ठु ध्यायति, शोभनाधीर्यस्येति वार्थे सुधीशब्दः । अजादौ एरनेकाच इति यणि प्राप्ते—

## २३२. न भूसुधियोः ६-४-८५

इणो यण् इत्यतो यण् इत्यतो यण् इति, ओः सुपीत्यतः सुपि इति इको यणचीत्यतः अचीति चानुवर्त्तते । भू, सुधी, इत्येतयोः अजादौ सुपि परे यण् न स्यात् । प्रतिभुवौ । प्रतिभुवः । सुधियौ । सुधियः । सुपीति किम् ? सुध्युपास्यः । अत्र यण् निषेधो न । सुधियम् । सुधिया । सुधियेत्यादि । शोभनाधीर्यस्येत्यर्थस्य सुधीशब्दस्य तु नदीकार्यम् । हे सुधि ! । सुधियै । सुधियाः । सुधीनाम् । सुधियाम् इति । शम्भुशब्दः उकारान्तः । हरिशब्दे प्रवर्तमानानि कार्याणि इहापि भवन्ति अतः हरिवदेव रूपम् । शम्भुः शम्भू शम्भवः अवादेशो विशेषः । विष्णु-भानु-वायु-गुरु प्रभृतयः उकारान्ताः शम्भु-शब्दवत् । विश्वं वसुयस्येति बहुव्रीहौ—

## २३३. विश्वस्य वसुराटोः ६-३-१२८

विश्वशब्दस्य दीर्घः अन्तादेशः स्यात् वसु-राट् इत्येतयोरुत्तरपदयोः परयोः । इति दीर्घः विश्वावसुशब्दः । अथ उकारान्तः क्रोष्टुशब्दः । तत्र विशेषमाह—

## २३४. तृज्वत्क्रोष्टुः ७-१-९५

इतोत्सर्वनामस्थाने इत्यतः सर्वनामस्थाने इति सख्युरसम्बुद्धौ इत्यतः असम्बुद्धौ इति चानुवर्तते। तृचा तुल्यं तृज्वत्। तृच् प्रत्ययः। प्रत्ययग्रहण परिभाषया तदन्तलाभः। तृजन्तेन शब्देन तुल्यं गृह्यते।

कार्यरूपनिमित्तार्थ शास्त्रतादात्म्यशब्दिताः।
व्यपदेशश्च सप्तैतान् अतिदेशान् प्रचक्षते॥

इति अतिदेशाः सप्त परिगणिताः। तत्र प्राधान्यात् इह तृजन्तरूपमेवातिदिश्यते; तत्रापि अर्थतः आन्तर्याच्च क्रोष्टृ इति तृजन्तरूपं न तु कर्तृ भर्तृ इत्यादि। क्रोष्टु शब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्यः असम्बुद्धौ सर्वनामस्थाने परे। क्रोष्टा। क्रोष्टारौ। सर्वनामस्थाने इति किम्? क्रोष्टून्। असम्बुद्धौ किम्? हे क्रोष्टो। क्रोष्टुशब्दस्य तृज्वद्भावेन क्रोष्टृ स् इति स्थिते,

## २३५. ऋदुशनस्पुरुदंसोऽनेहसां च ७-१-९४

सख्युरसम्बुद्धौ इत्यतः असम्बुद्धौ इति अनङ्सौ इति चानुवर्तते। ऋकारान्तस्याङ्गस्य, उशनस्, पुरुदंस्, अनेहस् इत्येतेषां च असम्बुद्धौ सौ परे अनङ् आदेशः स्यात्। ङिच्च-त्यन्तादेशः। कर्ता-हर्ता-पिता-माता-उशना-पुरुदंसा-अनेहा इति। असम्बुद्धाविति किम्? हे कर्तः, हे मातः, हे पितः, हे उशनः हे पुरुदंसः, हे अनेहः। इत्यनङ् क्रोष्टन् स्।

## २३६. अप्तृन् तृच् स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृ होतृ पोतृ प्रशास्तॄणाम् ६-४-११

ढ्रलोप इत्यतो दीर्घ इति, नोपधाया इत्यतः उपधाया इति, सर्वनामस्थाने चासम्बुद्धौ इति चानुवर्तते। तृन् तृचोः प्रत्ययत्वात् प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणम्। अप् इत्येतस्य, तृन्नन्तस्य, तृजन्तस्य, स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृ इत्येतेषां च अङ्गानामुपधायाः दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। अप्-आपः। तृन्-कर्ता, लोकान्। तृच्-भोक्तारः हर्तारः स्वसृ-स्वसा। नप्तृ-नप्ता। नेष्टृ-नेष्टा। त्वष्टृ-त्वष्टा। क्षत्तृ-क्षत्ता। होतृ-होता।

पोतृ-पोता । प्रशास्तृ-प्रशास्ता । ननु नप्त्रादीनां ग्रहणं किमर्थम् ? यावता तेषु केचित् तृजन्ताः केचिच्च तृन्नन्ता व्युत्पाद्यन्ते । तत्र तृन् तृज्ग्रहणेनैव सिद्धमिति चेत् ? अस्ति द्वौ पक्षौ 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति अव्युत्पत्तिपक्षः एकः । अपरो व्युत्पत्तिपक्षः । अव्युत्पत्तिपक्षे तृन् तृजन्तत्वाभावात् नप्त्रादीनां ग्रहणं विध्यर्थम् । व्युत्पत्तिपक्षे तु उणादिनिष्पन्नानां तृन् तृजन्तानां संज्ञाशब्दानां दीर्घो भवति चेत् नप्त्रादीनामेवेति नियमार्थम् । तेन अन्येषां संज्ञाशब्दानां दीर्घो न भवति । पितृ-भ्रातृ-दुहितृ-मातृ-जामातृ शब्दानां दीर्घो न । उद्गातृ शब्दस्य तु भाष्यप्रामाण्यात् दीर्घः भवति । औणादिक संज्ञाशब्देष्वेव नियमात् धातुशब्दस्य तदन्ततया दीर्घो भवत्येव । धाता, धातारौ । तृजन्तत्वात् क्रोष्टृ स् इत्यत्र दीर्घे सुलोपे नलोपे च क्रोष्टा । यद्यपि सर्वनामस्थानेचासम्बुद्धौ इत्येवात्र दीर्घः सिध्यति तथापि परत्वात् अप्तृन् तृजित्येव दीर्घो न्याय्यः । क्रोष्टु औ तृज्वद्भावे क्रोष्टृ औ इति स्थिते—

## २३७. ऋतो ङि सर्वनामस्थानयोः ७-३-११०

ह्रस्वस्य गुण इत्यतः गुण इत्यनुवर्तते । अधिकृते अङ्गस्येत्यत्र ऋतः इति विशेषणम् । तदन्तविधिः । ऋकारान्तस्याङ्गस्य ङौ, सर्वनामस्थाने च परे गुणः स्यात् । ङौ—पितरि, मातरि, भ्रातरि, कर्तरि । सर्वनामस्थाने—कर्तारौ, कर्तारः, मातरौ, मातरः । गुणे रपरे अकारे क्रोष्टर् औ, अप्तृन्निति दीर्घे क्रोष्टारौ, क्रोष्टारः । हे क्रोष्टः । क्रोष्टारम् । क्रोष्टून् ।

## २३८. विभाषा तृतीयादिष्वचि ७-१-९७

तृज्वत्क्रोष्टुरिति अनुवर्तते । अचि इत्यस्य तृतीयादिषु इत्यत्रान्वयः । तदादिविधिः । क्रोष्टु शब्दस्य तृजन्तः क्रोष्टृ शब्दः आदेशो वा स्यात् अजादिषु तृतीयादिषु प्रत्ययेषु परेषु । क्रोष्ट्रा पक्षे क्रोष्टुना । क्रोष्ट्रे-क्रोष्टवे । ङसिङसोः तृज्वद्भावे क्रोष्टृ+अस्—

## २३९. ऋत उत् ६-१-१११

एङः पदान्तादित्यतः अतीति, ङसिङसोश्चेत्यतः ङसिङसोरिति चानुवर्तते ।

एकः पूर्वपरयोरित्यधिक्रियते । अङ्गस्याक्षेपः । ऋकारान्तादङ्गात् ङसिङसोरिति परे पूर्वपरयोः उकारः एकादेशः स्यात् । ऋकारस्य अकारस्य च स्थाने प्राप्नुवतः उकारस्य ऋकारस्थानिकत्वानपायात् उरण्रपरः इति रपरत्वमत्र भवति । क्रोष्टुर् स् इति जाते—

## २४०. रात्सस्य ८-२-२४

संयोगान्तस्य लोपः इत्यनुवर्त्तते । संयोगान्तपदस्य यो रेफः तस्मादुत्तरस्य सकारस्यैव लोपः स्यात् नान्यवर्णस्य । संयोगान्तलोप इत्येव सिद्धे नियमार्थोऽयमारम्भः । इति सस्य लोपे क्रोष्टुर्, विसर्गे क्रोष्टुः । सस्यैवेति किम्? ऊर्क्-अमार्ट् अत्र ककारटकारयोः लोपो मा भूत् । आमि क्रोष्टु आम् इति स्थिते नुटोपि परत्वात् तृज्वद्भावप्राप्ते—

## नुम्-अचिर-तृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन (वा)

वारीणाम्—इकोचीति नुमः पूर्वं नुट् । तिसृणाम्—अचिरऋतः इति रभावात्पूर्वं नुट् । क्रोष्टूनाम्-तृज्वद्भावात्पूर्वं नुट् । तृज्वद्भावात्पूर्वमेव ह्रस्वनद्यापो नुट् इति नुटि नामीति दीर्घे क्रोष्टूनाम् । ङौ क्रोष्टृ इ इति स्थिते ऋतोङिसर्वनामस्थानयोः इति गुणे क्रोष्टरि । पक्षे हलादौ च शम्भुवत् । हूहू शब्दः गन्धर्ववाची ऊकारान्तः हूहूः हूह्वौ हूह्वः । दीर्घाज्जसि चेति पूर्वसवर्णदीर्घनिषेधे इकोयणचीति यण् । हे हूहूः, हूहूम्, हूह्वौ, हूहून्, हूह्वा, हूह्वे, हूह्वः, हूह्वोः, हूह्वाम्, हूह्वि । लुनातीति लूशब्दः लूः तस्याजादौ अचिश्नुधातु इति उवङ् लुवौ, लुवः, लुवं, लुवा, लुवे, लुवः, लुवां, लुवि इति । एवं परमलूः परमलुवौ परमलुवः इत्यादि । खलं पुनातीत्यर्थे खलपू शब्दः । खलपूः । खलपू+औ उवङि प्राप्ते—

## २४१. ओः सुपि ६-४-८३

एरनेकाचोऽसंयोगपूर्वस्य इति सूत्रं एरिति वर्जमनुवर्तते । अचिश्नुधातु इत्यतः अचीत्यनुवृत्तं सुपि विशेषणम् । तदादिविधिः । धात्ववयवसंयोगपूर्वभिन्नो वर्णान्तो यो धातुः तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि परे । अत्रापि

गतिकारकेतरपूर्वपदस्य यण् नेष्यते इति वर्तते । खलप्वौ, खलप्वः । सुपीति किम् । लुलुवतुः, लुलुवुः । अनेकाचः किम् ? लुवौ, लुवः । असंयोगपूर्वस्येति किम् ? कटप्रुवौ, कटप्रुवः । गतिकारकभिन्नपूर्वत्वात् परमलुवौ परमलुवः इत्यत्रापि यण् न । स्वस्मात् भवतीति स्वभूः शब्दः । स्वभूः । अजादौ ओः सुपीति प्राप्तस्य यणः न भूसुधियोरिति प्रतिषेधात् अचिश्नुधातु इति उवङेव । स्वभुवौ स्वभुवः स्वभुवमित्यादि । एवं स्वयं भवतीति स्वयम्भूशब्दः । वर्षासु भवतीत्यर्थे भेकवाची वर्षाभूशब्दः । वर्षाभूः । तस्याजादौ न भूसुधियोरिति यण् निषेधे प्राप्ते—

## २४२. वर्षाभ्वश्च ६–४–८४

ओः सुपीत्यनुवर्तते । अचि यण् इति च वर्तते । वर्षाभूशब्दस्य उवर्णस्य अजादौ सुपि परे यण् स्यात् । वर्षाभ्वौ, वर्षाभ्वः, वर्षाभ्वम्, वर्षाभ्वा, वर्षाभ्वे इत्यादि हूहूवत् ।

### पुनर्भ्वश्चेति वक्तव्यम् (वा)

पुनर्भू शब्दोकारस्यापि यण् भवतीति वाच्यम् । पुनर्भूः पुनर्भ्वौ पुनर्भ्वः इत्यादि वर्षाभूवत् । अयं यौगिकः । द्विः ऊढा इत्यर्थे पुनर्भूशब्दः नित्यस्त्रीलिङ्गः । कारायां भवतीत्यर्थे काराभूशब्दः । काराभूः काराभुवौ काराभुवः । स्वयम्भूवत् । धातृ शब्दः तृन्नन्तः तृजन्तो वा । तस्य ऋदुशनेत्यनङ्; अप्तृन्निति दीर्घः, सुः नलोपौ धाता, सम्बुद्धौ नानङ्, ऋतोर्ङीति गुणः हे धातः । ऋतोर्ङीति गुणः, अप्तृन्निति दीर्घः, धातारौ धातारः । धातरं, धातॄन्, धात्रा, धात्रे, ङसिङसोः ऋतउत् धातुः । धात्रोः, आमि ह्रस्वनद्याप इति नुटि नामीति दीर्घे धातॄनाम् इति स्थिते—

### ऋवर्णान्नस्य णत्वं वाच्यम् (वा)

इदं वार्तिकं णत्वविधायकसूत्राणां सर्वेषां शेषभूतम् । ऋकारात्परस्य नकारस्य णत्वं भवति । धातॄणाम् । पितॄणाम् । मातॄणाम् । नप्ता नप्तारौ नप्तारः । त्वष्टा त्वष्टारौ त्वष्टारः । क्षत्ता क्षत्तारौ क्षत्तारः । होता होतारौ

होतारः । उद्गाता उद्गातारौ उद्गातारः इत्यादि धातृवत् । नप्त्रादि ग्रहणस्य नियमार्थत्वात् अप्तृन्तृजिति दीर्घाप्रवृत्त्या भ्राता भ्रातरौ भ्रातरः, पिता पितरौ पितरः, जामाता जामातरौ जामातरः इत्यादि । मनुष्यवाची नृ शब्दः । तस्य पितृवद्रूपाणि । आमि नामीति नित्यं दीर्घे प्राप्ते—

## २४३. नृच ६-४-६

नृ इति लुप्तषष्ठ्यन्तं पदम् । नामीति सूत्रं, ढ्रलोपे इत्यतो दीर्घ इति, छन्दस्युभयथा इत्यतः उभयथा इति चानुवर्तते । उभयथा इत्यस्य वेत्यर्थः । नृ इत्येतस्य नामि परे वा दीर्घः स्यात् । नृणाम्, नृणाम् इति रूपद्वयम् । अथ ओकारान्तः गो शब्दः ।

## २४४. गोतो णित् ७-१-९०

इतोत् सर्वनामस्थाने इत्यतः सर्वनामस्थाने इत्यनुवृत्तं प्रथमान्ततया विपरिणम्यते । गोत इति तपरकरणम् । गो शब्दात् परं सर्वनामस्थानं णित्स्यात् । णित्वप्रयुक्त कार्यकारी स्यात् इति भावः । तेन अचोञ्णितीति वृद्धिर्भवति । गौः गावौ गावः । तपरकरणं किम्? चित्रगुः, शंवलगुः इत्यत्र मा भूत् ।

## २४५. औतोम्शसोः ६-१-९३

आ ओत् इति छेदः । ओत इति तपरकरणम् । अम् च शस् च अम्शसौ तयोः । अवयवषष्ठ्यन्तमेतत् । अचीत्यनुवर्तते । एकः पूर्वपरयोरधिकृतम् । शसा साहचर्यात् अम् सुबेव गृह्यते । ओकारात् अम् शसोः अचि परे पूर्वपरयोः आकारः एकादेशः स्यात् । वृद्ध्यपवादः । गो+अम् वृद्धिं बाधित्वा आकारः गाम् । गाः । अमः सुप एव ग्रहणात् अचिनवम्, असुनवम् इति मिबादेशस्य अमो ग्रहणं न । गवा, गवे ङसिङसोः ङसिङसोश्चेति पूर्वरूपे गोः इत्यादि ।

## ओतोणिदिति विहितविशेषणं च वक्तव्यम्

न केवलं गो शब्दात् किन्तु ओकारान्तात् शब्दात् विहितं सर्वनामस्थानं णिदिति वाच्यमिति वार्तिककारः । तेन सुद्यो शब्दात् सर्वनामस्थानं णिद्भवति ।

सुद्यौः सुद्यावौ सुद्यावः । विहितत्वोक्तेः हे भानो हे भानवः इत्यत्र न भवति ओकारान्तात् विहितत्वाभावात् । सुद्याम् सुद्यावौ सुद्याः । शेषं गो शब्दवत् । धनवाची रै शब्दः ऐकारान्तः ।

### २४६. रायो हलि ७-२-८५

अष्टन आ विभक्तौ इत्यतः आ, विभक्तौ इत्यनुवर्तते । राय इति रै शब्दस्य षष्ठ्यन्तम् । रै इत्येतस्य हलादौ विभक्तौ आकारः आदेशः स्यात् । अलोन्त्यस्येति अन्त्यस्य ऐकारस्य भवति । राः । अजादौ आयादेशः रायौ । रायः । रायम् । राभ्याम् । रासु । चन्द्रवाची ग्लौ शब्दः औकारान्तः । हलादौ न विकारः । अजादौ आवादेशः । ग्लौः ग्लावौ ग्लावः । ग्लावम् । ग्लौभ्यामित्यादि । (सूत्राणि १४६)

इत्यजन्तपुल्लिङ्ग प्रकरणम्

---

# अथ अजन्तस्त्रीलिङ्ग प्रकरणम्

रमते इति रमा । टाप् प्रत्ययान्तः । प्रत्ययान्तत्वेन अप्रातिपदिकत्वेपि ङ्याप्प्रातिपदिकात् इति सूत्रेण प्रातिपदिकादिव ङ्यन्तात् आबन्ताच्च सुबुत्पत्ते-सुमतत्वात् सुप् । रमा स्, हल्ङ्यादिना सोर्लोपे रमा । रमा औ इति स्थिते ।

### २४७. औङ आपः ७-१-१८

जसः शी इत्यतः शी इत्यनुवर्तते । औङ् इति प्रथमाद्वितीयाद्विवचनयोः, आप इति टाप् डाप् चापां च ग्रहणम् । आबन्तादङ्गात्परस्य औङः शी इत्यादेशः स्यात् । रमा-ई आद्गुणः रमे । एवं बहुराजे । कारीषगन्ध्ये ।

### २४८. सम्बुद्धौ च ७-३-१०६

बहुवचने झल्येत् इत्यतः एत् इति, आङि चापः इत्यतः आप इति चानुवर्तते । आबन्तस्य एकारः स्यात् सम्बुद्धौ परतः । अलोऽन्त्यस्येति अन्त्यस्य भवति । हे रमे स् एङ्ह्रस्वादिति सम्बुद्धिलोपः । हे रमे, हे बहुराजे, हे कारीषगन्ध्ये हे रमे हे रमाः । रमाम् । रमे । शसि रमा अस्

पूर्वसवर्णदीर्घे सति कृतपूर्वसवर्णदीर्घस्यापि, स्थानिवद्भावात् तस्माच्छसो न इति नत्वं न भवति । रमाः ।

### २४९. आङि चापः ७-३-१०५

ओसि चेति सूत्रम् एदिति चानुवर्तते । आङ् इति टा संज्ञेत्युक्तम्। आबन्तस्याङ्गस्य एकारः अन्तादेशः स्यात् आङि ओसि च परे । रमे आ, अयादेशः रमया । मालया, मालयोः । बहुराजया, बहुराजयोः । कारीषगन्ध्यया, कारीषगन्ध्ययोः । आप इति पितो ग्रहणेन विश्वपा विश्वपोः इत्याकारान्तान्न भवति । रमाभ्याम्, रमाभिः ।

### २५०. याडापः ७-३-११३

घेर्ङितीत्यतोऽनुवृत्तं ङितीति षष्ठ्यन्ततया विपरिणम्यते । आबन्तादङ्गात्परस्य ङितो याडागमः स्यात् । टित्वादाद्यवयवः । रमा ए, रमाया ए वृद्धिरेचीति वृद्धौ रमायै । बहुराजायै । कारीषगन्ध्यायै । ङसिङसोः याडागमे सति अकः सवर्णे दीर्घः रमायाः । ओसि आङि चापः इति अङ्गान्त्यस्य एकारे, अयादेशे, रमयोः । रमा आम् आबन्तत्वात् ह्रस्वनद्यापः इति नुटि 'पर्जन्यवल्लक्षणप्रवृत्तिः' इति न्यायेन नामीति दीर्घे अट्कुप्वाङ् इति णत्वे च रमाणाम् । ङौ रमा इ ङेराम्नद्याम्नीभ्यः इति ङेरामादेशे, याडापः इति याटि सवर्णदीर्घे च रमायाम् । रमयोः । रमासु । एवं दुर्गा-माला-खट्वा-बहुराज-कारीषगन्ध्याप्रभृतयः आबन्ताः शब्दाः । आबन्तः सर्वशब्दः, रमावत्। ङित्सु तु विशेषः ।

### २५१. सर्वनाम्नः स्याड्ढ्रस्वश्च ७-३-११४

सर्वनाम्न इति पञ्चमी । याडापः इत्यतः आप इत्यनुवृत्तं सर्वनाम्न इत्यत्रान्वेति । अनुवृत्तं ङितीति षष्ठ्यन्तं भवति । अनेन सूत्रेण स्याडागमः ह्रस्वश्चेति द्वयं विधीयते । ह्रस्वविधाने आप इति षष्ठ्यन्तमाश्रयणीयम्। आबन्तात् सर्वनाम्नः परस्य ङितः स्याडागमः स्यात् । आपः ह्रस्वश्च स्यात् । याटोऽपवादः । ङे प्रत्यये याटं बाधित्वा स्याडागमे आपः ह्रस्वे वृद्धौ

सर्वस्यै। एवं ङसिङसोः सर्वस्याः। सर्वस्याः। आमि सर्वा आम् आमि सर्वनाम्नः सुडिति सुट् सर्वासाम्। ङौ सर्वा इ 'ङेराम्' इत्याम्, सुटं बाधित्वा परत्वात् स्याड्ढ्रस्वौ सर्वस्याम्। सर्वयोः। सर्वासु। आबन्तस्य सर्वा शब्दस्य सर्वादिगणे पाठाभावात् सर्वनामत्वाभावेऽपि 'प्रातिपदिकग्रहणे लिङ्ग-विशिष्टस्यापि ग्रहणम्' इति परिभाषया सर्वनामत्वं बोध्यम्। आबन्तत्वं तु परादिवद्भावेन। एवम् आबन्ताः विश्वादयः। उत्तरस्याश्च पूर्वस्याश्च दिशोर्य-दन्तरालम्, उत्तरपूर्वा इति शब्दः। 'दिङ्नामान्यन्तराले' इति सूत्रविहित समासनिष्पन्नः। तस्य उपसर्जनत्वात् सर्वनामत्वे अप्राप्ते आह—

### २५२. विभाषा दिक्समासे बहुव्रीहौ १-१-२८

सर्वादीनि इत्यतः सर्वनामग्रहणमनुवर्तते। दिशामुपदिष्टः समासो दिक्समासः। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषया 'दिङ्नामान्यन्तराले' इति विहितः प्रतिपदोक्तः समासः इह गृह्यते। दिगुपदिष्टे समासे सर्वनामसंज्ञा वा स्यात्। उत्तरपूर्वस्यै-उत्तरपूर्वायै। दक्षिण-पूर्वस्यै-दक्षिणपूर्वायै। सर्वनामत्वे स्याड्ढ्रस्वौ। उत्तरपूर्वस्याः पक्षे याट् उत्तरपूर्वायाः। सर्वनामत्वे सुट् उत्तरपूर्वासाम्, पक्षेनुट् उत्तरपूर्वाणाम्। उत्तर पूर्वस्याम् उत्तरपूर्वायाम्। प्रतिपदोक्तस्यैव इह ग्रहणात् या उत्तरा सा पूर्वा-यस्याः। उन्मुग्धायाः सा उत्तरपूर्वा, अनेकमन्यपदार्थे इति बहुव्रीहिः। तत्र सर्वनाम संज्ञा न। उत्तरपूर्वायै इत्येव। बहुव्रीहिग्रहणं स्पष्टार्थम्। अन्तरा शब्दस्य बाह्याद्यर्थत्वे सर्वनामसंज्ञया अन्तरस्यै शालायै बाह्यायै इत्यर्थः। अन्तरस्याः। अन्तरासाम्, अन्तरस्याम्। गणसूत्रे 'अपुरीति वक्तव्यम्' इती पूः शब्दस्य विशेष्यत्वे सर्वनामसंज्ञायाः प्रतिषेधात् सर्वनामकार्यं न भवति अन्तरायै पुर्यै; अन्तरायाः पुर्याः इत्यादि। पूः शब्दस्यैव पर्युदासेन नगर्यादेरग्रहणात् अन्तरस्यै-नगर्यै अन्तरस्याः नगर्याः इत्येव। द्वितीया, तृतीया एकादेशस्य पूर्वान्तत्वेन ग्रहणात् आबन्तस्यापि तीयप्रत्ययान्तत्वेन 'तीयस्य ङित्सूपसंख्यानम्' इति वा सर्वनामत्वे द्वितीयस्यै-द्वितीयायै। तृतीयस्यै-तृतीयायै। द्वितीयस्याः-द्वितीयायाः।

तृतीयस्याः-तृतीयायाः । द्वितीयस्याम्-द्वितीयायाम् । तृतीयस्याम्-तृतीयायाम् । इति भवति । अम्बा-अक्का-अल्ला इत्याकारान्ताः अम्बार्थाः । तेषां सम्बुद्धौ अम्बार्थेति ह्रस्वः हे अम्ब ! हे अक्क ! हे अल्ल इति । शेषं रमावत् ।

## असंयुक्तडलकवतां ह्रस्वो न

तेन हे अम्बाडे, हे अम्बाले, हे अम्बिके इत्यत्र अम्बार्थत्वेपि न ह्रस्वः । जरा शब्दात् सौ हल्ङ्यादिना लोपे जरा । अजादौ 'जराया जरसन्यतरस्याम्' इति जरसादेशः जरसौ । जरसः । जरसम् । जरसः । जरसा । जरसे । जरसः । जरसोः । जरसाम् । जरसि । जरसोः । पक्षे हलादौ च रमावत् । औङि शीभावं, आमि नुटं च परत्वात् बाधित्वा जरस् भवति । ततः निमित्ताभावात् शीभावः नुट् च न भवति । आङि परमपि आङिचापः इत्येत्वं नित्यत्वात् बाधते जरस् । कृतेपि एत्वे एकदेशविकृतमनन्यवदिति न्यायेन जरसः प्रवृत्त्यवकाशतया नित्यत्वम् । ङे प्रत्यये अन्तरङ्गत्वात् जरस् । आकाररूपापः परस्य ङितः सुपः विहितत्वेन याटो बह्वाश्रयत्वात् बहिरङ्गत्वात्, ङौ च परमपि ङेराम् नित्यत्वात्, याटं च अन्तरङ्गत्वात् बाधित्वा जरस् प्रवर्तते । ननु जरसि कृतेपि स्थानिवत्वात् आबन्ततामाश्रित्य औङ आप इति शी; आङि चाप इति एत्वम्, याडाप इति याट्, ह्रस्वनद्याप इति नुट्, ङेराम् इति आम् च प्राप्नुवन्ति इति चेत् ? उक्तेषु सूत्रेषु आ आप् इति प्रश्लिष्य आकाररूपाबन्तात् इत्यर्थाश्रयणेन अल्विधित्वात् स्थानिवद्भावो न भवति अनल्विधौ इति प्रतिषेधात् । नासिकाशब्दस्य शसादौ पद्दन्नोमास् इति नसादेशः । नासिका नासिके नासिकाः । नासिकाम् नासिके नासिकाः-नसः । नसा, नस्+भ्याम् ससजुषोरुः रुत्वे, हशि चेत्युत्वे गुणे च नोभ्याम् इत्यादि पक्षे रमावत् । निशा शब्दस्य पद्दन्नोमास् इति निश् आदेशः । निशः । निशा । भ्यामि निश् भ्यामिति स्थिते—

२५३. व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८-२-३६

झलो झलि इत्यतः झलि इति, स्कोः संयोगाद्योरन्ते चेत्यतः अन्ते इति चानुवर्तते । पदस्येत्यधिकृतम् । व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज इत्येतेषां

छकारान्तानां, शकारान्तानां च षकारः आदेशः स्यात् झलि परे, पदान्ते च। व्रश्च-मूलवृट्। भ्रस्ज-धानाभृट्। सृज-रज्जुसृट्। मार्जि-कंसपरिमृट्। यज उडुयट्। सम्राट् स्वराट्। विभ्राट्। छकारान्तानाम्-प्रच्छ-प्रष्टा-प्रष्टुम्-प्रष्टव्यम्। शब्दप्राट्। शकारान्तानाम्-विश-वेष्टा-वेष्टुम्-वेष्टव्यम् विट्। शान्तत्वेन षत्वे नि.ष् भ्यामिति जाते झलांजशोन्ते इति जश्त्वेन डकारे निड्भ्याम्। निड्भिः। निशे। निड्भ्यः। निशः निशोः निशाम्। निशि निशोः। ङौ निश् सु षत्वे जश्त्वे च निड्सु इति स्थिते डस्धुट् इति वा धुटि खरिचेति डधयोः द्वयोः चर्त्वे निट्त्सु इति। धुडभावे निट्सु। इह न पदान्ताट्टोरनाम् इति प्रतिषेधात् ष्टुत्वं न भवति। मतिशब्दः इकारान्तः हरिवत्। शसि पूर्वसवर्णदीर्घे स्त्रीत्वान्नत्वाभावे मतीः। तृतीयैकवचने 'आङो नाऽस्त्रियाम्' अस्त्रियामिति पर्युदासात् नाभावेऽप्राप्ते इकोयणचीति यण् मत्या।

## २५४. ङिति ह्रस्वश्च १-४-६

यू स्त्र्याख्यौ नदी इति, 'नेयङुवङ्स्थानावस्त्री' इति सूत्रं नञ् वर्जं, वामि इत्यतो वेति चानुवर्तते। अत्र सूत्रे वाक्यद्वयम्। प्रथमवाक्ये यू, स्त्र्याख्यौ, अस्त्री, इयङुवङ्स्थानौ इति सम्बध्यते। द्वितीये यू, वा, स्त्र्याख्यौ इति सम्बध्यते। प्रथमवाक्ये सम्बद्धस्य यू इत्यस्य ईश्च ऊश्च यू ईकारोकारौ इत्यर्थः विवक्षितः। स्त्र्याख्यौ इत्यस्य स्त्रियमेवाचक्षाते स्त्र्याख्यौ नित्यस्त्रीलिङ्गौ इत्यर्थः इष्यते। इयङुवङ्स्थानौ इत्यस्य इयङुवङोः स्थानं=स्थितिः ययोस्तौ इयङुवङ्प्राप्तियोग्यौ इत्यर्थः। अस्त्रीति स्त्रीशब्दभिन्नौ इत्यर्थः। ततश्च इयङुवङ्प्राप्तियोग्यौ, स्त्रीशब्दभिन्नौ, नित्यस्त्रीलिङ्गौ, ई-ऊकारौ वा नदीसंज्ञौ स्तः ङितिपरे इति प्रथमवाक्यार्थः। द्वितीयवाक्ये सम्बद्धे यू इत्यत्र ह्रस्व इति प्रत्येकमन्वेति। तेन ह्रस्वेवर्णोवर्णौ इत्यर्थः सिध्यति। अत्र सम्बद्धस्य स्त्र्याख्यौ इत्यस्य स्त्रीलिङ्गौ इत्येतावदेव विवक्षितं व्याख्यानात्। स्त्रीलिङ्गौ ह्रस्वेवर्णोवर्णौ नदीसंज्ञौ वा स्तः ङिति परे। इति द्वितीयवाक्यस्यार्थः। ह्रस्वयोरप्राप्तायां, दीर्घयोः नेयङुवङ्स्थानावस्त्री इति प्रतिषिद्धायां नदीसंज्ञायां वचनमिदम्। नदीत्वपक्षे घिसंज्ञायाः अभावात् मति ए

इत्यत्र आण् नद्याः आडागमे आटश्चेति वृद्धौ यणि च मत्यै । नदीत्वाभावपक्षे घित्वात् घेर्ङितीति गुणे अयादेशे च मतये । ङसिङसोः मत्याः मतेः मत्योः, आमि ह्रस्वान्तत्वात् ह्रस्वनद्यापो इति नुटि मतीनाम्, ङौ मति+इ इति स्थिते नदीत्वपक्षे ङेराम् इत्यामं बाधित्वा परत्वात् 'औत्' इत्यौत्वे प्राप्ते—

## २५५. इदुद्भ्याम् ७-३-११७

ङेराम् इति सूत्रात् ङेराम् इति नदीग्रहणं चानुवर्तते । नदीसंज्ञकाभ्याम् इकारोकाराभ्यां परस्य ङेराम् स्यात् । आमादेशे, यणि मत्याम् । नदीत्वाभावे अच्चघेरिति अत्वसंनियोगशिष्टमौत्वम् मतौ । एवं श्रुति-कृति-बुद्धि प्रभृतयः ।

## २५६. त्रिचतुरोः स्त्रियां तिसृचतसृ ७-२-९९

अष्टन आ विभक्तौ इत्यतः विभक्तौ इत्यनुवर्तते । अङ्गस्येत्यस्याधिकारः । स्त्रियामिति श्रुतत्वात् त्रिचतुरोर्विशेषणं नाङ्गस्य । स्त्रियां वर्तमानयोः स्त्रीलिङ्गयोः त्रिचतुर् इत्येतयोः क्रमात् तिसृ चतसृ आदेशौ स्तः विभक्तौ परतः । तिस्रः । चतस्रः । तिसृभिः-चतसृभिः । स्त्रियामिति किम् ? त्रयः, चत्वारः, त्रीणि, चत्वारि । स्त्रियामित्यस्य त्रिचतुरोरेव विशेषणात् यदा त्रिचतुः शब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे तदाप्यादेशौ भवत एव यथा-प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा ब्राह्मणः । इहाङ्गस्य पुंस्त्वेपि तिस्रादेशः । एवं प्रियतिसृकुलम् । प्रियचतसा । प्रियचतसृ । यदा च त्रिचतुर्शब्दौ लिङ्गान्तरे, अङ्गं च स्त्रियां वर्तते तदा आदेशौ न भवतः । प्रियास्त्रयो अस्याः, प्रियाणि त्रीणि वा अस्याः सा प्रियत्रिः प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः इति रूपम् ।

## २५७. अचि रऋतः ७-२-१००

तिसृ चतसृ इत्यनुवर्तते । षष्ठ्यन्ततया विपरिणम्यते । विभक्ताविति वर्तते । तिसृ चतसृ एतयोः ऋकारस्य स्थाने रेफादेशः स्यात् अजादौ विभक्तौ परतः । तिस्रः तिष्ठन्ति । तिस्रः पश्य । चतस्रः तिष्ठन्ति । चतस्रः पश्य । यद्यपि इकोयणचीति यणा सिध्यति तथापि जसि ऋतोङीति गुणस्य, शसि प्रथमयोः इति पूर्वसवर्णदीर्घस्य, प्रियतिस्रः आगतः प्रियतिस्रः स्वमित्यत्र ङसिङसोश्च ऋत उत्

इति उत्वस्य च बाधनार्थमिदमारम्भणीयम् । अचि किम् ? तिसृभिः, चतसृभिः । जसि ऋतोऽङीति गुणं बाधित्वा रत्वम् । तिस्रः । शसि पूर्वसवर्णदीर्घस्य अपवादो रत्वम् तिस्रः । तिसृभिः तिसृभ्यः । आमि तिसृ आम् इति स्थिते ह्रस्वनद्याप इति नुटं बाधित्वा रत्वे प्राप्ते ।

## नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन

इति रत्वं बाधित्वा नुट् भवति तिसृ नाम् नामीति दीर्घे प्राप्ते—

## २५८. न तिसृ चतसृ ६–४–४

ढ्रलोप इत्यतो दीर्घ इति, नामि इति सूत्रं चानुवर्तते । तिसृ-चतसृ एतयोः नामि दीर्घो न स्यात् । इति दीर्घनिषेधः । 'ऋवर्णान्नस्य णत्वं वाच्यम् ।' इति णत्वम् । तिसृणाम् । चतसृणाम् । नामि, इदमेव दीर्घप्रतिषेधवचनं ज्ञापकम् अचिरऋतः इत्येतस्मात् पूर्वविप्रतिषेधेन नुडागमो भवतीति । प्रियाः त्रयः यस्यास्सा, प्रियाणि त्रीणि वा यस्यास्सा इति बहुव्रीहौ प्रियत्रिशब्दः स्त्रीलिङ्गः मति शब्दवत् । आमि तु प्रियत्रि आम् इति स्थिते त्रेस्त्रयः इत्यस्य तदन्तेपि प्रवृत्या त्रेः त्रयादेशो भवति प्रियत्रयाणाम् । नित्यद्विवचनान्तः द्विशब्दः इकारान्तोपि स्त्रियां विभक्तौ त्यदादीनामः इत्यत्वे टापि सवर्णदीर्घे द्वा इति भवति । तस्य रमावद्रूपाणि । गौरी शब्दः ङीबन्तः । तस्मात् सुः हल्ङ्यादिलोपः गौरी । औङि जशि च प्रथमयोरिति प्राप्तस्य पूर्वसवर्णदीर्घस्य दीर्घाज्जसि चेति निषेधे यण् । गौर्यौ । गौर्यः । अम्बार्थेति ह्रस्वः हे गौरि । गौरीम् । गौर्यौ । गौरीः । ङित्सु नदीकार्यम् । गौर्यै गौर्याः । गौरीणाम् । गौर्याम् । एवं वाणीनदी-कुमारी-वधूटी इत्यादयः । सखीशब्दः गौरीवदेव । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया सखिशब्दस्य 'अनङ्सौ' इति विहितः अनङ् सख्युरसम्बुद्धौ इति विहितं णित्वं च सखीशब्दे न भवतः ।

## विभक्तौ लिङ्गविशिष्टाग्रहणम् (परि)

विभक्तिनिमित्तके कार्ये कर्तव्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं

नास्तीति प्रतिषेधात् । लक्ष्मीशब्दः अङ्यन्तः । तेन हल्ङ्याबिभ्यात् सुलोपो न लक्ष्मीः । शेषं गौरीवत् । ङीबन्तः स्त्रीशब्दः । सुलोपः । स्त्री हे स्त्रि । स्त्री औ इति स्थिते इवर्णान्तस्य धातुत्वाभावात् अचिश्नुधातु- इति इयङि अप्राप्ते ।

## २५९. स्त्रियाः ६-४-७९

अचिश्नुधातु-इत्यतः अचीति इयङिति चानुवर्तते । स्त्रीशब्दस्य अजादौ प्रत्यये परे इयङ् स्यात् । स्त्रियौ । स्त्रियः । अमि-शसि च स्त्री अम् स्त्री अस् इति स्थिते—

## २६०. वाम् शसोः ६-४-८०

स्त्रिया इति इयङिति चानुवर्तते । स्त्रियाः अमि असि च परे इयङ् वा स्यात् । इयङि स्त्रियम् । स्त्रियः । इयङभावे अमि पूर्वः स्त्रीम् पूर्वसवर्णदीर्घे स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । स्त्रियाः । स्त्रियोः आमि स्त्री आम् इति स्थिते स्त्रियाः इतीयङं परत्वाद्बाधित्वा नुट् स्त्रीणाम् ङौ ङेराम् स्त्रियाम् । स्त्रियोः । स्त्रीषु । श्रयन्त्येतामिति श्रीशब्दः अङ्यन्तत्वान्न सुलोपः । श्रीः । अजादौ अचिश्नुधात्विति इयङ् श्रियौ श्रियः ।

## २६१. नेयङुवङ्स्थानावस्त्री १-४-४

यू स्त्र्याख्यौ नदी इत्यतो यू,-नदी इत्यनुवर्तते । स्थान शब्दः भा ल्युडन्तः, स्थितिरित्यर्थः । इयङुवङोः स्थानं ययोरिति बहुव्रीहिः । इयङुवङ् योस्थौ इत्यर्थः । यू इति दीर्घावेव ईकारोकारौ गृह्येते अस्त्रीति पर्युदासात् इयङुवङ् प्राप्तियोग्यौ ईकारोकारौ नदीसंज्ञौ न स्तः स्त्रीशब्दं वर्जयित्वा हे श्रीः । हे भ्रूः । अस्त्रीति किम् ? हे स्त्री नदीसंज्ञानिषेधात् नदी अम्बार्थेति ह्रस्वो न हे श्रीः । अमि पूर्वरूपं बाधित्वा इयङ् श्रियम् । श्रियौ श्रियः । श्रिया श्रीभ्यां श्रीभिः । ङित्सु ङितिह्रस्वश्चेति वा नदीसंज्ञा नदीत्वपक्षे आट् वृद्धिः श्रियै, नदीत्वाभावे श्रिये श्रियाः-श्रियः श्रियोः ।

## २६२. वामि १–४–५

यू स्त्र्याख्यौ नदी इति, नञ्वर्जं नेयङुवङ्स्थानावस्त्री इति चानुवर्तते। इयङुवङ्प्राप्तियोग्यौ ईकारोकारौ वा नदीसंज्ञौ स्तः आमि, स्त्रीशब्दं वर्जयित्वा। श्रीणाम्-श्रियाम्। भ्रूणाम्-भ्रुवाम्। अस्त्रीत्युक्तेः स्त्रीणाम्। आमि नदीत्वपक्षे ह्रस्वनद्याप इति नुटि श्रीणाम्। नदीत्वाभावे इयङ् श्रियाम्। ङौ नदीत्वे ङेराम्, आट्-इयङ् श्रियाम्। नदीत्वाभावे इयङ् श्रियि। श्रियोः श्रीषु। ग्रामणी–सेनानी शब्दयोः नित्यस्त्रीत्वाभावेन नदीत्वाभावात् पुंवदेव रूपम्। क्रोष्टुशब्दः उकारान्तोऽपि ईकारान्तः सम्पद्यते। तथाहि—

## २६३. स्त्रियाञ्च ७–१–९६

तृज्वत्क्रोष्टुरित्यनुवर्तते। क्रोष्टुशब्दः तृजन्तवद्रूपं लभते स्त्रियाम्। ऋकारान्तानां शब्दानां स्त्रियां ङीप् स्त्रीप्रत्ययो वक्ष्यते। ततश्च क्रोष्ट्री इति ईकारान्तः भवति। क्रोष्ट्री क्रोष्ट्र्यौ क्रोष्ट्र्यः इत्यादि गौरीवत्। धेनुः उकारान्तः। धेनुः धेनू धेनवः इत्यादि मतिवत्। उकारस्य गुणः ओकारः तस्य अवादेशः इति विशेषः। ऊकारान्तः वधूशब्दः। ङ्यन्तत्वाभावात् न सुलोपः वधूः। अजादौ धात्ववयवोवर्णाभावात् नोवङ्, यणेव। वध्वौ वध्वः इत्यादि गौरीवत्। भ्रू शब्दः। भ्रमेश्च डूः इति डूप्रत्ययान्तः। भ्रूः। अजादौ उवङ् भ्रुवौ भ्रुवः श्रीवत्। एवं सुभ्रु शब्दः सुभ्रूः सुभ्रुवौ सुभ्रुवः। सम्बुद्धौ नेयङुवङ्स्थानावस्त्री इति निषेधेन नदीत्वाभावात् ह्रस्वो न; हे सुभ्रूः इत्येव। 'हापितः क्वासि हे सुभ्रु'! इति भट्टिकाव्ये, 'विमानिता सुभ्रु पितुर्गृहे कुतः' इति कालिदासकाव्ये च सुभ्रु इति ह्रस्वान्तः प्रयोगः प्रमाद एवेति शास्त्रशरणाः। सामान्ये नपुंसकमिति नपुंसकत्वमाश्रित्य कथञ्चित् साधुत्वं कल्पयन्ति केचित्। खलपू शब्दः खलपूः खलप्वौ खलप्वः इति पुंवदेव। पुनर्भूशब्दः—पुनर्भूः। 'कारपुनःपूर्वस्य भुवो यण्' इति यण् पुनर्भ्वौ पुनर्भ्वः। यणा उवङो बाधात् नेयङुवङ् इति निषेधस्यानवकाशेन नदीकार्यं भवति। अम्बार्थेति ह्रस्वः हे पुनर्भु। पूर्वरूपं बाधित्वा यण् पुनर्भ्वम्। पूर्वसवर्णापवादः

यण् पुनर्भ्वः । आडागमः, वृद्धिः पुनर्भ्वै । पुनर्भ्वाः । पुनर्भ्वोः । आमि नद्यन्तत्वात् नुटि नामीति दीर्घे पुनर्भूनाम् इत्यत्र रेफनकारयोः समानपदत्वाभावेन अटकुप्वाङिति णत्वे अप्राप्ते—

## २६४. एकाजुत्तरपदे णः ८-४-१२

एकः अच् यस्मिंस्तत् एकाच् । एकाच् उत्तरपदं यस्य सः एकाजुत्तरपदः तस्मिन् । उत्तरपदशब्दः समासचरमावयवे रूढः । तेनाक्षिप्तः समासः विशेष्यः । रषाभ्यामिति, पूर्वपदात् संज्ञायाम् इत्यतः पूर्वपदात् इति, प्रातिपदिकान्तनुम्विभक्तिषु चेति सूत्रं चानुवर्तते । अनुवृत्त्या सिद्धे इह ण ग्रहणं स्पष्टार्थम् । एकाजुत्तरपदे समासे पूर्वपदस्थाभ्यां रेफ षकाराभ्यां परस्य प्रातिपदिकान्तनुम् विभक्तिस्थस्य नकारस्य नित्यं णकारः आदेशः स्यात् । प्रातिपदिकान्ते—वृत्रहणौ, वृत्रहणः । नुमि—क्षीरपाणि । विभक्तौ-क्षीरपेण, सुरापेण । विभक्तिस्थत्वेन नस्य णत्वे पुनर्भूणाम् । वर्षाभू शब्दः । वर्षाभूः । वर्षाभ्वश्चेति यण् वर्षाभ्वौ, वर्षाभ्वः । हे वर्षाभु । वर्षाभ्वम् वर्षाभ्वौ वर्षाभ्वः । इत्यादि पुनर्भूवत् । अथ ऋकारान्तः स्वसृशब्दः । सौ 'ऋदुशनस् पुरुदंसोऽनेहसां च' इत्यनङि अप्तृन् तृच्स्वसृ इत्यादिना दीर्घे स्वसा । सर्वनामस्थाने परे ऋतोङि इति गुणे अप्तृन्निति च दीर्घे स्वसारौ, स्वसारः, स्वसारम् । शसि पूर्वसवर्णदीर्घः स्वसृः । शेषः धातृवत् । एवं ननान्दृशब्दः । मातृशब्दः । माता पितृवत् । अप्तृन्निति सूत्रे नप्त्रादीनामेवेति दीर्घनियमात् दीर्घो न भवति । शसि परं मातृः । एवं दुहितृशब्दः । ओकारान्तो द्यो शब्दः । ओतोणित् इति णिद्वत्वातिदेशेन अचोञ्णितीति वृद्धौ द्यौः । द्यावौ द्यावः द्यां द्यावौ द्याः इत्यादि गोवत् । औकारान्तः नौ शब्दः । नौः नावौ नावः । नावं नावौ नावः । इत्यादि ग्लौवत् ।

इति स्त्रीलिङ्ग प्रकरणम्

# अथ अजन्तनपुंसकलिङ्ग प्रकरणम्

## २६५. अतोऽम् ७-१-२४

अत इति पञ्चमी । तदनुरोधात् अविकृतस्य अङ्गस्येत्यस्य पञ्चम्यन्ततया विपरिणामः । स्वमोर्नपुंसकात् इत्यनुवर्तते । अदन्तादङ्गात् नपुंसकात् परयोः स्वमोः अम् आदेशः स्यात् । फलम् अस्ति । फलं पश्य । वनम् पीठम् । अमः अम् विधानं स्वमोर्नपुंसकादिति लुङ् निवृत्त्यर्थम् । 'म्' इत्यादेशे सुपि चेति दीर्घोपत्तिः, अतः अमेव विहितः । ज्ञान शब्दात् सुः, स्वमोर्नपुंसकादिति प्राप्तं लुकं बाधित्वा अम् । ज्ञान अम्, अमि पूर्वः इति पूर्वरूपम् ज्ञानम् । सम्बुद्धौ अमादेशे पूर्वरूपे च कृते एङ् ह्रस्वादिति मकारस्य लोपे हे ज्ञान । परत्वात् पूर्वरूपं सति 'अन्तादिवच्चेति' पूर्वान्तवद्भावेन ज्ञान इत्यदन्तमङ्गं भवति । एङ्ह्रस्वादिति सूत्रे सम्बुद्ध्याक्षिप्तमङ्गं सम्बुद्ध्यवयवहलि अन्वेति न सम्बुद्धावित्युक्तम् । ह्रस्वान्तादङ्गात्परत्वं सम्बुध्यवयवस्य मकारस्य अस्त्येवेति सम्बुद्धिलोपः सुलभः ।

## २६६. नपुंसकाच्च ७-१-१९

जसः शी इत्यतः शी इति, औङ आपः इत्यतः औङ इति चानुवर्तते । नपुंसकादङ्गात्परस्य औङः शी इत्यादेशः स्यात् । फले-वने ।

## २६७. यस्येति च ६-४-१४८

यस्य, ईति, इतिच्छेदः । इश्च अश्चानयोः समाहारः यम् तस्य यस्य । इवर्णस्य, अवर्णस्य चेत्यर्थः । भस्येत्यधिक्रियते । चकारेण नस्तद्धिते इत्यतः तद्धिते इत्यनुकृष्यते । इवर्णान्तस्य, अवर्णान्तस्य चाङ्गस्य भस्य ईकारे तद्धिते च परे लोपः स्यात् । अलोऽन्त्यस्येति अन्त्यस्य भवति । इवर्णान्तस्य ईकारे-दाक्षी । इवर्णान्तस्य तद्धिते-अत्रि-आत्रेयः अवर्णान्तस्य ईकारे-कुमारी । अवर्णान्तस्य तद्धिते-दाक्षिः । सौमित्रिः ।

**औङः श्यां प्रतिषेधो वाच्यः**

औङः यः शी आदेशः तस्मिन् परे यस्येति चेति लोपस्य प्रतिषेधो वक्तव्यः। वने-फले। ज्ञान औ इति स्थिते नपुंसकाच्चेति शी आदेशे यस्येति चेत्यकारलोपस्य प्रतिषेधे आद्गुणः गुणे ज्ञाने इति रूपम्।

**२६८. जश्शसोः शिः ७-१-२०**

नपुंसकादित्यनुवर्तते। जसा साहचर्यात् शस् सुबेव। न तु तद्धितः शस्। नपुंसकादङ्गात्परयोः जस् शसोः शि इत्यादेशः स्यात्। अनेकाल्त्वात् सर्वादेशः। कुण्डानि। दधीनि। मधूनि। वनशः, कुण्डशः अत्र शसः सुप्भिन्नत्वात् न भवति।

**२६९. शि सर्वनामस्थानम् १-१-४२**

शि इत्येतत् सर्वनामस्थानसंज्ञं स्यात्।

**२७०. नपुंसकस्य झलचः ७-१-७२**

झल् च अच् चेति समाहारद्वन्द्वः। इदितो नुम् धातोः इत्यतो नुमिति, 'उगिदचां सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति चानुवर्तते। नपुंसकस्य झलन्तस्य अजन्तस्य चाङ्गस्य नुमागमः स्यात् सर्वनामस्थाने परे। यशांसि। पयांसि। वनानि। फलानि। ज्ञान अस् शि आदेशः। अजन्ताङ्गत्वात् नुम् ज्ञानम् इ इति स्थिते सर्वनामस्थाने चासम्बुद्धौ इति उपधादीर्घः ज्ञानानि। ज्ञानं ज्ञाने ज्ञानानि। शेषं रामवत्। एवं धन-वन-फल-नेत्र-पर्णादयः।

**२७१. अद्ड् डतरादिभ्यः पञ्चभ्यः ७-१-२५**

डतर-डतम-अन्य-अन्यतर-इतर इति डतरादयः सर्वादिगणपठिताः। तत्र डतर-डतमौ प्रत्ययौ। अतः तदन्तग्रहणम्। स्वमोर्नपुंसकादिति सूत्रमनुवर्तते डतरादिभ्यः इति विहितपञ्चमी व्याख्यानात्। नपुंसकेभ्यः डतरादिभ्यः पञ्चभ्यः विहितयोः अङ्गसंज्ञानिमित्तयोः स्वमोः अद्ड् आदेशः स्यात्। कतरत् तिष्ठति। कतरत् पश्य। कतमत्, अन्यत्, अन्यतरत्, इतरत्। पञ्चभ्य इति किम्? नेमम्। विहितविशेषणान्नेह परमकतरं कुलम्।

## एकतरात् प्रतिषेधः (वा)

एकतरशब्दात्परयोः स्वमोः अद्‌ड् आदेशः न भवतीति वक्तव्यम्। एकतरम्। डतर प्रत्ययान्तात् कतर शब्दात् स्वमोः अद्‌ड् आदेशे ड् इत्यस्ये-त्संज्ञालोपयोः कतर अद् इति स्थिते—

## २७२. टेः ६-४-१४३

भस्येत्यधिकृतम्। अल्लोपो नः इत्यतः लोप इति, तिविंशतेर्डिति इत्यतः डिति इति चानुवर्तते। अङ्गस्य भस्य टेः लोपः स्यात् डिति प्रत्यये परे। कुमुद्वान्। नड्वान्। वेतस्वान्। कुमुदनडवेतसेभ्यो ड्मतुप् इति ड्मतुप् प्रत्यये सति डिति टेरकारस्य लोपः। उपसरजः, मन्दुरजः इत्यत्र सप्तम्यां जनेर्डः इति जनेर्डप्रत्यये सति जन् इत्यस्य टेः लोपः। भस्येति किम्? पञ्चमः। अत्र डटः मडागमे भत्वाभावात् टिलोपो न। किन्तु पदत्वान्नलोप एव। कतर अद्, टेर-कारस्य लोपे वावसाने चर्त्वविकल्पः कतरम् कतरद्। अतोगुणे इति पररूपेणैव कतरत् इति रूपसिद्धेः अद्‌ड् आदेशे डित्करणं व्यर्थमिति न वाच्यम्, पररूपं बाधित्वा पूर्वसवर्णदीर्घापत्तेः। दकारमात्रादेशमङ्गीकृत्य पूर्वसवर्णदीर्घोऽपि वारयितुं शक्यते इत्यपि न सम्यक्, सम्बुद्धौ सोर्दकारादेशे सति तस्य स्थानिवत्त्वेन सम्बुद्धित्वात् एङ्ह्रस्वादिति दस्य लोपः प्रसज्येत। हे कतरत् शेषं सर्ववत्। एवमेव कतमत्, अन्यत्, अन्यतरत्, इतरत्। अन्यतमशब्दस्य अव्युत्पन्नप्रातिपदिकत्वेन डतमप्रत्ययान्तत्वाभावात् अद्‌डादेशो न। अन्यतमम् अन्यतमे इत्यादि ज्ञानवत्। एकतरशब्दस्य एकतरम् एकतरे इत्येव एकतरात् अद्‌डः प्रतिषेधात्। अविद्यमाना जरा यस्य कुलस्येत्यर्थे अजरशब्दः नपुंसकः। तस्मात् सोः अतोऽम् इत्यमि अमिपूर्वः पूर्वरूपे अजरम्। अमादेशे सति अजादिप्रत्ययनिमित्तको जरसादेशस्तु न भवति। संनिपातपरिभाषाविरोधात्। अदन्तसंनिपाताश्रयस्य अमः अदन्तत्व-विघातकं जरसादेशं प्रति निमित्तत्वायोगात्। औङि पूर्वविप्रतिषेधेन शी भावे जराया इति जरसादेशे च अजरसी। पक्षे अजरे। जसि पूर्वविप्रतिषेधेन जश्शसोः शिः इति शि भावे अजर् इ इति स्थिते परत्वात् जरसि, ततो नपुंसकस्य

झलचः इति झलन्त्वात् नुमि अजरन्स् इ इत्यत्र नान्तत्वाभावेन सर्वनामस्थाने चासम्बुद्धौ इति दीर्घे अप्राप्ते—

२७३. सान्तमहतः संयोगस्य ६-४-१०

सर्वनामस्थाने चासम्बुद्धौ इति, नोपधाया इति, ढूलोपे पूर्वस्य इत्यतो दीर्घ इति चानुवर्तते। नेति लुप्तषष्ठीकं पदम्। संयोगस्येत्यवयवषष्ठ्यन्तं नकारे अन्वेति। सान्त इति लुप्तषष्ठ्यन्तं पृथक्पदम्। सान्तस्येत्यर्थः तस्य संयोगस्येत्यत्राभेदेनान्वयः। महतः इत्यापि अवयवषष्ठ्यन्तं तस्य नकारे अन्वयः। सकारान्तस्य संयोगस्य यो नकारः, महतश्च यो नकारः तस्योपधाया दीर्घः स्यात् असम्बुद्धौ सर्वनामस्थाने परे। श्रेयान्। श्रेयांसौ। श्रेयांसः। श्रेयांसि, पयांसि। महान् महान्तौ महान्तः। असम्बुद्धाविति किम्? हे श्रेयन्। हे महन्। अजरन्स् इति सान्तसंयोगो भवति। संयोगावयवनकारस्य उपधाया रेफोत्तरवर्तिनोऽकारस्य दीर्घे अजरान्स् इ इति जाते नश्चापदान्तस्येति तस्यानुस्वारे अजरांसि इति रूपम्। जरसादेशाभावे अजन्तत्वात् नुमि सर्वनामस्थाने इति उपधादीर्घे णत्वे अजराणि। अमि अतोऽम् इति लुगपवादमम्भं बाधित्वा परत्वात् जरस् अजरसम्-पक्षे अजरम्। जरसादेशपक्षे संनिपातपरिभाषया स्वमोरिति लुङ् न। अजरसी-अजरे। अजरांसि-अजराणि। शेषं पुल्लिङ्गनिर्जरशब्दवत्। हृदयोदकास्य-शब्दाः अकारान्त नपुंसकलिङ्गः सुटि ज्ञानवत् भवन्ति। तेषां शसादौ पद्दन्नोमास्-इति क्रमेण हृद्-उदन्-आसन्नादेशाः वा भवन्ति। हृदयस्य हृद् इ नपुंसकस्येति नुमि नश्चापदान्तस्येत्यनुस्वारे परसवर्णे हृन्दि इति। पक्षे हृदयानि। हृदा-हृदयेन, हृद्भ्यां-हृदयाभ्यां, हृद्भिः-हृदयैः इत्यादि। उदकस्य उदन् आदेशे उदन् इ सर्वनामस्थाने इति उपधादीर्घे उदानि इति। पक्षे उदकानि। उदन् आ इतिस्थिते अल्लोपो नः इति अलोपे उद्ना इति। उदन् भ्याम्-नलोपः प्रातिपदिकान्तस्येति नलोपे उदभ्याम्। अजादौ अल्लोपः हलादौ च नलोपः। पक्षे उदकेनेत्यादि ज्ञानवत्। आस्य शब्दस्य शसि आसन्नादेशः। आसन् इ इति स्थिते उपधादीर्घे आसानि। टा प्रभृतिषु

अजादौ अल्लोपः हलादौ नलोपः । आस्ना आसभ्यामित्यादि । पक्षे आस्येनेत्यादि ।

## २७४. ह्रस्वो नपुंसके प्रातिपदिकस्य १-२-४७

ह्रस्वश्रुत्या अचश्चेति परिभाषया अचः इति षष्ठ्यन्तस्योपस्थितिः । तस्य प्रातिपदिके विशेषणात् तदन्तलाभः । नपुंसके अजन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । श्रीपम् । प्रातिपदिकस्येति किम् ? काण्डे । कुड्ये । विभक्ति विशिष्टस्य मा भूत् । श्रियं पातीति श्रीपाशब्दः, तस्य नपुंसके ह्रस्वः । श्रीप इति अकारान्तः सम्पद्यते । तस्य ज्ञानवत् रूपाणि । श्रीपे श्रीपाणि इत्यादि ।

## २७५. स्वमोर्नपुंसकात् ७-१-२३

षड्भ्यो लुगित्यतः लुगित्यनुवर्तते । नपुंसकादङ्गात्परयोः स्वमोः लुक् स्यात् । इकारान्तः वारिशब्दः तस्मात् सोः, अमश्च लुकि वारि । वारि । इति ।

## २७६. इकोऽचि विभक्तौ ७-१-७३

इदितो नुम् धातोः इत्यतः नुम् इति, नपुंसकस्येत्यतो नपुंसकस्येति चानुवर्तते । अचिकृते अङ्गे इकः इत्यस्यान्वयः । इगन्तस्याङ्गस्य नपुंसकस्य नुमागमः स्यात् अजादौ वारिणी । जतुनी । विभक्तौ इति किम् ? मधुनः इदं माधवम् । वारि औ, नपुंसकाच्चेति औङः शी भावः । इकोचीति नुम् णत्वं वारिणी । जश्शसोः शि भावे नुमि वारिन् इ सर्वनामस्थाने–इति दीर्घे णत्वे वारीणि । सम्बुद्धौ स्वमोर्लुकि हे वारि इति । लुका लुप्तत्वेन न लुमताङ्गस्येति प्रत्ययलक्षण प्रतिषेधात् ह्रस्वस्य गुणः इति सम्बुद्धिनिमित्तो गुणो न भवति । भाष्य प्रामाण्यात् इकोचि विभक्ताविति सूत्रे अज् ग्रहणं न लुमताङ्गस्येति निषेधस्यानित्यत्वं ज्ञापयति, इत्यङ्गीकारात् प्रत्ययलक्षणेन गुणे हे वारे इत्यपि । अज्ग्रहणं हलादौ नुम् वारणार्थं नापेक्षितम् । सत्यपि नुमि नलोपः प्रातिपदिकान्तस्येति नस्य लोपेनेष्टसिद्धेः । सम्बुद्धौ नुम्वारणार्थमित्यपि न, सम्बुद्धेर्लुका लुप्तत्वात् प्रत्ययलक्षणप्रतिषेधेन नुमः प्राप्तेरेवाभावात् । ततश्च व्यर्थमुपात्तमज्ग्रहणं प्रत्ययलक्षणप्रतिषेधस्यानित्यतां ज्ञापयति । अनित्यत्वे तु प्रत्ययलक्षणेन प्राप्तं नुमं परिहर्तुम् अज्ग्रहणम् अर्थवद्भवतीति भावः । वारि अ

परत्वात् नुमं बाधित्वा आङो नास्त्रियाम् इति नाभावे वारिणा। ङित्सु नुमं बाधित्वा घेर्ङिति इति गुणे प्राप्ते; वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ' वृद्धेरवकाशः गावौ। नुमोवकाशः वारीणि। इहोभयं प्राप्नोति अतिसखीनि परामपि वृद्धिं बाधित्वा नुमेव। औत्वस्यावकाशः हरौ, नुमोवकाशः वारिणि। इहोभयंप्राप्नोति वारिणि नुम् भवति। तृज्वद्भावस्यावकाशः क्रोष्ट्री। नुमोवकाशः वारीणि। इहोभयं प्राप्नोति प्रियक्रोष्टूनि नुम् भवति। गुणस्यावकाशः हरये। नुमोवकाशः वारीणि। इहोभयं प्राप्नोति वारिणे नुम् भवति पूर्वविप्रतिषेधेन। ङसिङसोरपि गुणं बाधित्वा नुम् वारिणः। यणः परत्वात् नुम् वारिणोः। वारि आम् इत्यत्र परत्वात् नुमि प्राप्ते

**नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन**

इति वचनात् ह्रस्वनद्याप इति नुडेव। नामीति दीर्घः वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत्।

## २७७. तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७-१-७४

भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपे अर्थे तत् भाषितपुंस्कं प्रवृत्तिनिमित्तम्। तदस्यास्तीति अर्श आद्यच्। शब्दस्वरूपं विशेष्यम्। तेन पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तकं शब्दस्वरूपमित्यर्थः भवति। इकोऽचीत्यतः इकः अचीति, नपुंसकस्य झलच इत्यतो नपुंसकस्येति चानुवर्तते। षष्ठ्यन्तयोः इकः नपुंसकस्य इत्यनयोरिह प्रथमान्ततया विपरिणामः। पुंस्त्वे नपुंसकत्वे च समानप्रवृत्तिनिमित्तकं नपुंसकम् इगन्तं शब्दस्वरूपं पुंवत् स्यात् तृतीयादिषु अजादिषु विभक्तिषु गालवस्याचार्यस्य मतेन। गालवग्रहणात् इतरेषां नेति विकल्पः सिध्यति। पुंवदित्यनेन यथा पुंसि ह्रस्वनुमौ न भवतः तद्वदत्रापि न भवतः इत्यर्थः। ग्रामणी शब्दस्य कुलविशेष्यकत्वे नपुंसके ' ह्रस्वो नपुंसके प्रातिपदिकस्य ' इति ह्रस्वे ग्रामणि ग्रामणिनी ग्रामणीनि इति वारिवत्। ग्रामणिशब्दश्च ग्रामनेतृत्वं पुरस्कृत्य पुंनपुंसक प्रत्यायक इति भवति भाषितपुंस्कः। अतः तृतीयादिषु अजादौ पुंवद्भावेन ह्रस्वनुमोरभावे एरनेकाच–इति यणि

ग्रामण्या । ग्रामण्ये । ग्रामण्यः, ग्रामण्योः, ग्रामण्याम् ग्रामण्याम् । पुंवत्वाभावे वारिवत्, आङोनाऽस्त्रियामिति नाभावे ग्रामणिना, नुमि ग्रामणिने, ग्रामणिनः, ग्रामणिनोः, नुमचिरेति पूर्वविप्रतिषेधेन नुटि नामीति दीर्घे ग्रामणीनाम्, ग्रामणिनि इति । तृतीयादिष्विति किम्? ग्रामणिनी । भाषितपुंस्कमिति किम्? वारिणे । अचि किम्? ग्रामणिभ्याम् । इगन्तं किम्? सोमपेन कुलेन । प्रवृत्तिनिमित्तैक्ये इति किम्? पीलुने फलाय । इह पुंवत्वं मा भूत् । पीलुशब्दे वृक्षाकृतिः प्रवृत्तिनिमित्तं पुंसि, फलाकृतिर्नपुंसके इति प्रवृत्तिनिमित्तभेदः । न विद्यते आदिः यस्य सः अनादिः ईश्वरः । अनादि ब्रह्म । तस्य उत्पत्यभावात्मकस्य अनादित्वस्य प्रवृत्तिनिमित्तस्यैक्यात् भाषितपुंस्कतया तृतीयादिषु अजादिषु विकल्पेन पुंवत्वम् । पुंवत्वे नुमः अप्रवृत्तेः घेर्ङितीति गुणे अयादेशे अनादये, पुंवत्वाभावे नुम् अनादिने । एवम् अनादेः-अनादिनः । अनाद्योः-अनादिनोः । आमि पक्षद्वयेपि अनादीनाम् । नपुंसकेपि नुमचिरेति नुटः प्रवृत्तेः । प्रथमाद्वितीययोः हलादौ च वारिवत् ।

## २७८. अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७-१-७५

तृतीयादिषु इति अचि इति चानुवर्तते । अस्थि, दधि, सक्थि, अक्षि इत्येतेषां नपुंसकानां तृतीयादिषु अजादिषु परेषु अनङ् आदेशः स्यात् । स चोदात्तः । ङित्वादन्तादेशः । अस्थ्ना-दध्ना-सक्थ्ना-अक्ष्णा । तृतीयादिष्विति किम्? अस्थिनी । सक्थिनी । अचीति किम्? अस्थिभ्याम् । दधिभ्याम् । अस्थि । अस्थिनी । अस्थीनि । दधि । दधिनी । दधीनि । सक्थि । सक्थिनी । सक्थीनि । अक्षि । अक्षिणी । अक्षीणि । तृतीयादौ अचि अनङि अस्थन् आ अल्लोपो नः इति अल्लोपे अस्थ्ना । अस्थ्ने । अस्थ्नः । अस्थ्नोः । अस्थ्नाम् । ङौ विभाषा ङिश्योः इति अल्लोपविकल्पः अस्थ्नि-अस्थनि । एवं दधिसक्थ्यादयः । हलादौ वारिवत् । उकारान्तो मधुशब्दः । मधु मधुनी मधूनि । हे मधो हे मधु इत्यादि वारिवत् । एवम् अम्बु प्रभृतयः शब्दाः उह्याः । सानुशब्दः नपुंसकेपि वर्तते । तस्य सानु सानुनी सानूनि ।

शसादौ वा 'मांस-पृतना-सानूनां मांस-पृत्-स्नुवो वाच्यः' इति वार्तिकात् सानु-शब्दस्य स्नु इत्यादेशे ; स्नूनि स्नुना स्नुभ्यामित्यादि । पक्षे सानूनि सानुना इत्यादि मधुवत् । (सूत्राणि २७८)

इति अजन्त नपुंसकलिङ्ग प्रकरणम्

---

# हलन्त पुल्लिङ्ग प्रकरणम्

प्रकर्षेण अञ्चतीत्यर्थे अन्चुधातोः क्विन् प्रत्यये तन्निमित्ते नलोपे च प्राच् इति शब्दः । तस्मात् सौ—

## २७९. उगिदचां सर्वनामस्थानेऽधातोः ७-३-७०

उक् इत् येषां ते उगितः । अच् इति लुप्तनकारस्य अन्चु धातोः ग्रहणम् । उगितश्च अच् च उगिदचः तेषाम् । अधातोरिति उगिद्विशेषणम् । न तु अञ्चतेः, असम्भवात् । इदितो नुम् धातोः इत्यतो नुमित्यनुवर्तते । धातुभिन्नानामुगितामञ्चानां, नलोपिनोऽञ्चतेश्च सर्वनामस्थाने परे नुमागमः स्यात् । भवतु-भवान् । ईयसुन्-श्रेयान् ; शतृ-पचन् । अञ्चतेः-प्राङ् । उगिदचामिति किम् ? दृषत् दृषदौ दृषदः । सर्वनामस्थाने इति किम् ? भवतः पश्य । उगित्वादेव अञ्चतेरपि ग्रहणे सिद्धे पुनरञ्चतिग्रहणं उगित्कार्यं धातोश्चेत् भवति तर्हि अञ्चतेरेव अन्यस्य नेति नियमार्थम् । तेन उखास्रत्, पर्णध्वत् इत्यादौ नुम् न भवति । नियमार्थादञ्चतिग्रहणादेव सिद्धे पुनरधातोरिति अधातुभूतपूर्वस्यापि संग्रहार्थम् । प्रान्च् स् इति स्थिते सोः हल्ङ्यादिनालोपे चस्य संयोगान्तस्य लोपः इति लोपे प्रान् इति स्थिते—

## २८०. क्विन् प्रत्ययस्य कुः ८-२-६२

क्विन् प्रत्ययो यस्मात् सः तस्येति बहुव्रीहिः । पदस्येत्यधिकृतम् । झलां जशोऽन्ते इत्यतः अन्ते इत्यनुवर्तते । कुरिति कवर्गः । क्विन् प्रत्ययो यस्मात्तस्य पदस्य कवर्गः अन्तादेशः स्यात् । घृतस्पृक् । मन्त्रस्पृक् । नस्य नासिक्य

स्थान साम्यात् ङकारः, प्राङ् । औ प्रत्यये प्राच् औ इति स्थिते नुमि अनुस्वार-परसवर्णौ प्राञ्चौ । प्राञ्चः । प्राञ्चं । प्राञ्चौ । शस् प्रत्यये नुमभावेन प्र अच् अस् इति स्थिते—

## २८१. अचः ६-४-१३८

अच इति लुप्तनकारस्य अञ्चुधातोः ग्रहणम् । भस्येत्यधिकृतम् । अल्लोपोऽनः इत्यतः अल्लोप इत्यनुवर्तते । लुप्तनकारस्य अञ्चतेर्भस्य अकारस्य लोपः स्यात् । प्र चस् ।

## २८२. चौ ६-३-१३८

चौ इति लुप्तनकाराकारस्य अञ्चुधातोः सप्तम्यन्तम् । ढ्लोप इत्यतः पूर्वस्य दीर्घोऽणः इत्यनुवर्तते । चौ परे पूर्वस्याणो दीर्घः स्यात् । प्राचः । प्राचा । यद्यपि अल्लोपदीर्घयोः अभावेऽपि सवर्णदीर्घेण इदं रूपं सिध्यति तथापि प्रतीचः इत्याद्यर्थं आवश्यकं सूत्रं इहापि प्रवर्तते । पूजाया गम्यमानत्वे तु अञ्चतेर्नस्य लोपो न भवतीति लुप्तनकारत्वाभावात् अच इति अल्लोपोपि न । प्राञ्चः इत्येव ।

## २८३. चोः कुः ६-३-१३८

झलो झलीत्यतः झलीति, स्कोः संयोगाद्योः इत्यतः अन्ते इति चानुवर्तते । पदस्येत्यधिकृतम् । चवर्गस्य कवर्गः आदेशः स्यात् झलि परे पदान्ते च । पक्ता । पक्तुम् । वक्ता । वक्तुम् । प्राक् भ्याम् जश्त्वे प्राग् भ्याम् । प्राग्भिः इत्यादि । प्राच् सु कुत्वे कवर्गात्परत्वेन आदेशप्रत्यययोरिति षत्वे प्राक्षु इति रूपम् । यद्यपि क्विन् प्रत्ययस्य कुः इति कुत्वेपि रूपसिद्धिः भवति तथापि तस्यासिद्धत्वात् चोः कुरित्येवोचितम् । प्रत्यच् शब्दस्य प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः । प्रत्यञ्चं । प्रत्यञ्चौ । प्रति अचः इति स्थिते अचः इत्यकारस्य लोपे, चौ इति पूर्वस्य इकारस्य दीर्घः प्रतीचः । प्रतीचेत्यादि ।

उदच् शब्दः उदङ् उदञ्चौ उदञ्चः । शसादावचि—

## २८४. उद ईत् ६-४-१३९

अचः इति, अल्लोप इत्यतो अत् इति चानुवर्तते। उत् इत्यस्मात्परस्य अञ्चतेः भस्याकारस्य ईत् आदेशः स्यात्। जश्त्वम् उदीचः। उदीचा। शेषं प्राग्वत्।

## २८५. समः समि ६-३-९३

अञ्चतौ, अप्रत्यये इत्यनुवर्तते। अप्रत्यय इत्यस्य अश्रूयमाणः प्रत्ययः क्विबादिः इत्यर्थः। अप्रत्ययान्ते अञ्चतौ परे समः समिः आदेशः स्यात्। सम्+अच्=सम्यच् शब्दः। सम्यङ् सम्यञ्चौ सम्यञ्चः सम्यञ्चं सम्यञ्चौ समीचः इत्यादि प्रत्यङ्वत्।

## २८६. सहस्य सध्रिः ६-३-९५

सहस्य सध्रिः आदेशः स्यात् अप्रत्ययान्ते अञ्चतौ परे। सह अञ्चतीत्यर्थे सध्र्यङ्। सध्र्यञ्चौ इत्यादि प्रत्यङ्वत्।

## २८७. तिरसस्तिर्यलोपे ६-३-९४

तिरि अलोपे इति च्छेदः। न विद्यते अल्लोपः यस्य सः तस्मिन्। अलुप्ताकारे अप्रत्ययान्ते अञ्चतौ परे तिरसः तिरि इत्यादेशः स्यात्। तिरः अञ्चतीत्यर्थे तिर्यच् शब्दः—तस्मात् तिर्यङ् तिर्यञ्चौ तिर्यञ्चः। शसादावचि अकारस्य लोपात् तिर्यादेशो न भवति। श्चुत्वम् तिरश्चः इत्यादि। पयो मुञ्चतीति पयोमुच् शब्दः। पयोमुक् पयोमुचौ पयोमुचः इत्यादि। क्विन् प्रत्ययान्तः युज् इति जान्तः। तस्मात् सौ—

## २८८. युजेरसमासे ७-३-७१

उगिदचामित्यतः सर्वनामस्थाने इत्यनुवर्तते। इदितो नुम् इत्यतो नुम् इति च। युजेः असमासे सर्वनामस्थाने परे नुमागमः स्यात्। युन्ज्स् हल्ङ्यादिना सुलोपः। संयोगान्तलोपः। क्विन् प्रत्ययस्य कुः इति नस्य ङकारः युङ्। अनुस्वारपरसवर्णौ—युञ्जौ। युञ्जः। युजा। चोः कुः इति कुत्वम् युग्भ्या- मित्यादि। असमासे इत्युक्तत्वात् समासे नुम् न भवति—सुयुक् सुयुजौ सुयुजः

इत्यादि। राज् शब्दात् सौ राज् स् इति स्थिते व्रश्चेति जस्य षत्वम्। जश्त्व चर्त्वे राट् राड् राजौ राजः राजा राड्भ्यामित्यादि। सप्तमी बहुवचने ङःसि धुट् इति वा धुट् चर्त्वम्। राट्त्सु राट्सु। एवं विश्वसृट्-परिमृट् इत्यादयः।

**परौ व्रजेः षः पदान्ते (वा)**

परि पूर्वस्य व्रजेः क्विप् दीर्घः षत्वं च भवति। परिव्राट् परिव्राजौ परिव्राजः इत्यादि राड्वत्। विश्वराज् शब्दात् सौ व्रश्चेति षत्वे जश्त्वचर्त्वयोः पूर्वपदस्य विश्वस्यवसुराटोः इति दीर्घे विश्वाराट्। जश्त्वषान्तस्य राडित्यस्य पदान्ते एव सम्भवात् पदान्ते एव दीर्घः। विश्वराजौ विश्वराजः विश्वराजं विश्वराड्भ्याम् विश्वराट्सु इति। ऋत्विज् शब्दः तस्मात् सौ हल्ङ्यादिलोपे, क्विन् प्रत्ययस्य कुः इति कुत्वे ऋत्विक्। ऋत्विजौ। ऋत्विजः। ऋत्विग्भ्यामित्यादि। चोः कुरिति कुत्वं नेह प्रवर्तते अपवादेन व्रश्चेति षत्वेन बाध्यमानत्वात्। एवं भिषज् इत्यादि भिषक् भिषजौ भिषजः इति जान्ताः। तकारान्ताः—मरुत् मरुतौ मरुतः। मरुता। पदान्ते जश्त्वम्—मरुद्भ्याम् मरुद्भिरित्यादि। एवं भूभृत्, हरित् इत्यादयः। महत् उगित्वात् उगिदचामिति नुम्। असम्बुद्धौ सर्वनामस्थाने सान्तमहतः संयोगस्येति दीर्घः। महान् महान्तौ महान्तः। महान्तं महान्तौ महतः। महता। पदान्ते जश्त्वम्—महद्भ्यामित्यादि। धीः अस्यास्तीत्यर्थे मतुवन्तः धीमत् शब्दः।

**२८९. अत्वसन्तस्य चाधातोः ६-४-१४**

अतु इति लुप्तषष्ठीकं पृथक् पदम्। अङ्गविशेषणत्वात् तदन्तविधिः अधातोरिति असन्तविशेषणम्। उपधाया, असम्बुद्धौ, सौ, दीर्घ इत्यनुवर्तते। अत्वन्तस्य, धातुभिन्नासन्तस्य चाङ्गस्य उपधायाः दीर्घः स्यात् असम्बुद्धौ सौ। धीमान् धीमन्तौ धीमन्तः। धीमन्तं धीमन्तौ शेषं महद्वत्। एवं श्रीमत्, गोमत्, भगवत्, मघवत् भवत् प्रभृतयः। शत्रन्तस्य भवच्छब्दस्य अत्वन्तत्वाभावात् दीर्घो न भवति उगित्वात् नुम् भवति। भवन् भवन्तौ भवन्तः इत्यादि। शेषं धीमच्छब्दवत्। एवं गच्छत्, कुर्वत्, नमत् प्रभृतयः शत्रन्ताः शब्दाः।

शत्रन्तः ददत् शब्दः—तत्र विशेषमाह—

## २९०. उभे अभ्यस्तम् ६–१–५

एकाचो द्वे इत्यतः द्वे इत्यनुवर्तते । उभेग्रहणं समुदाय प्रतिपत्त्यर्थम्। द्वे इत्यनेन षष्ठाध्यायविहितमेव द्वित्वं विवक्षितम् । ये द्वे विहिते ते उभे अपि समुदिते अभ्यस्तसंज्ञे स्तः ।

## २९१. जक्षित्यादयः षट् ६–१–६

अभ्यस्तमित्यस्य सम्बन्धः । जक्ष धातुः, एतदादयः अन्ये च षट् धातवः अभ्यस्तसंज्ञाः स्युः । जक्ष्-जागृ-दरिद्रा-चकास्-शास्-दीधी-वेवी इति सप्तधातवः ।

## २९२. नाभ्यस्ताच्छतुः ७–१–७८

इदितो नुम् इत्यतः नुम् इत्यनुवर्तते । अभ्यस्तादङ्गात्परस्य शतृप्रत्ययस्य नुम् न स्यात् । उगिन्वात् उगिदचाम् इति प्राप्तो नुम् न भवति । अत्वन्तत्वाभावाच्च न दीर्घः । ददत् ददतौ ददतः । ददतम् इत्यादि मरुद्वत् । एवं जक्षत्, जाग्रत्, दरिद्रत्, शासत् चकासत् इत्यादयः । दकारान्तः—सुहृद् शब्दः । वावसाने इति चर्त्वम् । सुहृत् सुहृदौ सुहृदः । सुहृदं सुहृदौ सुहृदः सुहृदा इत्यादि । एवं दिविषत् दिविषदौ दिविषदः । शोभनौ पादौ यस्य सः इत्यर्थे सुपाद् शब्दः, तस्मात् सुपात् सुपादौ सुपादः सुपादं सुपादौ शसादौ—

## २९३. पादः पत् ६–४–१३०

पादः इति लुप्ताकारः पादशब्दो गृह्यते । भस्य अङ्गस्य चेत्यधिकृतम्। पाच्छब्दान्तस्याङ्गस्य भस्य पत् इत्यादेशः स्यात् । निर्दिश्यमानस्यादेशा भवन्तीति पाद् शब्दस्यैव भवति न तु तदन्तस्य । सुपदः । सुपदा । सुपदे। सुपाद्भ्याम् इत्यादि । एवं द्विपात् चतुष्पात् आदयः । यद्शब्दः दान्तः सर्वनामसंज्ञकः । त्यदादीनामः, पररूपं च । यः । वृद्धिः यौ । जसः शी ये । शिष्टं सर्ववत् ।

## २९४. तदोः सः सावनन्त्ययोः ७-२-१०३

त्यदादीनामः इत्यतः त्यदादीनामित्यनुवर्तते। तश्च द्चेति तदौ, तयोः। त्यदादीनाम् अनन्त्ययोः तकार दकारयोः सः स्यात् सौ परे। तद् दकारान्तः— तस्मात् सौ त्यदाद्यत्वम्, पररूपम्। तकारस्य सत्वे सः। तौ। ते। तं तौ तान्। इत्यादि सर्ववत्। एतद् शब्दः त्यदाद्यत्वे, पररूपे च तकारस्य सत्वम्। इणः परत्वात् आदेश प्रत्यययोरिति षत्वम् एषः। एतौ एते इत्यादि तच्छब्दवत्

## २९५. द्वितीयाटौस्स्वेनः २-४-३४

द्वितीया च टाश्च ओश्च द्वितीयाटौसः तेषु। इदमोऽन्वादेशे इत्यतः इदम इति अन्वादेश इति, एतदस्त्रतसोः इत्यतः एतदः इति चानुवर्तते। अन्वादेशविषययोः इदमेतदोः द्वितीयायां टायाम् ओसि च परतः एन इत्यादेशः स्यात्। किञ्चित्कार्यम् अपूर्वं बोधयितुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। इमं छात्रं प्रथमं छन्दः अध्यापय अथ एनं व्याकरणम् अध्यापय ? अनेन व्याकरणमधीतम् एनं तर्कमध्यापय। अनयोः पवित्रं कुलम् एनयोः धनं प्रभूतम्। एतं बालं काशीं नय। अथैनं शास्त्राण्यध्यापय। एतदः द्वितीयायाम् अन्वादेशे त्यदाद्यत्वे पररूपे च एत इत्यस्य एनादेशः। एनत् एनौ एनान्। टायां एनेन। ओसि एनयोः। 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः एतमातं ङितं विद्यात्' इति पद्ये एतमित्यत्र एनादेशो न भवति, पूर्वार्धस्य यच्छब्दयोगेन अनुवादत्वे अन्वादेशविषयत्वाभावात्। 'एवमेव नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यत्रापि भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात् इममित्यत्र एनादेशो न। युष्मद् असमद् शब्दौ दान्तौ—

## २९६. ङे प्रथमयोरम् ७-१-२८

युष्मदस्मद्भ्यां ङसोऽश् इत्यतो युष्मदस्मद्भ्यामित्यनुवर्तते। ङे इति लुप्तषष्ठीकं पृथक्पदम्। प्रथमयोरिति प्रथमा द्वितीययोर्ग्रहणम्। युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य, प्रथमाद्वितीययोश्च अम् इत्यादेशः स्यात्। सोरमादेशे युष्मद्

अम् अस्मद् अम् ।

## २९७. मपर्यन्तस्य ७-२-९४

अधिकारोयम् । इत ऊर्ध्वं वक्ष्यमाणः आदेशः मपर्यन्तस्य भवतीति वेदितव्यम् ।

## २९८. त्वाहौ सौ ७-२-९४

त्वश्च अहश्च त्वाहौ । युष्मदस्मदोरनादेशे इत्यतो युष्मदस्मदोरित्यनुवर्तते। युष्मदस्मदोः मपर्यन्तस्य त्व-अह इत्येतौ आदेशौ स्तः सौ परे । युष्म् अस्म् इति भागस्य आदेशः । त्व अद् अम् । अह अद् अम् ।

## २९९. शेषे लोपः ७-२-९०

अष्टन आ विभक्तौ इत्यतः विभक्तौ इत्यनुवृत्तं शेषे इत्यनेनान्वेति। युष्मदस्मदोरिति वर्तते । युष्मदस्मदोः अन्त्यस्य लोपः स्यात् शेषे विभक्तौ परतः। कश्च शेषः? उक्तादन्यः शेषः । आत्वयत्वयोः प्रागुक्तत्वात् आत्वयत्वनिमित्ता-तिरिक्तविभक्तिरिह शेष इत्यनेन गृह्यते । अन्त्यस्य दस्य लोपे अतोगुणे पररूपम्, अमिपूर्वः इति पूर्वरूपम् त्वम्-अहम् इति ।

## ३००. युवावौ द्विवचने ७-२-९२

मपर्यन्तस्येत्यधिक्रियते । युष्मदस्मदोरिति वर्तते । अष्टन आ विभक्तौ इत्यतो विभक्तौ इत्यनुवर्तते । उक्तिः वचनम् । द्वयोः-अर्थयोः वचनं द्विवचनम्। तत्र समर्थयोरित्यर्थः । द्वित्वविशिष्टार्थवाचिनोरिति यावत् । द्वित्वविशिष्टार्थ-वाचिनोः युष्मदस्मदोः मपर्यन्तस्य युव-आव इत्यादेशौ स्तः विभक्तौ । युष्मद् अम्, अस्मद् अम्=युव अद् अम्, आव अद् अम् मपर्यन्तस्येति किम्? साक-च्कस्य मा भूताम् युवकाम्, आवकाम् ।

## ३०१. प्रथमायाश्च द्विवचने भाषायाम् ७-२-८८

अष्टन आ विभक्तौ इत्यतः आ इत्यनुवर्तते । युष्मदस्मदोः इति वर्तते। प्रथमायाः द्विवचने परे भाषायां युष्मदस्मदोः आकारः अन्तादेशः स्यात्। दकारस्य आत्वे अतो गुणे पररूपे सवर्णदीर्घे युवा अम् आवा अम्, अमिपूर्व

युवाम् आवाम् ॥ प्रथमाया इति किम् ? युवयोः । आवयोः । द्विवचने इति किम् ? त्वम् । अहम् । यूयम् । वयम् । युष्मदस्मदोरेव द्वित्वविशिष्टार्थवाचित्वाश्रयणेन समासे यदा युष्मदस्मदी द्व्यर्थे भवतः तदा, समासार्थस्य एकवचनत्वे बहुवचनत्वेपि वा, युष्मदस्मदोः युवावौ भवत एव । समासं लभमाने युष्मदस्मदी द्वित्वविशिष्टार्थवाचिनी यदा तदा, समासार्थस्य मुख्यविशेष्यभूतस्य अन्यसंख्यत्वेपि युष्मदस्मदर्थगतद्वित्वमाश्रित्य युवावौ भवतः, द्विवचनप्रत्ययपरत्वाभावेपि इति भावः । यथा युवाम् अतिक्रान्तम् अतियुवाम् । आवाम् अतिक्रान्तम् अत्यावाम् । किन्तु त्वाहौ सौ, यूयवयौ जसि, तुभ्यमह्यौ ङयि, तवममौ ङसि इत्येषां प्रवृत्तिविषये त्वाहादयः एव परत्वाद्भवन्ति । तदविषये तु युवावावेवेति विवेकः ।

| | | |
|---|---|---|
| युवाम् | अतिक्रान्तः | अतित्वम् । |
| आवाम् | ,, | अत्यहम् । |
| युवामतिक्रान्ताः | | अतियूयम् । |
| आवामतिक्रान्ताः | | अतिवयम् । |
| युवाम् | अतिक्रान्तम् | अतियुवाम् । |
| आवाम् | ,, | अत्यावाम् । |
| युवाम् | अतिक्रान्तान् | अतियुवान् । |
| आवाम् | ,, | अत्यावान् । |
| युवाम् | अतिक्रान्तेन | अतियुवया । |
| आवाम् | ,, | अत्यावया । |
| युवाम् | अतिक्रान्तैः | अतियुवाभिः । |
| आवाम् | ,, | अत्यावाभिः । |
| युवाम् | अतिक्रान्ताय | अतितुभ्यम् । |
| आवाम् | ,, | अतिमह्यम् । |
| युवाम् | अतिक्रान्तेभ्यः | अतियुवभ्यम् । |

| | | |
|---|---|---|
| आवाम् | अतिक्रान्तेभ्यः | अत्यावभ्यम् । |
| युवाम् | अतिक्रान्तान् | अतियुवन् । |
| आवाम् | ,, | अत्यावन् । |
| युवाम् | अतिक्रान्तस्य | अतितव । |
| आवाम् | ,, | अतिमम । |
| युवाम् | अतिक्रान्तानाम् | अतियुवाकम् । |
| आवाम् | ,, | अत्यावाकम् । |
| युवाम् | अतिक्रान्ते | अतियुवयि । |
| आवाम् | ,, | अत्यावयि । |
| युवाम् | अतिक्रान्तेषु | अतियुवासु । |
| आवाम् | ,, | अत्यावासु । |

यदा युष्मदस्मदी एकत्वबहुत्वयोर्भवतः समासार्थस्तु द्वित्वे तदा युवावौ न भवतः

| | | |
|---|---|---|
| यथा–त्वाम् | अतिक्रान्तौ | अतित्वाम् । |
| युष्मान् | ,, | अतियुष्मान् । |
| माम् | ,, | अतिमाम् । |
| अस्मान् | ,, | अत्यस्मान् इत्यादि |

नात्र युवावौ आदेशौ भवतः ।

## ३०२. यूयवयौ जसि ७–२–९३

युष्मदस्मदोः मपर्यन्तस्य यूय-वय इत्येतौ आदेशौ स्तः जसि परे । यूय अद् अम् ,वय अद् अम् इति स्थिते पररूपे शेषेलोपः पुनः पूर्वरूपं च यूयम् वयम् । संनिपातपरिभाषया अत्र जसः शी आदेशो न भवति । अमः युष्मदस्मदोश्च संनिपातमाश्रित्य प्रवृत्तः यूय इति वय इति आदेशः संनिपातविघातकः शीभावं प्रति निमित्तं न भवितुमर्हति ।

## ३०३. त्वमावेकवचने ७–२–९७

एकवचने इत्यर्थनिर्देशः । युष्मदस्मदोः मपर्यन्तस्येति वर्तते । विभक्ति

वित्यनुवर्तते । एकत्वविशिष्टार्थवाचिनोः युष्मदस्मदोः मपर्यन्तस्य त्व-म इत्येतावादेशौ स्तः विभक्तौ परतः । अत्रापि पूर्ववत् यदा समासे युष्मदस्मदी एकार्थे भवतः समासार्थस्य द्विवचनत्वे बहुवचनत्वेऽपि वा तदा युष्मदस्मदोः त्व-म आदेशौ भवत एव । त्वाहौ सौ इत्येवमादीना विषये तु त एवेष्यन्ते । यथा त्वामतिक्रान्तौ अतित्वाम् । अतिक्रान्तान् अतित्वान् । माम् अतिक्रान्तौ अतिमाम् । अतिक्रान्तान् अतिमान्

## ३०४. द्वितीयायां च ७-२-८७

अष्टन आ इत्यतः आ इति विभक्ताविति चानुवर्तते । युष्मदस्मदोः आकारः अन्तादेशः स्यात् द्वितीयायां विभक्तौ परतः । त्वाम् । माम् । युवाम् । आवाम् ।

## ३०५. शसो न ७-२-२९

नेत्यविभक्तिको निर्देशः । युष्मदस्मद्भ्यां ङसोऽश् इत्यतः युष्मदस्मद्भ्यामिति अनुवर्तते । युष्मदस्मद्भ्यामुत्तरस्य शसः नकारादेशः स्यात् । अमोऽपवादः । आदेः परस्येति शसः अकारस्य भवति । युष्मद् अस्, अस्मद् अस् इत्यत्र द्वितीयायां चेति दस्य आकारे, शसो अकारस्य नकारे सकारस्य संयोगान्तस्य लोपः इति लोपः युष्मान् । अस्मान् । यद्यपि पूर्वसवर्णदीर्घे तस्माच्छसो नः पुंसि इति नत्वे युष्मान् इति सिध्यति तथापि स्त्रियां नपुंसके च नत्वाप्राप्तेः शसो नेति सूत्रमावश्यकम् ।

## ३०६. योऽचि ७-२-८९

युष्मदस्मदोरनादेशे इति, विभक्तौ इति चानुवर्तते । युष्मदस्मदोः यकारः अन्तादेशः स्यात् अनादेशे अजादौ विभक्तौ परतः । टा प्रत्यये—युष्मद्+आ अस्मद्+आ त्वमावेकवचने इति मपर्यन्तस्य त्वमादेशयोः दस्य यत्वम्, पररूपम् त्वया । मया । अचीति किम् ? युवाभ्याम् । आवाभ्याम् । अनादेशे किम् ? त्वत् । मत् ।

## ३०७. युष्मदस्मदोरनादेशे ७-२-८६

आ, विभक्तौ इति वर्तते। रायोहलीत्यतो हलीति चानुवर्तते। हलि विभक्तौ विशेषणम्। युष्मदस्मदोः आकारोऽन्तादेशः स्यात् अनादेशे हलादौ विभक्तौ परतः। युष्मद् भ्याम्, अस्मद् भ्याम् मपर्यन्तस्य युवावादेशौ दस्य आकारः। सवर्णदीर्घः। युवाभ्याम्। आवाभ्याम्। दस्य आ सवर्णदीर्घः युष्माभिः। अस्माभिः।

## ३०८. तुभ्यमह्यौ ङयि ७-२-९५

ङे इत्यस्य सप्तम्यन्तं ङयि इति। युष्मदस्मदोः मपर्यन्तस्य ङयि परे तुभ्यमह्य इत्येतौ आदेशौ स्तः। ङे प्रथमयोरम् इति ङे इत्यस्य अमादेशः मपर्यन्तस्य तुभ्य इत्यादेशे शेषे लोपे तुभ्यम्। मह्य इत्यादेशे लोपे मह्यम् युवाभ्याम्। आवाभ्याम्।

## ३०९. भ्यसोऽभ्यम् ७-१-३०

युष्मदस्मद्भ्यां परस्य भ्यसः अभ्यम् इत्यादेशः स्यात्। शेषे लोपे पररूपम् युष्मभ्यम्। अस्मभ्यम्।

## ३१०. एकवचनस्य च ७-१-३२

पञ्चम्या अत् इत्यनुवर्तते। युष्मदस्मद्भ्यामुत्तरस्य पञ्चम्येकवचनस्य अत् इत्यादेशः स्यात्। त्वत्। मत्।

## ३११. पञ्चम्या अत् ७-१-३१

भ्यसोऽभ्यम् इत्यतः भ्यस इत्यनुवर्तते। युष्मदस्मद्भ्यामुत्तरस्य पञ्चम्या भ्यस अत् इत्यादेशः स्यात्। युष्मत्। अस्मत्।

## ३१२. तवममौ ङसि ७-२-९६

युष्मदस्मदोः मपर्यन्तस्य तव-मम आदेशौ स्तः ङसि परे।

## ३१३. युष्मदस्मद्भ्यां ङसोऽश् ७-१-२७

युष्मदस्मद्भ्याम् उत्तरस्य ङसः अश् आदेशः स्यात्। शित्वात् सर्वादेशः तव। मम। ओसि मपर्यन्तस्य युवावादेशयोः योऽचि इति दस्य यत्वम्

पररूपम् युवयोः । आवयोः ।

### ३१४. साम आकम् ७-१-३३

सकारेण सहितः आम् साम् तस्य । षष्ठी बहुवचनम् आगत सुट्कं गृह्यते । युष्मदस्मद्भ्यामुत्तरस्य सामः आकम् इत्यादेशः स्यात् । युष्माकम् । अस्माकम् । किमर्थमागतसुट्को गृह्यते ? नह्यादेशविधानकाले सुड् विद्यते इति चेत् ? तस्यैव भाविनः सुटो निवृत्यर्थम् । आदेशे कृते हि शेषे लोपे युष्मदस्मदोः अकारान्तत्वात् सुट् प्राप्नोति । स च स्थान्यन्तर्भूतत्वात् निवर्तते । आकम् इति दीर्घोच्चारणं सवर्णदीर्घार्थम् । अन्यथा पररूपं स्यात् । बहुवचने झल्येदिति एत्वनिवृत्यर्थतया अकारोच्चारणं भवतीति न तत्सामर्थ्यं वक्तुं शक्यम् । युष्मदस्मद्भ्यां ङौ मपर्यन्तस्य त्वमावेकवचने इति त्वमादेशौ । योऽचि दस्य यत्वम् पररूपं च त्वयि । मयि । युवयोः । आवयोः । युष्मदस्मदोरनादेशे इति दस्य आत्वे दीर्घे च युष्मासु । अस्मासु ।

### ३१५. पदस्य ८-१-१६

अपदान्तस्य मूर्धन्यः इति पर्यन्तमधिक्रियते ।

### ३१६. पदात् ८-१-१७

कुत्सने च इति सूत्रपर्यन्तमधिक्रियते ।

### ३१७. अनुदात्तं सर्वमपादादौ ८-१-१८

अनुदात्तं, सर्वमपादादौ इति पदत्रयम् आपादपरिसमाप्तेरधिक्रियते ।

### ३१८. युष्मदस्मदोः षष्ठी चतुर्थी द्वितीयास्थयोर्वान्नावौ ८-१-१२०

पदस्य, पदात् अनुदात्तं, सर्वम्, अपादादौ इति सर्वमिह सम्बध्यते । षष्ठी-चतुर्थी-द्वितीयाभिः सह तिष्ठतः इति षष्ठीचतुर्थीद्वितीयास्थौ तयोः । षष्ठ्यादिविशिष्टयोरित्यर्थः । पदात् परयोः अपादादौ स्थितयोः षष्ठीचतुर्थीद्वितीया-विशिष्टयोः युष्मदस्मच्छब्दयोः क्रमात् वाम् नौ आदेशौ स्तः । तौ चानुदात्तौ एकवचनबहुवचनान्तयोरादेशान्तरविधानात् द्विवचनान्तयोरेवैतावादेशौ विज्ञायेते ।

हरिः वां पतिः । सः नौ स्वामी । राजा वां ददाति । पिता नौ प्रयच्छति । गुरुः वाम् ईक्षते । सः नौ ईक्षते । षष्ठीचतुर्थीद्वितीयास्थयोरिति किम् ? ग्रामे युवाभ्यां कृतम् । जनपदे आवाभ्यां क्रियते । स्थग्रहणं श्रूयमाणविभक्त्यर्थम् । तेन 'इति युष्मत्पुत्रो ब्रवीति' । 'इति अस्मत्पुत्रो ब्रवीति' इत्यत्र न भवति विभक्तेर्लुप्तत्वात् ।

## ३१९. बहुवचनस्य वस्नसौ ८-१-२१

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः इति सम्बध्यते । पदात् परयोः अपादादौ स्थितयोः षष्ठीचतुर्थीद्वितीयाविशिष्टयोः बहुवचनान्तयोः युष्मदस्मदोः क्रमात् वस्-नस् आदेशौ स्तः । वां नावोरपवादः । षष्ठी–देवो वः शिवं करोति । स्वामी नः मङ्गलं चिन्तयति । चतुर्थी–दाता वो धनं ददाति । सः नः वस्त्रं ददाति । द्वितीया–ईश्वरः वः रक्षति । पिता नः पोषयति ।

## ३२०. तेमयावेकवचनस्य ८-१-२२

तेश्च मेश्च तेमयौ । पदात्परयोः अपादादौ स्थितयोः षष्ठीचतुर्थीविशिष्टयोः एकवचनान्तयोः युष्मदस्मदोः क्रमात् ते-मे आदेशौ स्तः । वां नावोरपवादः । द्वितीयान्तस्य आदेशान्तरविधानसामर्थ्यात् षष्ठीचतुर्थ्योरेवेदं सूत्रं प्रवर्तते । इदं ते गृहम् । तत् मे क्षेत्रम् । श्रीशः ते शर्म दद्यात् । मुकुन्दः मे दद्यात् ।

## ३२१. त्वामौ द्वितीयायाः ८-१-२३

एकवचनस्येति वर्तते । द्वितीयायाः यदेकवचनं तदन्तयोः पदात्परयोः अपादादौ स्थितयोः युष्मदस्मदोः क्रमात् त्वा-मा इत्येतावादेशौ स्तः । भगवान् त्वा पातु । पातु मा तथा । एषु सूत्रेषु पदात्परयोः किम् ? वाक्यादौ एते आदेशाः मा भूवन् । अपादादौ किम् ? पादादौ अपि आदेशा न स्युः । उक्ता एते आदेशाः अन्वादेशे नित्यं भवन्ति । अन्यत्र विकल्पेन ।

## ३२२. न च वाहाहैवयुक्ते ८-१-२४

चः समुच्चये, वा विकल्पे, ह इत्यद्भुते, अह इति खेदे, एव इत्यवधारणे ।

एतेषामन्यतमेन युक्ते युष्मदस्मदोः उक्ता वां नावादयः आदेशा न स्युः । हरिः त्वां मां च रक्षतु । कथं त्वां मां वा न रक्षेत् ? कृष्णः त्वां मां ह पश्यति । देवः त्वां माम् अह नानुगृह्णाति । एवमितरासु विभक्तिषूह्यम् ।

## ३२३. पश्यार्थैश्चानालोचने ८-१-२५

पश्यः = दर्शनम् अर्थो येषां तैः । दर्शनम् = ज्ञानम् । आलोचनम् = चक्षुर्विज्ञानम् , तद्भिन्नमनालोचनम् । नेत्यनुवर्तते । अनालोचने वर्तमानैः पश्यार्थैः = ज्ञानार्थैः धातुभिर्योगे युष्मदस्मदोः उक्ताः आदेशाः न स्युः । चेतसा त्वां मां समीक्षते । परंपरया पश्यार्थधातुयोगेपि आदेशो न भवति । भक्तस्तव रूपं ध्यायति । अत्र तवेत्यस्य रूपेणान्वयः न साक्षात् ध्यायतिना । अनालोचने इति किम् ? 'भक्तस्त्वा पश्यति चक्षुषा' इह स्यादेव । अथ नकारान्तः— राजन् शब्दात् सौ सर्वनामस्थाने चासम्बुद्धौ इति उपधादीर्घः । हल्ङ्याप् इति सुलोपः नलोपःप्रातिपदिकान्तस्येति नलोपः राजा । राजानौ । राजानः । सम्बुद्धौ—

## ३२४. न ङिसम्बुद्ध्योः ८-२-८

नलोपः प्रातिपदिकान्तस्येत्यतो नलोप इत्यनुवर्तते । नस्य लोपो न स्यात् ङौ सम्बुद्धौ च परतः । हे राजन् । राजानं राजानौ । शसि राजन् अस् अल्लोपोऽनः इति अल्लोपे स्तोश्चुनेति श्चुत्वम् राज्ञः । अल्लोपस्य स्थानिवत्वेन श्चुत्वं न स्यादिति न वाच्यम् । त्रिपादीस्थे कार्ये कर्तव्ये स्थानिवत्वप्रतिषेधात् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया श्चुत्वे अल्लोपस्यासिद्धत्वमित्यपि न, तस्या अपि परिभाषायाः त्रिपाद्यां यथोद्देशपक्षे अप्रवृत्तेः । लक्ष्यानुरोधेन पक्षस्य व्यवस्था । अतः कार्यकालपक्षमाश्रित्य दोषो नापादनीयः । राज्ञा । पदान्ते नलोपः—राजभ्यां राजभिः राजभ्यः । नलोपे सति सुपि चेति दीर्घस्य, अतोभिस ऐसिति ऐसः, बहुवचने झल्येदिति एत्वस्य च प्राप्तौ—

## ३२५. नलोपः सुप्स्वरसंज्ञा तुग्विधिषु कृति ८-२-२

सुप् च स्वरश्च, संज्ञा च, तुक् च, तेषां विधयः । विधिः विधानमित्यर्थः ।

कृति इति तुकैव सम्बध्यते अन्यत्रासम्भवात् । सुबाश्रयविधौ, स्वरविधौ, संज्ञाविधौ, कृन्निमित्त तुग्विधौ च नलोपः असिद्धः स्यात् । पूर्वत्रासिद्धमित्येव सिद्धे नियमार्थोऽयमारम्भः । तेन एतेष्वेव विधिषु नलोपस्यासिद्धत्वम् नान्यत्र । सुब्विधौ–राजभ्यां, राजभिः । संज्ञाविधौ–दण्डिदत्तौ । दत्तदण्डिनौ । घिसंज्ञा न भवति । तेन द्वन्द्वे घि इति पूर्वनिपातो न । कृतितुग्विधौ–वृत्रहभ्याम् । ह्रस्वस्य पिति कृति तुग् । एष्वेवेति नियमात् राजाश्वः इत्यत्र सवर्णदीर्घे असिद्धत्वं न । राज्ञः । राज्ञोः । राज्ञाम् । ङौ विभाषा ङिश्योरिति वा अल्लोपः राज्ञि-राजनि । राजसु । यज्वन् शब्दः–यज्वा । यज्वानौ । यज्वानः । यज्वानम् । शसि यज्वन् अस् अल्लोपे प्राप्ते—

### २२६. न संयोगाद्वमन्तात् ६–४–१३७

अल्लोपोऽन इत्यनुवर्तते ।- वकारमकारान्तात् संयोगात् परस्य अनोऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना । ब्रह्मणः । ब्रह्मणा । संयोगादिति किम् ? प्रतिदीम्ना । साम्ना । वमन्तादिति किम् ? राज्ञा । यज्वभ्याम् । यज्वभिः । शेषं राजवत् । ब्रह्मन् शब्दः–ब्रह्मा ब्रह्माणौ ब्रह्माणः । ब्रह्मणः । ब्रह्मणा इत्यादि यज्वन् वत् । एवं आत्मन्, सुशर्मन्, सुप्रथिमन् इत्यादयः ।

### २२७. सौ च ६–४–१३

इन्हन्पूषार्यम्णामित्यनुवर्तते । नोपधायाः इत्यतः उपधायाः, ढ्रलोपे इत्यतो दीर्घः, सर्वनामस्थाने इत्यतः असम्बुद्धाविति च । इन्-हन्-पूषन्-अर्यमन् इत्येतदन्तानामङ्गानामुपधायाः असम्बुद्धौ सौ परे एव दीर्घः स्यात् । दण्डी-वृत्रहा-पूषा-अर्यमा । साविति किम् ? दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ । असम्बुद्धाविति किम् ? हे दण्डिन् । हे वृत्रहन् । हे पूषन् । हे अर्यमन् । पूषा पूषणौ पूषणः । अर्यमा, अट्कुप्वाङिति णत्वम् अर्यमणौ अर्यमणः । वृत्रहा । एकाजुत्तरपदे णः इति णत्वम् वृत्रहणौ वृत्रहणः । वृत्रहणम् वृत्रहणौ । शसि वृत्रहन् अस् अल्लोपे सति वृत्रह्न् अस् इति स्थिते—

## ३२८. हो हन्तेर्ञ्णिन्नेषु ७-३-५४

ञ्च ण्च ञ्णौ तौ इतौ ययोस्तौ ञ्णितौ च नश्च ञ्णिन्नाः तेषु । चजोः कु इत्यतः कु इत्यनुवर्तते । हन् धातोर्हकारस्य कुत्वं स्यात् ञिति णिति प्रत्यये नकारे च परे । घातयति । साधुघाती । घ्नन्ति । हः इति किम् ? अन्त्यस्य मा भूत् । हन्तेरिति किम् ? प्रहारः । हस्य आन्तरतम्यात् घः वृत्रघ्नः ।

## ३२९. अत्पूर्वस्य ८-४-२२

हन्तेरित्यनुवर्तते । रषाभ्यां नो णः इति च । हन्तेः अकारपूर्वस्यैव नस्य णः । तेन वृत्रघ्न इत्यत्र एकाजुत्तरपदे णः इति णत्वं न भवति । वृत्रघ्ना वृत्रघ्ने–शेषं राजवत् । इन्नन्तः शार्ङ्गिन् शब्दः–शार्ङ्गी शार्ङ्गिणौ शार्ङ्गिणः । यशस्विन् इति विन् प्रत्ययान्तः । 'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' इति परिभाषया इन्हन् इति सूत्रे अर्थवत एव इनो ग्रहणात् विन् प्रत्यये इनोऽनर्थकत्वात् ग्रहणं न स्यादिति चेत् ? 'अनिनस्मन् ग्रहणान्यर्थवता चानर्थकेन च प्रयोजयन्ति' (पा) अन्-इन्-अस्-मन् एषाम् अर्थवतां अनर्थकानां च ग्रहण-मिष्यते । यशस्वी यशस्विनौ यशस्विनः । श्वन् शब्दः–श्वा श्वानौ श्वानः । श्वानं श्वानौ । शसि श्वन् अस् इति स्थिते—

## ३३०. श्वयुवमघोनामतद्धिते ६-४-१३३

श्वा च मघवा च युवा च श्वयुवमघवानः, तेषाम् । वसोः सम्प्रसारणम् इत्यतः सम्प्रसारणमित्यनुवर्तते । अल्लोपो नः इत्यतः अन इत्यपकृष्यते । भस्येति वर्तते । अन्नन्तानां भसंज्ञकानां श्वन्-युवन्-मघवन् एषां तद्धितभिन्ने प्रत्यये परे संप्रसारणं स्यात् । शु अन् अस् इति जाते ।

## ३३१. सम्प्रसारणाच्च ६-१-१०८

इको यणचीत्यतः अचि, अमिपूर्वः इत्यतः पूर्व इत्यनुवर्तते । एकः पूर्वपरयोः इत्यधिक्रियते । सम्प्रसारणात् अचि परे पूर्वरूपमेकादेशः स्यात् । शुनः । शुना शुने इत्यादि । युवा युवानौ युवानः । युवानं युवानौ ।

युवन् अस् वस्य सम्प्रसारणम् । पूर्वरूपम् यु उन् सवर्णदीर्घः । यकारस्यापि श्वयुवेति सम्प्रसारणे प्राप्ते—

### ३३२. न सम्प्रसारणे सम्प्रसारणम् ६–१–३७

सम्प्रसारणे परे पूर्वस्य सम्प्रसारणं न स्यात । इति सम्प्रसारणं न भवति। यूनः यूना यूनेत्यादि । मघवन्—मघवा मघवानौ मघवानः । मघवानम्। शसि सम्प्रसारणं पूर्वरूपम् आद्गुणः गुणः मघोनः । मघोना । मघोनेत्यादि। अर्वन् शब्दः नान्तः—तस्य अर्वा । औ प्रत्यये—

### ३३३. अर्वणस्त्रसावनञः ६–४–१२७

तृ असौ इति छेदः । न विद्यते नञ् यस्येति बहुव्रीहिः । अङ्गस्येति वर्तते । नञारहितस्य अर्वन् इत्यस्याङ्गस्य तृ इत्यन्तादेशः स्यात् , न तु सौ। ऋकारः इत् । अर्वन् औ नस्य त् आदेशः । अर्वत् । उगित्वात् उगिदचामिति नुम् । नस्य अनुस्वारपरसवर्णौ अर्वन्तौ । अर्वन्तः । अर्वन्तम्। अर्वन्तौ । अर्वता । भ्यामादौ हलि जश्त्वम् अर्वद्भ्याम् अर्वद्भिरित्यादि। अनञः किम् ? अनर्वा अनर्वाणौ अनर्वाणः यज्ववत् ।

### ३३४. पथिमथ्यृभुक्षामात् ७–१–८५

पन्थाश्च, मन्थाश्च, ऋभुक्षाश्च पथिमथ्यृभुक्षाणः तेषाम् । सावनडुहः इत्यतः सावित्यनुवर्तते । पथिन्-मथिन्-ऋभुक्षिन् इत्येषाम् आकारः अन्तादेशः स्यात् सौ परे ।

### ३३५. इतोऽत् सर्वनामस्थाने ७–१–८६

पथिमथिऋभुक्षामित्यनुवर्तते । पथिन् मथिन्-ऋभुक्षिन् इत्येतेषामिकारस्य अकारः आदेशः स्यात् सर्वनामस्थाने परे ।

### ३३६. थोन्थः ७–१–८७

सर्वनामस्थाने इत्यनुवर्तते । पथिमथोरिह सम्बन्धः । पथिमथोः थस्य 'न्थ' इत्यादेशः स्यात् सर्वनामस्थाने परे । पथिन् स् मथिन् स् इत्यत्र नस्य आकारः । इतोत् इति इकारस्य अकारः । थोन्थ इति थस्य न्थादेशः

पन्थ आसु सवर्णदीर्घः पन्थाः । मन्थाः । ऋभुक्षाः । औ प्रभृतिषु सर्वनामस्थानेषु सावित्युक्तेर्न आकारः । इतोत् इति इकारस्य अकारः । न्थादेशः । सर्वनामस्थाने च इति उपधादीर्घः पन्थानौ । पन्थानः । पन्थानम् । पन्थानौ । मन्थानौ मन्थानः । मन्थानं मन्थानौ । ऋभुक्षिन् शब्दे इतोत् । दीर्घः ऋभुक्षाणौ । ऋभुक्षाणः । ऋभुक्षाणम् ।

### ३३७. भस्य टेर्लोपः ७-१-८८

पथिमथिऋभुक्षामित्यनुवर्तते । पथिमथिऋभुक्षां भसंज्ञकानां टेर्लोपः स्यात् । भत्वादौ अचि टेः इनोलोपे पथः । पथा । पथे । पथः । पथोः । पथाम् । पथि । मथः । मथा । मथे । मथः । मथोः । मथाम् । मथि । ऋभुक्षः । ऋभुक्षा । ऋभुक्षे । ऋभुक्षः । ऋभुक्षोः । ऋभुक्षाम् । ऋभुक्षि । पदान्ते नलोपः पथिभ्याम् पथिभिः । मथिभ्याम् मथिभिः । ऋभुक्षिभ्याम् ऋभुक्षिभिः इत्यादि । पञ्चन्, सप्तन्, नवन्, दशन् इति नान्ताः संख्यावाचिनः नित्यबहुवचनान्ताः ।

### ३३८. ष्णान्ता षट् १-१-२४

ष्च नश्च ष्णौ ष्णौ अन्तौ यस्याः सा ष्णान्ता बहुगणवतुडतिसंख्या इत्यतः संख्येत्यनुवर्तते । षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । इति नान्तत्वात् षट्संज्ञा । तेभ्यः जसशसोः षड्भ्योलुक् इति लुक् । पञ्च, पञ्च । सप्त, सप्त । नव, नव । दश, दश । पञ्चभिः पञ्चभ्यः आमि पञ्चन् आम् ह्रस्वाद्यन्तत्वाभावात् नुटि अप्राप्ते—

### ३३९. षट् चतुर्भ्यश्च ७-१-५५

षट् चतुर्भ्य इति पञ्चमी । नुट् इत्यनुवर्तते । आमि सर्वनाम्नः सुट् इत्यतः आमीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । षट् इति षट्संज्ञकं गृह्यते न तु षट् शब्दः 'कृत्रिमा-कृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति न्यायात् । षट्संज्ञकेभ्यः शब्देभ्यः चतुरशब्दाच्च परस्य आमः नुडागमः स्यात् । पञ्चानाम्, सप्तानाम्, दशानाम् ।

### ३४०. नोपधायाः ६-४-७

नेति लुप्तषष्ठीकम् अधिकृतस्याङ्गस्य विशेषणम् । नामीति अनुवर्तते दीर्घ इति च । नान्तस्याङ्गस्य उपधाया दीर्घः स्यात् नामि परे । पञ्चन् नाम्, नलोपः प्रातिपदिकान्तस्येति नलोपः पञ्चानाम् । एवमेव सप्तानाम् । नवानाम् । दशानाम् । प्रियाः पञ्च यस्य सः इति बहुव्रीहौ तु पञ्चन् इत्यस्य गौणत्वात् ततः परयोः जश्शसोः लुक्, आमः षट्चतुर्भ्यश्चेति नुट् च न भवतः । षड्भ्यः चतुर्भ्यः इति बहुवचननिर्देशेन षट्संज्ञकस्यार्थस्य प्राधान्ये एव तत्प्रवृत्त्यङ्गीकारात् । प्रियपञ्चा प्रियपञ्चानौ प्रियपञ्चानः इत्यादि राजवत् ।

### ३४१. अष्टन आ विभक्तौ ७-२-८४

रायो हलीत्यतः हलीत्यनुवर्तते । तच्च विभक्तौ विशेषणम् । अष्टन् इत्यस्य आत्वं वा स्यात् हलादौ विभक्तौ परतः । अष्टाभिः । अष्टाभ्यः । विभक्ताविति किम्? अष्टत्वम् ।

### ३४२. अष्टाभ्यः औश् ७-१-२१

जश्शसोः शिः इत्यतः जश्शसोरित्यनुवर्तते । अष्टाभ्य इति कृताकारः अष्टन् शब्दो गृह्यते । कृताकारादष्टनः परयोः जश्शसोः औश् इत्यादेशः स्यात् । षड्भ्योलुक् इत्यस्यायमपवादः । अष्टौ । कृताकारस्य ग्रहणं किम्? अष्ट । एतदेव कृतात्वस्य ग्रहणं ज्ञापकम्—अष्टन आ विभक्तौ इति आत्वविकल्पस्य । अष्टौ-अष्टौ-अष्टाभिः-अष्टाभ्यः-अष्टानाम्-अष्टासु । आत्वाभावे—अष्ट अष्ट अष्टभिः अष्टभ्यः अष्टसु ॥ अथ मकारान्ताः—किम् शब्दः ।

### ३४३. किमः कः ७-२-१०३

अष्टन आ विभक्तौ इत्यतः विभक्तौ इत्यनुवर्तते । किम् शब्दस्य क इत्यादेशः स्यात् विभक्तौ परतः । कः । कौ । सर्वनामत्वात् जसः शी आदेशः के । कम् । कौ । कान् इत्यादि सर्ववत् ।

### ३४४. इदमो मः ७-२-१०८

तदोः सः सौ इत्यतः सौ इत्यनुवर्तते । इदमः मः अन्तादेशः स्यात् सौ

परे। त्यदादीनामः इत्यस्यापवादः।

### ३४५. इदोऽय् पुंसि ७-२-१११

इदमः इत्यनुवर्तते। यः सौ इत्यतः साविति च। इदम् शब्दावयवस्य इदः अय् इत्यादेशः स्यात् सौ परे पुंसि। सोर्लोपः। अयम्। पुंसि इति किम्? इयम्। स्त्रियां मा भूत्।

### ३४६. दश्च ७-२-१०९

इदमो म इति वर्तते। दः इति षष्ठी। विभक्ताविति मण्डूकप्लुत्या अनुवर्तते। इदमः दस्य मकारादेशः स्यात् विभक्तौ परतः। इदम् औ त्यदाद्यत्वं पररूपत्वं च। दस्य मः इम औ वृद्धिः—इमौ। इमे। इमं इमौ इमान्।

### ३४७. अनाप्यकः ७-२-११२

अन्-आपि-अकः इतिच्छेदः। न विद्यते क् यस्य सः अक् तस्य अकः। ककाररहितस्येत्यर्थः। इदमः, इदः इति विभक्ताविति च वर्तते। आपीति प्रत्याहारः तृतीयैकवचनात्प्रभृति सुपः पकारेण। अककारस्य इदमः इद् इत्यस्य स्थाने अन् आदेशः स्यात् आपि विभक्तौ परतः। इदम् आ त्यदाद्यत्वं पररूपत्वम्। इदः अन्। अन+आ इति स्थिते, टाङसि-इति इनादेशः गुणे अनेन। अक इति किम्? इमकेन।

### ३४८. हलि लोपः ७-२-११३

आप्यक इत्यनुवर्तते। इदमः, इदः इति वर्तते। अककारस्य इदमः इद् इत्यस्य लोपः स्यात् हलादौ आपि परे। इदम एकदेशस्य इदः अनर्थकतया, नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे इत्युक्तेः, अलोऽन्त्यविधिर्नास्ति इति सर्वस्य लोपः। इदम् भ्याम् त्यदाद्यत्वपररूपयोः इद भ्याम् इद् इत्यस्य लोपे अ भ्याम्, अकारान्तस्याङ्गस्याभावात् सुपि चेति दीर्घे अप्राप्ते—

### ३४९. आद्यन्तवदेकस्मिन् १-१-२१

एक शब्दः असहायवाची। तदादितदन्तयोः क्रियमाणं कार्यं असहायेपि

तदादौ तदन्ते इव स्यात् । दीर्घः . आभ्याम् । इदम् भिस् हलिलोप इति इदोलोपे अ + भिस् आद्यन्तवद्भावेन अतो भिस ऐस् इति भिसः ऐसादेशे प्राप्ते—

### ३५०. नेदमदसोरकोः ७-१-११

अतो भिस ऐस् इत्यतो भिसः ऐस् इत्यनुवर्तते । अकोरिति षष्ठी न विद्यते ककारो ययोः । अककारयोः इदम्-अदस् एतयोः भिसः ऐस् न स्यात् । अ + भिः, बहुवचने झल्येत् इत्येत्वे एभिः । अदस्-अमीभिः । अकोरिति किम् ? इमकैः, अमुकैः । . ङे प्रत्यये अनादेशात् पूर्वं नित्यत्वात् ङेः स्मै, आदेशे हलादिपरकत्वात् हलि लोपः अस्मै । आभ्याम् । एभ्यः । अस्मात् आभ्याम् एभ्यः । अस्य । ओसि अनादेशः अनयोः एषाम् । अस्मिन् । अनयोः । एषु ॥ चतुर्शब्दः रेफान्तः नित्यं बहुवचनान्तः ।

### ३५१. चतुरनडुहोरामुदात्तः ७-१-९८

इतोत् सर्वनामस्थाने इत्यतः सर्वनामस्थाने इत्यनुवर्तते । चतुर् -अनडुह् एतयोः सर्वनामस्थाने परे आमागमः स्यात् स चोदात्तः । आम् मित्वात् अचः परः भवति । चतुर् अस् आम् यण् रुत्वविसर्गयोः चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः । आमि षट् चतुर्भ्यश्चेति आमो नुडागमः । रषाभ्यामिति णत्वम् चतुर्णाम् । षत्वम् चतुर्षु । नात्ररेफस्य विसर्गः रोः सुपीति सुपि परे रोरेव रेफस्य विसर्ग इति नियमात् । शोभना द्यौः यस्य सः इति बहुव्रीहौ सुदिव् शब्दः वकारान्तः तस्मात् सौ सुदिव् स्,

### ३५२. दिव औत् ७-१-८४

सावनडुहः इत्यतः सौ इत्यनुवर्तते । औत् इति तकारः उच्चारणार्थः । दिव् इत्येतस्य सौ परे औ आदेशः स्यात् । अलोन्त्यस्येति अन्त्यस्य वकारस्य भवति । दिव् इति अव्युत्पन्नस्य प्रातिपदिकस्य निरनुबन्धकस्य सूत्रे ग्रहणम् । सानुबन्धकत्वात् दिवु इति धातो र्न ग्रहणम् । 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति न्यायात् । तेन अक्षद्यूः इत्यत्र न भवति । वकारस्यौत्वे यणि सुद्यौः । सुदिवौ सुदिवः सुदिवं सुदिवौ . . . ॥

### ३५३. दिव उत् ६-१-१३१

एङः पदान्तादित्यतः पदान्तग्रहणमनुवृत्तं सप्तम्यन्ततया विपरिणम्यते। दिव इति प्रातिपदिकं गृह्यते न धातुः निरनुबन्धक परिभाषया। दिवः उकारः अन्तादेशः स्यात् पदान्ते। सुद्युभ्याम् सुद्युभिः इत्यादि। पदान्ते इति किम्? सुदिवौ। धातोरग्रहणात् अक्षद्यूभ्याम् इत्यत्र न भवति। **शकारान्ताः**—विश् शान्तः—तस्य व्रश्चेति षत्वम्। जश्त्वचर्त्वे विट् विशौ विशः विशं विशः विड्भ्यामित्यादि। तादृश्—इति क्विन्नन्तः। पदान्ते क्विन्प्रत्ययस्य कुः इति कुत्वम्। तादृक् तादृशौ तादृशः तादृशं तादृशा तादृग्भ्यामित्यादि। एवं घृतस्पृश् शब्दः। **षकारान्ताः**—द्विष्—पदान्ते जश्त्वचर्त्वे द्विट् द्विषौ द्विषः। द्विषं द्विषौ द्विषः। द्विषा द्विड्भ्यामित्यादि। एवं रत्नमुष् शब्दः। षष् शब्दः नित्यं बहुवचनान्तः। तस्मात् जश्शसोः षड्भ्यो लुक् इति लुक्। जश्त्व चर्त्वे षट्। षट्। षड्भिः। षड्भ्यः। आमि-षट् चतुर्भ्यश्चेति नुट्, न पदान्ताट्टोरनाम् इत्यत्र अनाम् इति पर्युदासात् ष्टुत्वनिषेधाभावेन ष्टुत्वम्। 'प्रत्यये भाषायां नित्यम्' इति नित्यमनुनासिकः षण्णाम् षट्सु। **सकारान्ताः**—ईयसुन्नन्तः श्रेयस् शब्दः। तस्मात् सौ उगित्वात् उगिदचामिति नुम् श्रेयन्स् स्, सान्तमहतः इति दीर्घः, सोर्हल्ङ्यादिना, सस्य संयोगान्तस्येति च लोपः श्रेयान्। नश्चेत्यनुस्वारः श्रेयांसौ श्रेयांसः श्रेयांसं श्रेयसा। भ्यामि सस्य रुत्वे हशि चेति उत्वे गुणे श्रेयोभ्याम् श्रेयोभिः इत्यादि। एवं गरीयस् महीयस्। वसु प्रत्ययान्तः विद्वस् शब्दः सकारान्तः—तस्मात् सौ उगित्वान्नुम् सान्तमहतः संयोगस्येति दीर्घः, सुलोपः, संयोगान्तस्य सस्य लोपः। संयोगान्तस्येति लोपस्यासिद्धत्वात् नलोपो न, विद्वान्। नुमो नस्य नश्चापदान्तस्येति अनुस्वारः विद्वांसौ विद्वांसः विद्वांसं विद्वांसौ।

### ३५४. इग्यणः सम्प्रसारणम् १-१-४५

यणः स्थाने प्रयुज्यमानः इक् सम्प्रसारणसंज्ञः स्यात्।

### ३५५. वसोः सम्प्रसारणम् ६-४-१३१

भस्येत्यधिक्रियते। प्रत्ययग्रहणपरिभाषया वसोरिति तदन्तग्रहणम्।

वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । विद्वस् अस् वस्य सम्प्रसारणम् उकारः विद् उ अ अस् इति स्थिते ।

### ३५६. सम्प्रसारणाच्च ६–१–१०८

इकोयणचीत्यतः अचीति, अमिपूर्व इत्यतः पूर्वः इति चानुवर्तते । एकः पूर्वपरयोरित्यधिक्रियते । सम्प्रसारणात् अचि परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यात् । उकाराकारयोः पूर्वरूपे विदुस् अस्, प्रत्ययावयवत्वात् सस्य षत्वम् विदुषः । विदुषा ।

### ३५७. वसुस्रंसुध्वंस्वनडुहां दः ८–२–७२

वसुः प्रत्ययः, तेन तदन्तं गृह्यते । स्रंसु-ध्वंसु इति धातू । ससजुषोः इत्यतः स इति लुप्तषष्ठीकमनुवर्तते । तच्च वसोर्विशेषणम् नतु स्रंसुध्वंसोः अव्यभिचारात् । नाप्यनडुहः असम्भवात् । तदन्तविधिः । पदस्येत्यधिक्रियते । वस्वन्तस्य सान्तस्य पदस्य स्रंसु ध्वंसु-अनडुह् इत्येतेषां च दकारादेशः स्यात् । अलोऽन्त्यस्येति अन्त्यस्य भवति । विद्वस् भ्याम्–विद्वद्भ्याम् । विद्वद्भिः । विद्वद्भ्यः । स्रंसु–उखास्रद्भ्याम् । ध्वंसु–पर्णध्वद्भ्याम् । अनडुह्–अनडुद्भ्याम् । सान्तस्येति किम् ? विद्वान् । पदान्तस्येति किम् ? विद्वांसौ । विदुषे विदुषः विदुषाम् विदुषि विदुषोः । सुपि दत्वं चर्त्वम् विद्वत्सु । सेदिवस् शब्दः–सेदिवान् सेदिवांसौ सेदिवांसः । सेदिवांसम् सेदिवांसौ । शसि वसोः सम्प्रसारणम् इति वस्य सम्प्रसारणे पूर्वरूपे सेदि अस् इति जाते इडागमनिमित्तस्य वलादित्वस्य निवृत्त्या निमित्तापाये नैमित्तिकस्याप्यपायः इति इटो निवृत्तौ सेदुषः इति रूपम् । सेदुषा सेदुषे सेदिवद्भ्यामित्यादि । एवं तस्थिवस्, जग्मिवस् इत्यादयः ।

### ३५८. पुंसोऽसुङ् ७–१–८९

इतोत् सर्वनामस्थाने इत्यतः सर्वनामस्थाने इत्यनुवर्तते । पुंस् इत्यस्य सर्वनामस्थाने परे असुङ् आदेशः स्यात् । ङिच्चेत्यन्तादेशः । सस्य असुङ् आदेशः । निमित्तापायात् नैमित्तिकस्य अनुस्वारस्य निवृत्तिः । उगित्वान्नुम् ।

सान्तमहत इति दीर्घः । हलः परत्वेन सोर्लोपः सस्य संयोगान्तलोपः । पुमान् । नस्यानुस्वारः पुमांसौ । पुमांसः । शसादौ असर्वनामस्थानत्वात् असुङ् न । पुंसः । पुंसा । पदान्ते सस्य संयोगान्तलोपः पुम्भ्याम् पुम्भिः इत्यादि । उशनस् शब्दः सौ ऋदुशनस्पुरुदंसोऽनेहसां च इत्यनङ् उशनन् स् उपधादीर्घः सुलोपः । नलोपः प्रातिपदिकान्तस्येति नलोपः । उशना ।

सम्बुद्धौ वानङ् नलोपश्च वा वाच्यः (वा).

हे उशनन् । हे उशन । हे उशनः । नान्तत्वाभावात् दीर्घो न, उशनसौ उशनसः । उशनसम् । भ्यामि-उशनस्-भ्याम् सस्य रुत्वे हशिचेत्युत्वे गुणे च उशनोभ्याम् । एवम् अनेहस् शब्दात् ऋदुशनस्पुरोदंसोऽनेहसामिति अनङि अनेहा । अनेहसौ । अनेहसः । अनेहोभ्यामित्यादि । वेधस् शब्दात् सौ—असन्तत्वात् अत्वसन्तस्य चाधातोरिति दीर्घः । सुलोपः, रुत्वविसर्गौ वेधाः । वेधसौ वेधसः वेधसा वेधोभ्यामित्यादि । एवं चन्द्रमस्, सुमनस् नचिकेतस् प्रभृतयः । अदस् शब्दात् सौ त्यदादीनामः इति अत्वे प्राप्ते

३५९. अदस औ सुलोपश्च ७–२–१०७

तदोः सः सौ इत्यतः सौ इत्यनुवर्तते । अदसः सौ परे अन्त्यस्य सस्य औकारादेशः स्यात् सोश्च लोपः । त्यदादीनाम इति अत्वस्यापवादः । अद औ इति स्थिते तदोः ससाविति दस्य सः । वृद्धिः असौ ।

३६०. अदसोसेर्दादु दो मः ८–२–८०

अदस इत्यवयवषष्ठ्यन्तम् । असोरिति तद्विशेषणम् । न विद्यते सिः यस्य सः असिः तस्य । इकारः उच्चारणार्थः । असकारान्तस्य अदसः दात्परस्य उवर्णादेशः स्यात् दस्य च मकारः । उकारस्य विधीयमानत्वेपि 'भाव्यमानोप्युकारः सवर्णान् गृह्णाति' इति वचनात् सवर्णग्रहणम् । तेन ह्रस्वव्यञ्जनयोः ह्रस्वः । दीर्घस्य दीर्घः आदेशो भवति । अदस् औ त्यदाद्यत्वम्, पररूपम्, वृद्धिः अदौ औकारस्य ऊत्वे दस्य च मत्वे अमू । असोः किम् ? अदः इच्छति = अदस्यति । दात् किम् ? अमुया । अन्त्यस्यकारस्य मा भूत् ।

जसि त्यदाद्यत्वे पररूपे च जसः शी आदेशः गुणः अदे इति स्थिते—

## ३६१. एत ईद्बहुवचने ८–२–८१

अदसोसेरित्यतः अदसः, दात् दो मः इत्यनुवर्तते। बहुवचने इत्यर्थ निर्देशि, न पारिभाषिकम्। अदसः दकारादुत्तरस्य एकारस्य ईकारः आदेशः स्यात् दस्य च मः बह्वनामर्थाभुक्तौ। अमी। बहुवचने परे इत्युक्तौ तु एकारात्परस्य बहुवचनस्याभावात् अमी इत्यत्र न स्यात्। अमि, त्यदाद्यत्वे पररूपे अमिपूर्व इति पूर्वरूपे अदम्, अस्य उकारः मत्वम्। अमूः। अमून्। टा प्रत्यये मत्वोत्वयोः अमु आ, घिसंज्ञामाश्रित्य आङोनाऽस्त्रियामिति नाभावे अमुना। ननु पूर्वत्रासिद्धम् इति नाभावे कार्ये त्रिपादीस्थसूत्रविहितयोः मत्वोत्वयोः असिद्धत्वात् घिसंज्ञाया अभावेन घिसंज्ञाश्रयो ना भावः न भवितुमर्हति इति चेत्? असिद्धत्वाभावः उच्यते—

## ३६२. न मु ने ८–२–३

असिद्धम् इत्यस्य सम्बन्धः। म् च उश्चेति समाहारः मु। ना इत्यस्य सप्तम्येकवचनं ने इति। विषयसप्तमी। ना भावे कर्तव्ये मुभावः असिद्धः न स्यात्। अमुना इत्यत्र मुत्वस्य सिद्धत्वे घिसंज्ञानिमित्तो ना भावः सिध्यति। कृते नाभावे मुत्वस्यासिद्धत्वात् सुपि चेति दीर्घो संनिपातपरिभाषया न भवति। अमूभ्याम्। बहुवचने झल्येदिति एत्वे सति अदेभिः इति स्थिते ईत्वमत्वे अमीभिः। ङे प्रत्यये त्यदाद्यत्वं पररूपत्वम् ङेः स्मै, उत्वमत्वे पत्वम् अमुष्मै। अमीभ्यः।

लिह् हकारान्तः—

## ३६३. हो ढः ८–२–३१

ह इति षष्ठ्यन्तम्। झलो झलीत्यतः झलीत्यनुवर्तते। पदस्येत्यधिकृतम्। स्कोः संयोगाद्योरित्यतः अन्ते इत्यनुवर्तते। हकारस्य ढकारः आदेशः स्यात् झलि परे पदान्ते च। लिह् स् सोर्लोपे हस्य ढत्वे जश्त्वचर्त्वे लिट्। लिहौ लिहः लिहं लिहौ लिहः लिहा लिड्भ्याम् लिड्भिः इत्यादि।

### ३६४. दादेर्धातोर्घः ८-२-३२

पूर्वसूत्रात् ह इत्यनुवर्तते । झलि, पदस्य, अन्ते इत्यस्य च सम्बन्धः । धातुरित्यावर्तते । एकं धातुग्रहणमुपदेशकालं लक्षयति । धातोरित्यवयवषष्ठी । उपदेशे हकारादेर्धातोरवयवस्य हस्य घकारादेशः स्यात् । होढः इत्यस्यापवादः । दुह् इत्यस्मात् सौ सोर्लोपे हस्य घत्वे दुघ् ।

### ३६५. एकाचो बशो भष् झषन्तस्य स्ध्वोः ८-२-३७

स् च ध्व् च स्ध्वौ तयोः । बश इति स्थानषष्ठी । एकाच इत्यवयवषष्ठी । एकः अच् यस्येति बहुव्रीहिः । शब्दस्येत्यध्याह्रियते । धातोरित्यस्यानुवृत्तस्य झषन्ते अन्वयः । धातोरवयवो य एकाज् झषन्तः तदवयवस्य बशः स्थाने भष् आदेशः स्यात् सकारे ध्वशब्दे च परे पदान्ते च । दुघ् इत्यत्र दस्य धकारः जश्त्वचर्त्वे धुक् । दुहौ दुहः दुहा धुग्भ्याम् धुग्भिः धुक्षु ।

### ३६६. वा द्रुहमुहष्णुहष्णिहाम् ८-२-३३

दादेर्धातोरित्यतः घ इत्यनुवर्तते । झलि, पदस्य, अन्ते इत्यस्यात्रापि सम्बन्धः । द्रुह्-मुह-ष्णुह-ष्णिह एषां हकारस्य वा घकारादेशः स्यात् झलि पदान्ते च । द्रुह् अस्मात् सौ हस्य घत्वे दस्य भष्भावे ध्रुक् । पक्षे ढः ध्रुट् द्रुहौ द्रुहः द्रुहम् द्रुहा ध्रुग्भ्याम्, ध्रुड्भ्याम् इत्यादि । एवं मुक्-मुट् मुहौ मुहः । स्नुक्-स्नुट् स्नुहौ स्नुहः । स्निक्-स्निट् स्निहौ स्निहः इत्यादि । विश्वं वहतीत्यर्थे विश्ववाह् शब्दः । होढः इति हस्य ढत्वम् जश्त्वचर्त्वे विश्ववाट् विश्ववाहौ विश्ववाहः विश्ववाहं विश्ववाहौ । तस्मात् शसि ।

### ३६७. वाह ऊठ् ६-४-१३२

भस्येत्यधिकृतम् । वसोः सम्प्रसारणम् इत्यतः सम्प्रसारणमित्यनुवर्तते । तच्च ऊठ् इत्यनेनान्वेति । भस्य वाहः सम्प्रसारणमूठ् स्यात् । विश्व उ आह् अस् इति स्थिते सम्प्रसारणाच्चेति पूर्वरूपे विश्व ऊह्, एत्येधत्यूठ्सु इति वृद्धिः, रुत्वविसर्गयोः विश्वौहः । विश्वौहा विश्ववाड्भ्याम् विश्ववाड्भिः विश्वौहे इत्यादि । अनडुह् शब्दः तस्मात् सौ चतुरनडुहोराम् इत्यनेन अमि अनड्वाह् स् इति स्थिते—

8*

### ३६८. सावनडुहः ७-१-८२

आच्छीनद्योर्नुम् इत्यतः आदिति नुमिति चानुवर्तते। अनडुह् शब्दस्य अवर्णात् परः नुमागमः स्यात् सौ परे। मित्वादन्त्यादचः परः। अनड्वान् स् सोर्लोपः। हस्यसंयोगान्तलोपः अनड्वान्। अवर्णात्परस्य नुमो विधानात् विशेषविहितोऽपि नुम् आमं न बाधते आमः उपजीव्यत्वात्। अम् सम्बुद्धौ इत्यमा च विशेषविहितेनापि नुम् न बाध्यते नुमः उपजीवकत्वात्। उपजीव्योपजीवकयोः बाध्यबाधकाभावाभावात्। अनड्वाहौ अनड्वाहः।

### ३६९. अम् सम्बुद्धौ ७-१-९९

चतुरनडुहोरित्यनुवर्तते। चतुर्–अनडुह् शब्दयोः अमागमः स्यात् सम्बुद्धौ परतः। हे अनड्वन्। अनडुहः अनडुहा। भ्यामादौ पदान्ते वसुस्रंसु ध्वंस्वनडुहां दः इति हस्य दत्वम् अनडुद्भ्याम् अनडुद्भिः इत्यादि। तुरासाह् शब्दात् सौ सोर्लोपे होढ इति ढत्वे जश्त्वे तुरासाड इति स्थिते—

### ३७०. सहेः साडः सः ८-३-५६

अपदान्तस्य मूर्धन्य इत्यतः मूर्धन्य इत्यनुवर्तते। साड्रूपस्य सहेः सकारस्य मूर्धन्यादेशः स्यात्। तुराषाट्। साड्रूपत्वाभावात् षत्वं न–तुरासाहौ तुरासाहः। पदान्ते झलि च ढत्वं यदा, तदा षत्वमपीति बोध्यम्। तुराषाड्भ्यामित्यादि। (सूत्राणि ३७०)

इति हलन्त पुलिङ्ग प्रकरणम्

---

## अथ हलन्त स्त्रीलिङ्ग प्रकरणम्

वाच् चकारान्तः–सौ सुलोपः चोः कुः कुत्वम्, जश्त्वचर्त्वे–वाक् वाचौ वाचः वाग्भ्याम्–वाग्भ्याम्। स्रज् जान्तः। पदान्ते क्विन् प्रत्ययस्य कुरिति कुत्वं विशेषः। स्रक् स्रजौ स्रजः स्रजा स्रग्भ्याम् भिषग्वत्। सरित् तान्तः–सरित् सरितौ सरितः शेषं मरुद्वत्। शरद् दान्तः–शरत् शरदौ शरदः।

सुहृद् । तद् शब्दः । सौ परे त्यदाद्यत्वं पररूपत्वम् टाप् सवर्णदीर्घः तदोः सः सावनन्त्ययोरिति तकारस्य सः । आबन्तात्परत्वेन सोर्लोपः सा । औङ आपः इति औङः शीभावे से ताः शेषः सर्ववत् । एतद् शब्दस्य तु तकारस्य सत्वे आदेशप्रत्ययोः इति षत्वं विशेषः । एषा एते एताः इत्यादि । एवं यद् शब्दस्य या ये याः इत्यादि । युष्मद् असमद् शब्दयोः पुंवद्रूपाणि । अप् शब्दः पान्तः नित्यं बहुवचनान्तः । तस्माज्जसि अप्तृन्तृच् . . . . इत्यादिना दीर्घः आपः । अपः ।

## ३७१. अपो भि ७-४-४८

अच उपसर्गात्तः इत्यतः त इत्यनुवर्तते । अङ्गस्येत्यधिक्रियते । अङ्गेन प्रत्ययस्याक्षेपः । प्रत्यये भिइति विशेषणम् । अपः तकारः अन्तादेशः स्यात् भादौ प्रत्यये परे । पकारस्य तकारे जश्त्वम् । अद्भिः । अद्भ्यः । प्रत्यये किम् अब्भक्षः । अपाम् । अप्सु । किम् शब्दः मान्तः स्त्रियाम् त्यदाद्यत्वे पररूपे टाप् सुलोपः का के काः । सर्ववत् ।

## ३७२. यः सौ ७-२-११०

इदमो मः इत्यतः इदम इति, दश्चेत्यतो द इति चानुवर्तते । इदमो दस्य यकारादेशः स्यात् सौ परे । अयमादेशः स्त्रियामेव प्रवर्तते न पुंसि इदोऽय् पुंसि इति विशिष्य विधानात्, नापि नपुंसके सोर्लुक्सत्वात् । इदम् शब्दात् सौ दस्य यत्वे, त्यदाद्यत्वं बाधित्वा इदमो मः इति मस्य मः । सुलोपः इयम् । औ प्रत्यये त्यदाद्यत्वं पररूपम् टाप् । दश्चेति दस्य मकारे औङ आप इति शीभावे गुणे च इमे । इमाः । इमाम् इमे इमाः । तृतीयैकवचने अत्वादिषु कृतेषु इद आ इति स्थिते अनाप्यकः इत्यनेन इद् इत्यस्य अन् आदेशे आङि चापः इत्येत्वम् अयादेशः अनया । अजादौ सर्वत्र इदः अन् आदेशः । हलादौ हलिलोपः इति इद् इत्यस्य लोपः । आभ्याम् । आभिः । अस्यै आभ्याम् आभ्यः । अस्याः अनयोः आसाम् । अस्याम् अनयोः आसु ।

अन्वादेशे तु द्वितीयाटौस्स्वेनः इति एनादेशे टापि च रमावद्रूपम् ? गिर् श
रेफान्तः तस्मात् सौ—

### ३७३. र्वोरुपधाया दीर्घ इकः ८–२–७६

र् च व् च र्वौ तयोः । सिपि धातो रुर्वा इत्यतो धातोरित्यनुवर्त
र्वोरिति तद्विशेषणम् । तदन्तविधिः । पदस्य अन्ते इत्यस्य च सम्ब
रेफवकारान्तस्य धातोः उपधायाः इकः दीर्घः स्यात् पदान्ते । सोर्लोपः, दी
रेफस्य विसर्गः गीः । गिरौ गिरः । गिरं गिरः । गिरा गीर्भ्याम् इत्या
पुर् शब्दः पूः पुरौ पुरः । पुरम् पुरौ पुरः । पुरा पूर्भ्याम् । धुर्
धुरौ धुरः इत्यादि । चतुर् शब्दस्य स्त्रियाम् चतुरनडुहोराम् इत्यामं बाधि
'त्रिचतुरोः स्त्रियाम् . . ' इति चतसृ आदेशः, यण् चतस्रः । चतस्
चतसृभिः । चतसृभ्यः । 'न तिसृ-चतसृ' इति दीर्घ निषेधः चतसृणा
दिव् वान्तः–तस्मात् सुः । दिव औत् इति वस्य औकारः इकारस्य
रुत्वविसर्गौ द्यौः । दिवौ दिवः दिवम् दिवा । भ्यामादौ हलि दिव
इति वस्य उत्वम् द्युभ्याम् द्युभिः इत्यादि । दिश् शान्तः–पदान्ते व्रश्चेति
जश्त्वेन डः । तस्य क्विन् प्रत्ययस्य कुः इति कुत्वम् । चर्त्वम् दिक् । दि
दिशः दिशम् दिशा दिग्भ्याम् । एवं दृश्-दृक् दृशौ दृशः इत्यादि । ि
षान्तः–त्विट् त्विषौ त्विषः त्विषा त्विड्भ्याम् । एवं प्रावृट् प्रावृषौ प्रा
इत्यादि । आशिष्–सस्थानिकः षकारः । तस्मात् सुः सोर्लोपः पत्व
सिद्धत्वात् पदान्ते ससजुषोरुरिति रुत्वे र्वोरुपधाया दीर्घ इति दीर्घः । आशीः आशि
आशिषः आशिषा आशीर्भ्याम् आशीर्भिः । सुपि रुत्वे दीर्घे रेफस्य विसर्गे वा
इति वैकल्पिकत्वात् पक्षे सत्वे ष्टुत्वम् आशीष्षु । पक्षे आशीः षु । सजुष्–ससजु
इति षस्य रुत्वम् । र्वोरुपधाया इति दीर्घः । सजूः सजुषौ सजुषः सजुषः स
सजूर्भ्याम् आशिष् शब्दवत् । अदस् सान्तः–सौ पुंवदेव रूपम् असौ ।
प्रत्यये त्यदाद्यत्वम्, पररूपम्, टाप् । औङः शी । गुणः अदसोसेर्दादु
इति उत्वमत्वे अमू । जसि पूर्वसवर्णदीर्घः अधिकः अमूः । अदन्तत्वाभा

जसः शी न भवति । अमूम् अमू अमूः । टायाम्-आङि-चापः एत्वम् अयादेशः अमुया । अमूभ्याम् अमूभिः । स्याड् ह्रस्वौ अमुष्यै । अमुष्याः अमुयोः अमूषाम् अमुष्याम् अमूषु ॥ उपानह् हकारान्तः—

### ३७४. नहो धः ८–२–३४

होढः इत्यतो ह इति झलो झलि इत्यतो झलि इति अनुवर्तते । पदस्य-अन्ते इत्यस्य सम्बन्धः । नहो हकारस्य धकारादेशः स्यात् झलि परे पदान्ते च । सोर्लोपः, हस्य धकारः जश्त्वचर्त्वे उपानत् उपानहौ उपानहः उपानहम् उपानहा उपानद्भ्याम् उपानद्भिः उपानत्सु । (सूत्राणि ३७४)

इति स्त्रीलिङ्ग प्रकरणम्

---

## अथ हलन्त नपुंसकलिङ्ग प्रकरणम्

असृज्शब्दो जान्तः नपुंसकलिङ्गः । तस्मात् सौ, स्वमोर्नपुंसकादिति तस्य लुकि चोः कुरिति कुत्वम् वावसाने चर्त्वम् असृक् । नपुंसकाच्चेति औ इत्यस्य शी भावः । असृजी । जश्शसोः शिः, झलन्तत्वात् नपुंसकस्य झलचः इति नुम्, नश्चेत्यनुस्वारः परसवर्णः असृञ्जि । असृक् असृजी असृञ्जि असृजा असृग्भ्यामित्यादि । उर्ज् इत्यस्य ऊर्क् ऊर्जी ऊर्न्जि इत्यादि । यकृत् शब्दः तान्तः यकृत् यकृती यकृन्ति यकृता यकृद्भ्याम् । एवं शकृत् शब्दः । ददत् शत्रन्तः—ददत् ददती । जश्शसोः शि भावे नाभ्यस्ताच्छतुरिति नित्यं नुम्-निषेधे प्राप्ते—

### ३७५. वा नपुंसकस्य ७–१–७९

नाभ्यस्ताच्छतुरिति सूत्रं नञ् नर्जमनुवर्तते । इदितो नुम् इत्यतो नुम् इति, उगिदचामित्यतः सर्वनामस्थाने इति चानुवर्तते । अभ्यस्तादङ्गादुत्तरो यः शतृ प्रत्ययः तदन्तस्य नपुंसकस्य वा नुमागमः स्यात् सर्वनामस्थाने परे । दधन्ति-दधति । जाग्रत् जाग्रती जाग्रन्ति जाग्रति । शविकरणः तुदत् शब्दः-तुदत् । औ प्रत्यये औङः शी ।

## ३७६. आच्छीनद्योर्नुम् ७-१-८०

वा इति अभ्यस्तात् शतुः इति वर्तते । अवर्णान्तादङ्गात् परः यः शतृ प्रत्ययः तदन्तस्याङ्गस्य वा नुमागमः स्यात् शीनद्योः परयोः । तुदन्ती-तुदती । आदिति किम्? कुर्वती । जश्शसोः शि भावे सर्वनामस्थानपरत्वात् नपुंसकस्येति नित्यं नुम् तुदन्ति । एवं नुदत् नुदन्ती-नुदती नुदन्ति । शप् विकरणः पचत् ।

## ३७७. शप् श्यनोर्नित्यम् ७-१-८२

आच्छीनद्योः, नुम्, इति शतुः, इति चानुवर्तते । शप् श्यनोः अवर्णात्परो यः शतृप्रत्ययः तदन्तस्य नित्यं नुमागमः स्यात्, शीनद्योः परयोः । पचन्ती । पचन्ति । एवं गच्छत् गच्छन्ती गच्छन्ति । दीव्यत् दीव्यन्ती दीव्यन्ति । तद् दकारान्तः-स्वमोर्लुक् । तेन अत्वादिकं न । तत् । औ प्रभृतिषु त्यदाद्यत्वं पररूपं च । तत्र नपुंसकाच्चेति शी भावः गुणः ते । जश्शसोः शिः । नुम् दीर्घः तानि । शेषं पुंवत् । एवम् एतद्-यद् इत्यादयः । ब्रह्मन्-स्वमोर्लुकि नलोपः प्रातिपदिकान्तस्येति नलोपः-ब्रह्म । औङः शी, अट्-कुप्वाङिति णत्वम् ब्रह्मणी । अत्र विभाषा ङिश्योः इति अल्लोपो न भवति न संयोगाद्वमन्तात् इति निषेधात् । ब्रह्माणि ।

### सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः (वा)

हे ब्रह्मन्-हे ब्रह्म । ब्रह्मणा ब्रह्मभ्याम् इत्यादि । एवं चर्मन्, वर्मन्, शर्मन् प्रभृतयः । अहन्-स्वमोर्लुकि प्रत्ययलक्षणाभावात् रोऽसुपीति नस्य रेफादेशः विसर्गः अहः । औङः शी, विभाषा ङिश्योः इति वा अल्लोपः अह्नी-अहनी । अहानि । अल्लोपोऽनः इत्यल्लोपे अह्ना । भ्यामादौ पदान्ते अहन् इति रुत्वम्, उत्वं, गुणः अहोभ्यां अहोभिः अह्ने अहोभ्याम् अहोभ्यः इत्यादि । अत्र रुत्वरत्वयोः असिद्धत्वात् नलोपो न भवति, रुत्वरत्वयोः नलोपापवादत्वस्य भाष्यासम्मतत्वात् । नामन्-नाम नाम्नी-नामनी नामानि । नाम्ना नामभ्याम् शेषं राजवत् । दण्डिन्-दण्डि दण्डिनी दण्डीनि । स्रग्वि स्रग्विणी स्रग्वीणि इत्यादि । एवं मनोहारिन् शब्दः । किम्-स्वमोर्लुक् अतो अत्वादिकं न

न लुमतेति प्रत्ययलक्षणनिषेधात् किमः कादेशोपि न । किम् । सोरमश्चान्यत्र कादेशः । के कानि । किम् के कानि । शेषं पुंवत् । इदम्–अत्रापि स्वमोर्लुक् । न लुमतेति निषेधात् इदमो मः दश्च इत्यादिविधयो न भवन्ति इदम् । औङि अत्वं पररूपम् दश्चेति मः नपुंसकाच्चेति शीभावः भवति इमे । इमानि । इदम् इमे इमानि । शेषं पुंवत् ।

## अन्वादेशे नपुंसके एनद् वक्तव्यः (वा)

इदमेतदोः नपुंसके एकवचने एनत् आदेशः स्यात् अन्वादेशे । अन्यत्र द्वितीयाटौस्स्वेनः इति एनादेशः । एनत् एने एनानि एतेनेत्यादि । वार् रेफान्तः–स्वमोर्लुकि रेफस्य विसर्गः । वाः वारी । अझलन्तत्वात् न नुम् वारी । वारा वार्भ्याम् इत्यादि । चतुर् शब्दस्य चत्वारि इत्यादि । अर्चिष् षान्तः–स्वमोर्लुकि षत्वस्यासिद्धत्वात् सस्य रुत्वे विसर्गः अर्चिः अर्चिषी । जश्शसोः झलन्तत्वान्नुमि सान्तेति दीर्घः । नश्चेत्यनुस्वारः अर्चींसि इति स्थिते—

## ३७८. नुम् विसर्जनीयशर्व्यवायेपि ८-३-५८

इण्कोः, मूर्धन्यः इत्यनुवर्तते । नुमा–विसर्जनीयेन-शर् वर्णेन च व्यवायेपि इण् कवर्गाभ्यां परस्य सकारस्य मूर्धन्यादेशः स्यात् । नुम् ग्रहणं नुम् स्थानिकानुस्वारोपलक्षणार्थम् । नुम्व्यवाये–हवींषि । सर्पींषि । धनूंषि । यजूंषि । विसर्जनीयव्यवाये–सर्पिःषु । हविःषु । धनुःषु । शर्व्यवाये–सर्पिष्षु । यजुष्षु । इति सस्य षत्वम् अर्चींषि । अर्चिषा । पदान्ते षत्वस्यासिद्धत्वात् सस्य रुत्वम् अर्चिर्भ्याम् इत्यादि । एवं हविः सर्पिः आयुः धनुः यजुः इत्यादि । पयस् सान्तः–पयः पयसी पयांसि । शेषं वेधश्शब्दवत् । एवं श्रेयस्, यशस्, लघीयस्, गरीयस्, महीयस् इत्यादयः । अदस्–लुका-लुप्तत्वात् त्यदाद्यत्वादिकं न । रुत्वविसर्गौ अदः । असेरित्युक्तेः न मुत्वम् । औङादौ अत्वादिकम् ऊत्वमत्वे अमू अमूनि । अदः अमू अमूनि शेषं पुंवत् ।

(सूत्राणि ३७८) इति नपुंसकलिङ्ग प्रकरणम्

---

# अथ अव्यय प्रकरणम्

## ३७९. स्वरादिनिपातमव्ययम् २-२-३७

स्वर आदिः येषां ते स्वरादयः ते च निपाताश्चेति समाहारद्वन्द्वः। स्वरादयो निपाताश्च अव्ययसंज्ञाः स्युः। यथा स्वर् अन्तर्, प्रातर् पुनर् इत्यादयः। च, वा, ह, एव, एवम् इत्यादयः। पञ्चम्यास्तसिल् इत्यारभ्य द्वित्र्योश्च धमुञ् इत्यन्ताः, बह्वल्पार्थाच्छस् इत्यारभ्य अव्यक्तानुकरणात् इति डाजन्ताः किमेत्तिङव्यय. इति आम् कृत्वोर्थाः तसिः वतिः नानाञौ इति तद्धिताः तदन्ताः अव्ययसंज्ञाः भवन्ति।

## ३८०. कृन्मेजन्तः २-२-३९

कृन् मेजन्तः इति छेदः। म् च एच मेचौ तौ अन्ते यस्येति बहुव्रीहिः मान्तः एजन्तश्च यः कृत् तदन्तमव्ययं स्यात्। स्मारं स्मारम्। जीवसे। पिबध्यै।

## ३८१. क्त्वातोसुन्कसुनः २-२-४०

क्त्वान्तं तो सुन्नन्तं कसुनन्तं च अव्ययं स्यात्। कृत्वा उदेतोः विसृपः।

## ३८२. अव्ययीभावश्च २-२-४२

अव्ययीभावसमासोपि अव्ययसंज्ञः स्यात्। अधिहरि। आमुक्ति।

## ३८३. अव्ययादाप्सुपः २-४-८२

आप् च सुप् च आप्सुप् समाहारः तस्य। ण्यक्षत्रियार्षञितो लुगित्यनुवर्तते अव्ययाद्विहितस्य आपः सुपश्च लुक् स्यात्। तत्र शालायाम्। तत्रेत्यस्माद्विहितस्य आपः लुक्। अथ अत्र सुपोलुक्। विहितस्येति किम्? अत्युच्चैसौ उच्चैरतिक्रान्त इति विग्रहे अत्यादयः क्रान्ताधर्थे द्वितीयया इति समासे समासाद्विहितस्य सुपः उच्चैस् इति अव्ययात्परत्वेपि अव्ययाद्विहितत्वाभावात् लुक् न भवति।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्॥ (सूत्राणि ३८३)

इति अव्यय प्रकरणम्

# अथ स्त्रीप्रत्यय प्रकरणम्

## ३८४. स्त्रियाम् ४-१-३

अधिकारसूत्रम् । समर्थानां प्रथमाद्वा इति यावत् अधिक्रियते ।

स्तनकेशवती स्त्री स्यात् लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥

इति लोकप्रसिद्धं लिङ्गं न व्याकरणे आश्रीयते । अचेतने खट्वामालादौ स्त्रीप्रत्ययानापत्तेः । दारानित्यादौ नत्वाभावप्रसङ्गात् । तटः तटी तटम् इत्यादौ यथायथं लिङ्गत्रितयनिबन्धनकार्याणाम् असिद्धिप्रसङ्गाच्च । किन्तु पारिभाषिकमेव लिङ्गत्रयम् । तच्च केवलान्वयि । अयमर्थः, इयं व्यक्तिः, इदं वस्तु, इति शब्दानां सर्वत्राप्रतिबद्धप्रसरत्वात् । तत्र कश्चित् शब्दः एकस्मिन् लिङ्गे शक्तः, कश्चित् द्वयोः कश्चित् त्रिषु इति लिङ्गानुशासनादिना व्यवस्था ज्ञेया । सति सम्भवे स्तन केशवती इत्यादि लौकिकं लिङ्गमपि आश्रीयते ।

## ३८५. ऋन्नेभ्यो ङीप् ४-२-५

ऋतश्चनश्चेति. द्वन्द्वः । प्रातिपदिकादित्यधिकृतम् । तत्र विशेषणात् तदन्तविधिः । स्त्रियामित्यधिकृतम् । ऋकारान्तेभ्यः नकारान्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीप् स्यात् । ङीपि ङपावितौ । ऋतः कर्त्री-क्रोष्ट्री । नकारान्तात्-दण्डिनी-छत्रिणी ।

## ३८६. उगितश्च ४-२-६

उक् इत् यस्य सः उगित् तस्मात् । उगिति प्रत्याहारः । उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययः स्यात् । प्रत्ययविधावपि तदन्तग्रहणमस्ति उगिद्ग्रहणवर्जम् इत्युक्तः । उगित् द्विविधं-प्रातिपदिकम् प्रत्ययश्च । प्रातिपदिकम् यथा-सर्वादिगणे पठितं 'भवतु' इति अव्युत्पन्नं प्रातिपदिकम् । तस्य व्यपदेशिवद्भावेन उगिदन्तत्वात् ङीप् भवति । भवती । अतिभवती । प्रत्ययो यथा-'शतृ' प्रत्ययः तदन्तात् ङीप् भवति । पचन्ती । यजन्ती । भवन्तीं इति उगित्प्रत्ययान्तस्य रूपम् । धातोरुगित्कार्यं तदन्तेरेति उगिदचामिति सूत्रे

नियमाश्रवणेन उखास्रत्, पर्णध्वत् इत्यादौ ङीप् न भवति। अञ्चतेर्भवत्येव प्राची। प्रतीची। उदीची।

### ३८७. वनोरच ४-२-७

वन् इति ङ्वनिप्-कनिप्-वनिप् प्रत्ययानां ग्रहणम्। प्रत्ययग्रहणात् तदन्तविधिः। वन्नन्त इत्यर्थः। प्रातिपदिकविशेषणतया तदन्तलाभः। वन्नन्तान्तात् वन्नन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययः स्यात्। रेफश्चान्तादेशः ङ्वनिप्-अतिसुत्वरी। सुत्वरी। क्वनिप् अतिधीवरी। धीवरी। अतिशर्वरी शर्वरी। परलोकदृश्वरी। पीवरी। यद्यपि वन्नन्तस्य नान्तत्वात् 'ऋन्नेभ्यो ङीप्' इत्येव ङीप् सिध्यति। तथापि ङीप्सन्नियोगेन रेफविधानार्थमिदं सूत्रम्

### वनो न हशः (वा)

हशन्ताद्धातोर्विहितो यो वन् तदन्तप्रातिपदिकात् ङीप् रश्च न स्तः अवावा। राजयुध्वा।

### बहुव्रीहौवा (वा)

वनोरचेति विहितौ ङीब्रौ बहुव्रीहौ वा स्तः। बहुधीवरी। बहुधीवा

### ३८८. पादोऽन्यतरस्याम् ४-२-८

पाद इति कृतसमासान्तः निर्दिश्यते। पादन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययो वा स्यात्। द्विपदी। द्विपात्। त्रिपदी। त्रिपात्। चतुष्पदी चतुष्पात्। यदा ङीप् तदा भत्वात् 'पादः पत्' इति पदादेशः।

### ३८९. टाबृचि ४-१-९

पाद इत्येव। ऋचि इति अभिधेयनिर्देशः। ऋचि वाच्यायां पादन्त प्रातिपदिकात् स्त्रियां टाप् प्रत्ययः स्यात्। ङीपोऽपवादः। द्विपदा ऋक् त्रिपदा चतुष्पदा ऋक्। ऋचीति किम्? द्विपदी कुक्कुटी।

### ३९०. न षट् स्वस्रादिभ्यः ४-१-१०

षट् इत्यनेन षट्संज्ञका गृह्यन्ते। षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च प्रातिपदिकेभ्यः ङीप्-टापौ न स्तः। स्वस्रादीनां ङीप् प्राप्तः। षट्संज्ञकानां तु ङीप्

टापावुभौ प्राप्तौ । पञ्च ब्राह्मण्यः । सप्त लताः । नव-दश घण्टाः । स्वसा, दुहिता ननान्दा माता । तिस्रः । चतस्रः ।

### ३९१. मनः ४-२-२२

नेति ङीप् इति चानुवर्तते । मन्नन्तात् प्रातिपदिकात् ङीप् न स्यात् । दामा । दामानौ । पामा । पामानौ । सीमा । सीमानौ । महिमानमतिक्रान्ता अतिमहिमा । सीमन् शब्दः अव्युत्पन्नं प्रातिपदिकम् । तत्र मन् अनर्थः । एवं महिमन् शब्दे इमनिच् प्रत्ययः, तस्यैवार्थवत्वम् । एकदेशः सन् अनर्थः । अर्थवद्ग्रहणपरिभाषया अर्थवतो मनः ग्रहणात् अत्र कथं प्रतिषेधः ? इति चेत् ।

**अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति (प)**

अन्-इन्-अस्-मन् इत्येतेषां ग्रहणे अर्थवत्परिभाषा न व्याप्रियते । तेन एषामनर्थकानामपि ग्रहणं भवति ।

### ३९२. अनो बहुव्रीहेः ४-२-२२

नेति ङीबिति च वर्तते । अन्नन्तात् बहुव्रीहेः ङीप् न स्यात् । बहुयज्वा बहुयज्वानौ । सुपर्वा । सुपर्वाणौ । सुचर्मा । सुचर्माणौ । बहुव्रीहेरिति किम् ? अतिक्रान्ता राजानम् । अतिराज्ञी ।

### ३९३. डाबुभाभ्यामन्यतरस्याम् ४-२-२३

उभाभ्यां ग्रहणेन मनः अनो बहुव्रीहेः इति सूत्रद्वयोपात्तयोः मन्नन्तस्य, अन्नन्तबहुव्रीहेश्च ग्रहणम् । मन्नन्तात् प्रातिपदिकात्, अन्नन्ताद्बहुव्रीहेश्च डाप् प्रत्ययो वा स्यात् । मनः—पामा । पामे । सीमा सीमे । अन्नन्तात् बहुव्रीहेः-बहुराजा बहुराजे । बहुयज्वा । बहुयज्वे । डापि डाबभावे च एकवचने नास्ति रूपे भेदः । डाबभावे ङीप् निषेधात् पामा सीमा बहुयज्वा इत्येव रूपसिद्धेः । द्विवचने अस्ति भेदः । डापि सति आकारान्तत्वेन पामे सीमे बहुयज्वे इति भवति । डाबभावे तु पामानौ । सीमानौ । बहुयज्वानौ इति भवति ।

## ३९४. अन उपधालोपिनोऽन्यतरस्याम् ४–१–२८

बहुव्रीहेरूधसः इत्यतः बहुव्रीहेरिति, सङ्ख्याव्ययादेर्ङीप् इत्यतः ङीप् इति च अनुवर्तते। अन्नन्तात् उपधालोपिनो बहुव्रीहेः प्रातिपदिकात् वा ङीप् प्रत्ययः स्यात्। अनेन सूत्रेण उपधालोपिनोऽन्नन्तात् विकल्पेन ङीपो विधानात् अनो बहुव्रीहेरिति अनुपधालोपिनि बहुव्रीहौ प्रवर्तते इति मन्तव्यम्। बहुराज्ञी। बहुतक्ष्णी ङीबभावपक्षे डाबुभाभ्याम् इति डाप्। बहुराजा। बहुराजे। बहुतक्षा। बहुतक्षे। अत इति किम्? बहुमत्स्या। उपधालोपिनः किम्? सुपर्वा।

## ३९५. अनुपसर्जनात् ४–१–१४

अधिकारोऽयम्। यूनस्तिः इति सूत्रमभिव्याप्य। तेन इत ऊर्ध्वं यद्विधीयते तदुपसर्जनान्न भवति। समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात् उपसर्जनेषु स्त्रीप्रत्यय प्रसक्तेरभावात् अनुपसर्जनाधिकारः किमर्थ इति चेत्? अयमधिकार एव स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापयति। तेन वनोरचेत्यादौ वन्नन्तान्ता-त्प्रातिपदिकादित्यर्थः सिध्यति। तदन्ताधिकारे वर्तमाने अविशेषात् उपसर्जनेऽपि प्राप्नोति तद्वारणायानुपसर्जनाधिकारः आवश्यकः।

## ३९६. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्त-यप्ठक्ठञ्कञ्क्वरपः ४–१–१५

अनुपसर्जनादिति वर्तते। टित्-ढ-अण्-अञ्-द्वयसच्-दघ्नच्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरप् एषां द्वादशानां समाहारद्वन्द्वः। ढादयः प्रत्ययाः। प्रत्ययग्रहणपरिभाषया तदन्तलाभः। टित्तु प्रत्ययः अप्रत्ययश्च। अतो न तदन्तग्रहणम्। टिदादि प्रातिपदिकात् इत्यत्र विशेषणम्। तेन तदन्तलाभः। अत इत्यनुवर्तते। तस्यापि प्रातिपदिकादित्यत्रैवान्वयात् तदन्तविधिः। अनुपसर्जनादित्यस्य श्रुतेषु टिदादिष्वेवान्वयः न तु अनुमितेषु तदन्तेषु। 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायात्। अनुपसर्जनं यट्टित् तदन्तात् ढाणञादिप्रत्ययान्तं च तदन्तात् अकारान्तात् प्रातिपदिकात् स्त्रियां ङीप्

प्रत्ययः स्यात्। टित् त्रिविधः-प्रत्ययः, प्रातिपदिकम्, धातुश्च। टितः प्रत्ययस्य-कुरुषु चरतीत्यर्थे अधिकरणे उपपदे 'चरेष्टः' इति टः प्रत्ययः। टिदन्तं अदन्तं च प्रातिपदिकं 'कुरुचर' इति ततो ङीप्। कुरुचरी। एवं मद्रचरी। उपसर्जनत्वात् नेह बहुकुरुचरा। टितः प्रातिपदिकस्य-नदट्-नदी। उपसर्जनत्वान्नेह-विविधनदा वनस्थली। टितो धातोः-स्तनन्धयी। पचमाना यजमाना इत्यादौ लटः शानजादेशे स्थानिवत्त्वेन टित्वेऽपि ङीप् न भवति। 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया द्व्यनुबन्धकस्य लटः ग्रहणाभावात्। द्व्यनुबन्धकत्वेऽपि ल्युटः टित्करणसामर्थ्यात् ग्रहणमिष्यते। तेन करणी इत्यत्र ङीप् सिध्यति। लटि तु टित्वसामर्थ्यं न, 'टित आत्मनेपदानां टेरे' इत्येवमर्थमावश्यकत्वात्। ढ-सौपर्णेयी। वैनतेयी। सुपर्णीविनताशब्दाभ्यां स्त्रीभ्यो ढक् इति ढक् प्रत्ययः। तस्य एयादेशः जातः। सौपर्णेयवैनतेय शब्दौ ढान्तौ। ततो ङीप्। ननु 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया ढ प्रत्ययस्यैव ग्रहणं युक्तम्, न ढकः इति चेत्? निरनुबन्धकस्य ढ प्रत्ययस्य स्त्रियामसत्वात् निरनुबन्धकपरिभाषा नेह प्रवर्तते। अण्-कुम्भकारी। नगरकारी। कर्मण्यण् इति अणि कार इति अणन्तः। औपगवी। उपगोरपत्यमित्यर्थे तस्यापत्यमित्यण् इति औपगव शब्दः अणन्तः। णप्रत्ययेऽपि क्वचिदण् कृतं कार्यं भवति। चौरी तापसी। छत्रादिभ्योऽणः इति शीलार्थे ण प्रत्ययः इति चौरतापसशब्दौ णान्तौ। अञ्-औत्सी उत्सादिभ्योऽञ् इति भावार्थे अञ् प्रत्ययः इति अञन्तः औत्सशब्दः। द्वयसच्-ऊरुद्वयसी। जानुद्वयसी। दघ्नच्-ऊरुदघ्नी। जानुदघ्नी मात्रच्-ऊरुमात्री। जानुमात्री। ऊरुप्रमाणम्, जानूप्रमाणम् अस्याः इत्यर्थे प्रमाणे द्वयसज्दघ्नञ्मात्रचः इति द्वयसच्-दघ्नच्-मात्रच् प्रत्ययाः भवन्ति। तयप्-पञ्चतयी। दशतयी। पञ्च-दश-अवयवा यस्या इत्यर्थे सङ्ख्याया अवयवे तयप् इति तयप् प्रत्ययः। ठक्-आक्षिकी। शालाकिकी। अक्षैः शलाकैः दीव्यति इत्यर्थे तेन दीव्यति खनतिजयतिजितमिति ठक् प्रत्ययः तस्येकादेशः। आक्षिक-शालाकिकौ

ठगन्तौ । ठञ्—लावणिकी । लवणं पण्यमस्याः लवणाट्ठञ् इति ठञ् प्रत्ययः । तस्येकादेशः । ठञन्तः लावणिकशब्दः । अत्र ठ इति दक्तव्ये ठक् ठञोः पृथग्ग्रहणं ठनो ञिठस्य च व्यावृत्यर्थम् । तेन दण्डिका-काशिका इत्यत्र ठनन्तात् ञिगन्ताच्च न भवति ङीप् । कञ्—यादृशी-तादृशीत्यादिषु दृशः इति कञ् प्रत्ययः । क्वरप्—इत्वरी नश्वरी इण्-नशिजिसर्तिभ्यः क्वरप् इति क्वरप् प्रत्ययः ।

नञ्स्नञीकक्ख्युन्स्तरुणतलुनानामुपसंख्यानम् (वा)

नञ्-स्नञ्-ईकक्-ख्युन् इति प्रत्ययान्तेभ्यः, तरुण तलुन इति प्रातिपदिकाभ्यामपि ङीप् भवति इति वक्तव्यम् । स्त्रैणी पौंस्नी । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् इति स्त्रीशब्दात् पुंशब्दाच्च क्रमेण नञ्-स्नञ् प्रत्ययौ । स्त्रैण-पौंस्नशब्दौ नञन्तस्नञन्तौ । शाक्तीकी । याष्टीकी । शक्तियष्ट्योरीकक् इति ईकक् प्रत्ययः । आढ्यङ्करणी । सुभगङ्करणी । अनाढ्यः आढ्यः क्रियते । असुभगः सुभगः क्रियते अनयेत्यर्थे । आढ्यसुभग इत्यादिना ख्युन् प्रत्ययः, तस्यानादेशः । आढ्यकरणसुभगङ्करणशब्दौ ख्युनन्तौ । तरुणी, तलुनी ।

## ३९७. यञश्च ४-१-१६

यञन्तात् प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययः स्यात् गार्गी, वात्सी । गर्गवत्सशब्दाभ्यां अपत्यं स्त्री इत्यर्थे गर्गादिभ्यो यञ् इति यञ् प्रत्ययः । गार्ग्य-वात्स्यशब्दौ यञन्तौ । ततो ङीप् । अपत्याधिकारस्य यञेव इष्यते । तेन द्वीपे भव इत्यर्थे दीपादनुसमुद्रं यञ् इति विहितस्य यञोऽग्रहणात् द्वैप्या इत्यत्र न । एवं देवस्यापत्यमित्यर्थे देवाद्यञञौ इति विहितस्यापि यञो ग्रहणाभावात् दैव्या इत्यत्रापि न भवति ।

## ३९८. हलस्तद्धितस्य ६-४-१५०

यस्येति चेत्यतो इति, सूर्यतिष्यागस्त्य इत्यतः उपधायाः, यः, ढे लोपः इन्यतो लोपः इति च अनुवर्तते । हलः परस्य उपधाभूतस्य तद्धितयकारस्य लोपः स्यात् ईकारे परे । गार्ग्य ई वात्स्य ई इत्यत्र यस्येति चेत्यकारस्य लोपे

सति अनेन यस्य लोपः । गार्गी वात्सी ।

३९९. प्राचां ष्फ तद्धितः ४-१-१७

यञ इत्यनुवर्तते । यञन्तात् प्रातिपदिकात् स्त्रियां ष्फ प्रत्ययः स्यात् प्राचामाचार्याणाम् मते । स च तद्धितसंज्ञः । ष्फ प्रत्यये षकारो ङीषर्थः । तद्धितसंज्ञा च प्रातिपदिकसंज्ञार्थम् ।

४००. आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७-१-२

प्रत्ययादिभूतानां फ-ढ-ख-छ-घानां क्रमात् आयन्, एय्, ईन्, ईय्, इय् आदेशाः स्युः । गर्गस्यापत्यं स्त्री इत्यर्थे गर्गादिभ्यो यञ् इति यञ् प्रत्यये गार्ग्यशब्दात् ष्फ प्रत्यये, षस्य षः प्रत्ययस्य, इति इत्संज्ञायां फस्य आयन्नादेशः । गार्ग्यायनशब्दात् पुनः षित्करणसामर्थ्यात् वक्ष्यमाणेन षिद्गौरादिभ्यश्चेति सूत्रेण ङीष् भवति । गार्ग्यायणी । एवं वात्स्यायनी ।

४०१. वयसि प्रथमे ४-१-२०

प्राणिनां कालकृतावस्थाविशेषो यौवनादिः वयः । अजाद्यतः इत्यमः अत इत्यनुवर्तते । प्रथमे वयसि वर्तमानात् अदन्तात्प्रातिपदिकात् स्त्रियां ङीप् प्रत्ययः स्यात् । अर्थप्रकरणादिकमनपेक्ष्य श्रवणमात्रेण यत् वयः प्रतिपादयति तत् प्रातिपदिकमिह विवक्षितम् । कुमारी । किशोरी । बर्करी । वधूटी । चिरण्टी । प्रथमे इति किम् ? वृद्धा । स्थविरा । अत इत्येव, शिशुः । कथं कन्या इति ? कन्यायाः कनीनचेति सूत्रे कन्याया इति निर्देशात् ज्ञापकात् । कन्याशब्दस्य ङीप् न भवतीति बोध्यम् ।

४०२. द्विगोः ४-१-२१

द्विगुसंज्ञकात् अदन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् । त्रिलोकी । पञ्चफली । दशपूली । त्रिफला त्र्यनीका इत्यत्र तु अजादिगणपठितत्वात् वक्ष्यमाणेन अजाद्यतष्टाबित्यनेन ङीषपवादः टाप् ।

४०३. पुरुषात्प्रमाणेन्यतरस्याम् ४-१-२४

द्विगोरिति तद्धितलुकि इति चानुवर्तते । प्रमाणार्थे यः पुरुषशब्दः

तदन्तात् द्विगोः ङीप् वा स्यात् तद्धितलुकि । द्वौ पुरुषौ प्रमाणमस्याः परिखायाः सा द्विपुरुषी-द्विपुरुषा त्रिपुरुषी-त्रिपुरुषा । पञ्चहस्तायामः पुरुष इत्युच्यते। तद्धितार्थोत्तरपदेति समासः प्रमाणार्थे विहितस्य मात्रच् इति तद्धितप्रत्ययस्य च लुक् जातः ।

### ४०४. बहुव्रीहेरूधसो ङीष् ४-२-२५

ऊधः शब्दान्तात् बहुव्रीहेः स्त्रियां ङीष् स्यात् । कुण्डोध्नी । घटोध्नी । कुण्डमिवोधो यस्याः सा । ऊधसोनङ् इति समासान्ते अनङि कृते, डाबुभ्यामिति डापि प्राप्ते, अन उपधालोपिन इति वा ङीपि प्राप्ते, ऋन्नेभ्यो इति प्राप्तस्य ङीपः अनो बहुव्रीहेरिति निषेधे च प्राप्ते अनेन ङीष् विधीयते । ङीप्ङीषोः रूपभेदाभावेऽपि स्वरे विशेषः । ङीषि अल्लोपोऽनः इत्यल्लोपो भवति । बहुव्रीहेरिति किम् ? प्राप्तः ऊधः=प्राप्तोधाः । प्राप्तापन्ने च द्वितीयया इति तत्पुरुषः । इह न भवति ।

### ४०५. दामहायनान्ताच्च ४-२-२७

संख्यादेरिति ङीप् इति च वर्तते । बहुव्रीहेः इत्यस्यानुवृत्तिः । संख्यादेः दामशब्दान्तात् हायनशब्दान्ताच्च बहुव्रीहेः स्त्रियां ङीप् स्यात् । द्विदाम्नी । त्रिदाम्नी । द्विहायनी । त्रिहायनी । वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते । त्रिहायणी-चतुर्हायणी । वयोवाचकत्वाभावे द्विहायना त्रिहायना शाला ।

### ४०६. अन्तर्वत्पतिवतोर्नुक् ४-२-३२

गर्भिण्यां जीवद्भर्तृकायां च अन्तर्वत्-पतिवत्शब्दौ निपात्येते । ताभ्यां स्त्रियां नुगागमः स्यात् । नान्तत्वात् ऋन्नेभ्यो ङीप् इति ङीप् भवति । अन्तर्वत्नी=गर्भिणी, पतिवत्नी=जीवपतिः । जीवद्भर्तृकायामेवेति उक्तेः पतिमती पृथिवी इत्येव ।

### ४०७. पत्युर्नो यज्ञसंयोगे ४-२-३३

यज्ञेन सह फलभागितया सम्बन्धे पतिशब्दस्य स्त्रियां नकारादेशः स्यात् । नान्तत्वात् ऋन्नेभ्यो इति ङीप् । वसिष्ठस्य पत्नी । दम्पत्योः सहाधिकारात् ।

स्त्रियाः फलभोक्तृत्वमुपपद्यते । यज्ञसंयोगे इति किम् ? ग्रामस्य पतिः इयं ब्राह्मणी । कथं वृषलस्य पत्नी इति ? वृषलस्य यज्ञेऽनधिकारात् तद्भार्यायाः यज्ञसंयोगाभावात् इति चेत् ? औपचारिकः प्रयोगः । पाणिग्रहण धर्मपुरस्कारे उपमानात् भवति ।

## ४०८. विभाषा सपूर्वस्य ४-२-३४

पत्युर्न इति वर्तते । यज्ञसंयोगे इत्यस्य नेह सम्बन्धः । सपूर्वस्य पतिशब्दान्तस्य अनुपसर्जनस्य प्रातिपदिकस्य स्त्रियां वा नकारादेशः स्यात् । गृहपत्नी-गृहपतिः । वृद्धपत्नी-वृद्धपतिः । स्थूलपत्नी-स्थूलपतिः । सपूर्वस्येति किम् ? पतिरियं ब्राह्मणी ग्रामस्य । अत्राधिकृतम् अनुपसर्जनात् इत्येतत् पतिशब्दान्ते विशेषणम् सपूर्वस्येति श्रुतत्वात् । तेन दृढः पतिः यस्याः सा इति बहुव्रीहावपि भवति : दृढपत्नी-दृढपतिः । एवं वृषलपत्नी-वृषलपतिः । पतिशब्दान्तस्यानुपसर्जनत्वात् ।

## ४०९. नित्यं सपत्न्यादिषु ४-२-३५

सपत्न्यादिष्विति विषयसप्तमी । सपत्न्यादिविषये इत्यर्थः । सपत्न्यादि-रूपसिध्यर्थं पतिशब्दस्य नित्यं नकारादेशः स्यात् । पूर्वविकल्पापवादः । समानः पतिः यस्याः सा सपत्नी । समानशब्दस्य सभावोपि निपातितः । इह गणे समान-एक-वीर-भ्रातृ-पुत्र इति पठिताः । एकपत्नी । वीरपत्नी । भ्रातृपत्नी । पुत्रपत्नी ।

## ४१०. वर्णादनुदात्तात्तोपधात्तो नः ४-२-३९

वेति ङाबिति चानुवर्तते । तः उपधा यस्य तस्मात् वर्णादित्यत्र वर्ण इति शब्दः न विवक्षितः । तस्य तोपधत्वासम्भवात्, किन्तु वर्णवाची । अनुदात्तान्तात् वर्णवाचिनः तकारोपधात् अनुपसर्जनात् अकारान्तात् प्रातिपदिकात् वा ङीप् प्रत्ययः स्यात् । तकारस्य नकारादेशश्च । एनी । पक्षे टाप्-एता । एतशब्दः श्वेतवर्णवाची अनुदात्तान्तः । रोहिणी-रोहिता । हरिणी-हरिता । श्येनी-श्येता । वर्णादिति किम् ? प्रकृता । अनुदात्तादिति किम् ? श्वेता ।

तोपधादिति किम् ? शबली । अत्र ङीष् न तु ङीप् । स्वरे विशेषः। अत इति किम् : धवलार्थकः शिति शब्दः तस्मात् ङीपेव ।

**असितपलितयोर्न (वा)**

असितपलितशब्दयोः ङीप् नत्वं च न स्तः । असिता । पलिता । अवदातशब्दस्य विशुद्धवाचित्वात् वर्णवाचित्वाभावात् ङीब्नत्वे न । अवदाता इत्येव।

## ४११. अन्यतो ङीष् ४-१-४०

वर्णादनुदात्तात् इति वर्तते । तोपधापेक्षमन्यत्वम् । तोपधभिन्नात् वर्णवाचिनः अनुदात्तान्तात् स्त्रियां ङीष् स्यात् । कल्माषी । सारङ्गी। शबली । पिशङ्गी । अनुदात्तान्तात् इति किम् ? कृष्णा । कपिला ।

## ४१२. षिद्गौरादिभ्यश्च ४-२-४२

षिद्भ्यः गौरादिभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययः स्यात्। ष्वुनन्ताः नर्तक-खनक-रजकशब्दाः । नर्तकी । खनकी । रजकी । गौरी। शृङ्गी । हयी । शुनी । अनडुही । अनड्वाही । मत्सी । पिप्पली। हरीतकी । कोशातकी । पृथिवी । मातामही । पितामही । मत्स्यशब्दात् ङीषि सूर्यतिष्येत्यादिसूत्रेण यलोपो भवति ।

## ४१३. जानपद-कुण्ड-गोण-स्थल-भाज-नाग-काल-नील-कुश-कामुक-कबरात् वृत्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकार मैथुनेच्छा केशवेशेषु । ४-२-४२

जानपदादिभ्यः एकादशभ्यः प्रातिपदिकेभ्यः क्रमात् एकादशसु वृत्यादिषु अर्थेषु गम्येषु ङीष् प्रत्ययः स्यात् ।

| वृत्यादिषु अर्थेषु | अन्यार्थे |
|---|---|
| जानपदी वृत्तिः जीविका | जानपदी अत्र ङीप् रूपसाम्येऽपि स्वरे भेदः । |
| कुण्डी—अमत्रम् (पात्रम्) | कुण्डा दहनीया |
| गोणी—आवपनम् (धान्यकोशः) | गोणा (काचित्) |

| वृत्यादिषु अर्थेषु | अन्यार्थे |
|---|---|
| स्थली—अकृत्रिमा (अपरिष्कृता) भूः | स्थला परिष्कृता |
| भाजी श्राणा (उष्णिकीयवागूः) | भाजा सेव्या |
| नागी—स्थूला | नागा |
| गजवाची नागशब्दः तत्सहचरितं स्थौल्यमुपादाय स्त्र्यन्तरे प्रयुक्तः उदाहरणम्। | रूपवाची नागशब्दः सर्पे दृष्टं दैर्घ्यमुपादाय स्त्र्यन्तरे प्रयुक्तः उदाहरणम्। |
| काली वर्णः | काला क्रौर्ययुक्ता |
| नीली अनाच्छादनम् | नीला नील्या रञ्जिता शाटी |
| अनाच्छादनेऽपि न सर्वत्र किन्तु ओषधौ प्राणिनि च संज्ञायां नीली-नीला उभयमपि | |
| कुशी—अयोविकारः | कुशा काष्ठमयी |
| कामुकी—मैथुनेच्छावती | कामुका धनादीच्छावती |
| कबरी—केशसंनिवेशः | कबरा चित्रा |

### ४१४. शोणात्प्राचाम् ४-२-४३

शोणशब्दात् प्राचां मते स्त्रियां ङीष् स्यात्। शोणी—शोणा वडवा।

### ४१५. वोतो गुणवचनात् ४-२-४४

वा उत इति च्छेदः। गुणमुक्तवान् गुणवचनः। यः प्राक् गुणमभिधाय पश्चात् तद्वद्द्रव्यमभिधत्ते सः गृह्यते। गुणवाचिनः उदन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् स्यात् मृद्वी-मृदुः। पट्वी-पटुः। मृदुपटुशब्दौ मृदुत्वं पटुत्वं च गुणमभिधाय तद्वति द्रव्ये वर्तते। अत इति किम्? शुचिः। गुणवचनादिति किम्? आखुः।

### ४१६. खरु-संयोगोपधात् प्रतिषेधः (वा)

खरु शब्दात्, संयोगोपधाच्च ङीष् न स्यात्। खरुः—पतिलाभो-

त्कण्ठावती । पाण्डुः ।

४१७. बह्वादिभ्यश्च ४-२-४५

बहु इत्येवमादिभ्यः प्रातिपदिकेभ्यः स्त्रियां वा ङीष् स्यात् । बह्वी-बहुः । शक्ती-शक्तिः । गती गतिः । पद्धती-पद्धतिः ।

सर्वतोऽक्तिन्नर्थात् (वा)

अक्तिन्नर्थात् सर्वतः ईकारान्तात् ङीष् स्यात् । रात्री-रात्रिः । शकटी-शकटिः । अक्तिन्नर्थात् किम् ? अजननिः ।

४१८. पुंयोगादाख्यायाम् ४-२-४८

पुंसा योगः पुंयोगः । आख्येति वाचकः शब्दो विवक्षितः । प्रत्यासत्या पुंसः वाचकः । आख्यायामिति पञ्चम्यर्थे सप्तमी । प्राक् पुंसो वाचकात् पश्चात् पुंयोगाद्धेतोः स्त्रियां वर्तमानात् प्रातिपदिकात् ङीष् प्रत्ययः स्यात् । पुंसि प्रसिद्धात् पुंयोगमाश्रित्य स्त्रियां वर्तमानात् प्रातिपदिकात् ङीष् भवति इति भावः । गोपस्य स्त्री गोपी । गणकस्य स्त्री गणकी । शूद्रस्य स्त्री शूद्री । पुंयोगादिति किम् ? देवदत्ता । अत्र देवदत्तसंज्ञकपुरुषसंयोगात् स्त्रियां न वर्तते किन्तु स्वत एव । कस्याश्चित् संज्ञा । आख्याग्रहणं किम् ? प्रसूता । जात-प्रसवार्थकोऽयं शब्दः पुंयोगनिमित्तकः तथापि पुंसि न प्रसिद्धः । अतो न ङीष् । जायापतिरूपः एव पुंयोग विवक्षितः । तेन केकयस्य देवकस्य दुहिता केकयी-देवकी इत्यादौ नानेन ङीष् । किन्तु गौरादिभ्यश्चेति सूत्रेण, तेन गोपस्य माता गोपा इत्येव न तु गोपी ।

पालकान्तान्न (वा)

पालकशब्दान्तात् प्रातिपदिकात्तु पुंयोगादाख्यायामिति ङीष् न स्यात् । गोपालस्य स्त्री गोपालिका । अश्वपालिका इत्येव ।

सूर्याद्देवतायां चाप् (वा)

देवताभूतायां स्त्रियां पुंयोगाद्वर्तमानात् सूर्यशब्दात् चाप् प्रत्ययः स्यात् । सूर्यस्य स्त्री देवता सूर्या । देवतायामिति किम् ? सूरी-मानुषी ।

## ४१९. इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४–२–४९

इन्द्रादिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीष् प्रत्ययः स्यात् आनुगागमश्च । इन्द्र-वरुण-भव-शर्व-रुद्र-मृड इति षण्णां शब्दानां मातुल-आचार्यशब्दयोश्च पुंयोगे एवं ङीषिष्यते। तत्र पुंयोगादाख्यायामित्यनेनैव ङीष्, अनेन सूत्रेण आनुगागमः केवलं भवति । इतरेषां तु ङीष् नुगागमौ द्वावपि अनेनैव भवतः । इन्द्राणी, वरुणानी । भवानी । शर्वाणी । रुद्राणी, मृडानी । हिमारण्ययोर्महत्वे, यवाद्दोषे, यवनाल्लिप्यामिष्यते । महद्धिमं हिमानी । महदरण्यम् अरण्यानी । दुष्टो यवो यवानी । यवनानां लिपिः यवनानी ।

### मातुलोपाध्याययोरानुग्वा (वा)

मातुलानी-मातुली । उपाध्यायानी-उपाध्यायी । मातुलशब्दस्य प्राप्तः उपाध्यायशब्दस्य तु अप्राप्तः आनुक् विकल्पेन विहितः ।

### स्वयमध्यापिकायां वा ङीष् (वा)

उपाध्यायशब्दात् पुंयोगाभावेऽपि विकल्पेन ङीष् प्रत्ययः स्यात् । उपाध्यायी-उपाध्याया । आचार्यानी । 'क्षुभ्नादिषु च' इति णत्व निषेधः । पुंयोगाभावे आचार्या ।

### अर्यक्षत्रियाभ्यां वा स्वार्थे (वा)

अर्यक्षत्रियशब्दाभ्यां पुंयोगाभावेऽपि स्वार्थे ङीषानुकौ वा स्तः । अर्याणी-अर्या । क्षत्रियाणी-क्षत्रिया । पुंयोगे तु अर्यी-क्षत्रियी इति । ननु इन्द्रवरुणेत्यादिसूत्रे ब्रह्मशब्दस्यापाठात् ब्रह्मणः स्त्री ब्रह्माणी इति कथमिति चेत् ? ब्रह्मणः स्त्री इत्यर्थः न दिवक्षितः किन्तु ब्रह्माणम् आनयति इत्यर्थे कर्मण्यण् इति अणि अणन्तत्वात् टिड्ढाणञ् इति ङीप् ।

## ४२०. क्रीतात्करणपूर्वात् ४–२–५०

करणं पूर्वं यस्मिन्निति विग्रहः । करणपूर्वात् क्रीतान्तात् प्रातिपदिकात् स्त्रियां ङीष् स्यात् । वस्त्रेण क्रीता-वस्त्रक्रीती । वसनक्रीती । करणपूर्वादिति

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri



किम् ? अश्वेन क्रीता, गवा क्रीता इत्यादि विग्रहे मा भूत् । सुक्रीता । दुष्क्रीता इहापि करणपूर्वत्वं नास्ति । अतो न ङीष् । अयं ङीष् क्वचिन्न भवति । धनक्रीता । पाणिगृहिती भार्यायाम् विधिवदूढायां विद्यमानात् पाणिगृहीतशब्दात् ङीष् स्यात् । पाणिगृहीती भार्या । न दास्यादिः । किन्तु पाणिगृहीता ।

## ४२१. स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४-१-५४

अस्वाङ्गपूर्वपदाद्वा इत्यतो वा इत्यनुवर्तते । उपसर्जनादिति, असंयोगोपधादिति च स्वाङ्गादित्यत्रान्वेति । स्वाङ्गादिति अनुवृत्तम् अत इति च प्रातिपतिकात् इत्यस्य विशेषणम् । उपसर्जनम् असंयोगोपधं च यत्स्वाङ्गं तदन्तात् अकाराच्च प्रातिपदिकात् वा स्त्रियां ङीष् स्यात् । चन्द्रमुखी चन्द्रमुखा । केशानतिक्रान्ता माला-अतिकेशी-अतिकेशा । स्वाङ्गादिति किम् ? बहुयवा उपसर्जनादिति किम् ? शिखा । असंयोगोपधादिति किम् ? सुगुल्फा । स्वाङ्गलक्षणमेवमुक्तम्—अद्रवं मूर्तिमत् स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च, तेन चेत्तत्तथायुतम् । अस्यार्थः—न विद्यते द्रवो यस्य तत् अद्रवम् । मूर्तिः—अवयवसंयोगः अस्यास्तीति मूर्तिमत् । प्राणिस्थम्=प्राणवति जन्तौ विद्यमानम् । अविकारजम्=रोगादिविकाराजन्यम् च यत् तत् एकं स्वाङ्गम् । अतत्स्थम्-अप्राणिस्थमपि प्राणिनि दृष्टं यत् तदपि स्वाङ्गम् । इदानीम् प्राणिस्थत्वाभावेऽपि कदाचित् प्राणिस्थत्वेऽपि स्वाङ्गं भवतीत्यर्थः इदं द्वितीयम् । तेन चेत्यादि अप्राणिद्रव्यं प्रतिमादि, प्राणिस्थेन स्तनाद्यवयवविशेषेण, युतं यदि तदपि स्वाङ्गम् । इदं तृतीयम् । एवं त्रिविधं स्वाङ्गलक्षणम् । सुस्वेदा । सुज्ञाना । सुमुखा । सुशोफा । क्रमेण द्रवत्वात्, अमूर्तत्वात्, अप्राणिस्थत्वात्, विकारजत्वाच्च न स्वाङ्गम् । अतः एभ्यः न ङीष् । सुकेशी-सुकेशा वा रथ्या । केशानां रथ्यास्थत्वेन इदानीं प्राणिस्थत्वाभावेऽपि कदाचित् प्राणिस्थत्वात् स्वाङ्गत्वमिति वा ङीष् । सुस्तनी-सुस्तना वा प्रतिमा । प्राणिवत् प्राणिसदृशप्रतिमायां दृष्टत्वात् स्वाङ्गत्वमिति वा ङीष् भवति ।

### ४२२. न क्रोडादिबह्वचः ४-२-५६

स्वाङ्गादिति प्राप्तो ङीष् प्रतिषिध्यते। क्रोडाद्यन्तात्, बह्वजन्ताच्च प्रातिपदिकात् स्त्रियां ङीष् न स्यात्। क्रोडान्तात्—कल्याणक्रोडा। कल्याणखुरा। कल्याणशफा। कल्याणवाला। कल्याणघोणा। सुभगा॥ सुगला। बह्वचः सुजघना। पृथुजघना। महाललाटा।

### ४२३. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४-२-५५

वा ङीष् इति उपसर्जनादिति चानुवर्तते। उपसर्जनभूतनासिकाद्यन्तात् प्रातिपदिकात् स्त्रियां वा ङीष् स्यात् नासिकोदरयोः विशिष्य पाठसामर्थ्यात् न क्रोडादीति निषेधो न। तुङ्गनासिकी-तुङ्गनासिका। तिलोदरी-तिलोदरा। बिम्बोष्ठी-बिम्बोष्ठा। दीर्घजङ्घी-दीर्घजङ्घा। समदन्ती-समदन्ता। चारुकर्णी-चारुकर्णा। तीक्ष्णशृङ्गी-तीक्ष्णशृङ्गा। नासिकोदरयोः बह्वच्त्वात् प्रतिषेधे प्राप्ते, ओष्ठादीनां संयोगोपधत्वात् अप्राप्ते च वचनमिदम्।

### पुच्छाच्च (वा)

पुच्छान्तात् प्रातिपदिकात् ङीष् वा स्यात्। कल्याणपुच्छी-कल्याणपुच्छा। सुपुच्छी-सुपुच्छा। दीर्घपुच्छी-दीर्घपुच्छा।

### कबर-मणि-विषशरेभ्यो नित्यम् (वा)

कबरपुच्छी, मणिपुच्छी, विषपुच्छी, शरपुच्छी।

### ४२४. सहनञ्विद्यमानपूर्वाच्च ४-२-५७

स्वाङ्गाच्चोपसर्जनादिति नासिकोदरौष्ठजङ्घेति च प्राप्त ङीष् प्रतिषिध्यते। सह-नञ्-विद्यमानशब्दपूर्वात् स्वाङ्गात् प्रातिपदिकात् स्त्रियां न ङीष्। सकेशा। अकेशा। विद्यमानकेशा। सनासिका। अनासिका। विद्यमाननासिका। एवं सोदरा। अनुदरा। विद्यमानोदरा। अनोष्ठा। विद्यमानोष्ठा। सजङ्घा। अजङ्घा। अकर्णा; अशृङ्गा इत्यादि।

### ४२५. नखमुखात्संज्ञायाम् ४-२-५८

नेति वर्तते। नखमुखशब्दान्तात् प्रातिपदिकात् स्त्रियां ङीष् न स्यात्

संज्ञायाम् । शूर्पणखा । वज्रणखा । गौरमुखा । कालमुखा । संज्ञाविशेषा इमे । संज्ञायां किम् ? ताम्रनखी, तुङ्गनखी, चन्द्रमुखी, गौरमुखी कन्या । यौगिकोयम् ।

### ४२६. सख्यशिश्वीति भाषायाम् ४–२–६२

सखिशब्दात्–अशिशुशब्दाच्च स्त्रियां ङीष् प्रत्ययः निपात्यते लौकिकप्रयोगे । सखी अशिश्वी । भाषायां किम् ? सखा सप्तपदा भव ।

### ४२७. जातेरस्त्रीविषयादयोपधात् ४–२–६३

जात्या स्ववाचकशब्दो लक्ष्यते । अर्थे कार्यासम्भवात् । स्वरूपं च न गृह्यते अस्त्रीविषयात् अयोपधादित्यनयोर्वैयर्थ्यापत्तेः । स्त्रियामेव यस्य नियमेन वृत्तिः तत्स्त्रीविषयम् । ततोऽन्यदस्त्रीविषयम् । तस्मात् अनियतस्त्रीलिङ्गात् इत्यर्थः । जातिवाचिनः अनियतस्त्रीलिङ्गात् अयोपधाच्च प्रातिपदिकात् स्त्रियां ङीष् स्यात् । जातेर्लक्षणमेवमुक्तम्–आकृतिग्रहणा जातिः । लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या । गोत्रं च चरणैः सह ।। अयमर्थः–आकृतिः= अवयवसन्निवेशविशेषः, ग्रहणं=व्यञ्जकं यस्याः सा, अनुगतावयवसंनिवेशविशेषव्यंङ्ग्या जातिः एका । लिङ्गानामिति कर्मणि षष्ठी । न सर्वं भजति इति न सर्वभाक् । सर्वाणि लिङ्गानि अभजमाना इत्यर्थः । सकृदाख्यानेन एकत्र व्यक्तौ कथनेनैव निर्ग्राह्या=सुग्राह्या । असर्वलिङ्गा, एकस्यां व्यक्तौ उपदेशे सति व्यक्त्यन्तरे उपदेशं विनापि सुगमा अन्या जातिः । गोत्रमित्यनेन अपत्यं विवक्षितम् । चरणशब्दः शाखाध्येतृवाची । चरणैः सह गोत्रं च जातिः । अपत्यप्रत्ययान्तः, शाखाध्येतृवाची च शब्दः जातिरित्यर्थः । इयमपरा जातिः । एवं त्रिविधा जातिः । आकृतिग्रहणाया जातेः–कुक्कुटी । सूकरी । मयूरी । तटी । असर्वलिङ्गायाः जातेः-वृषली । गोत्रलक्षणायाः जातेः–नाडायनी । चारायणी । नडादिभ्यः फक् इति नडचरशब्दयोः अपत्यार्थे फक् । चरणलक्षणायाः जातेः–कठी । कलापी । बह्वृची । जातेरिति किम् ? मुण्डा । अस्त्रीविषयादिति किम् ? मक्षिका । बलाका ।

अयोपधात् इति किम् ? क्षत्रिया ।

**योपधप्रतिषेधे हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः (वा)**

हयादीनां योपधत्वेऽपि ङीष् वाच्यः । हयी । गवयी । मुकयी । मनुषी । मत्सी ।

### ४२८. इतो मनुष्यजातेः ४-२-६५

इकारान्तात् मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् स्यात् । अतइत्यनुवृत्त्या जातेरस्त्रीविषयादित्यस्य अदन्तेष्वेव प्रवृत्तेः इदं वचनम् । कुन्ती । दाक्षी । अवन्ती । प्लाक्षी । इत इति किम् ? विशोऽपत्यं स्त्री, दरदः अपत्यं स्त्री इत्यर्थे विट् । दरद् इति । इह मा भूत् । मनुष्यग्रहणं किम् ? तित्तिरि. जातिग्रहणेऽनुवर्तमाने पुनर्जातिग्रहणेन अयोपधग्रहणस्यानुवृत्यभावबोधनात् योपधादपि अनेन ङीप् भवति । औदमेयी । उदमेयो नाम कश्चित् । तस्यापत्यं स्त्री इत्यर्थः ।

### ४२९. ऊङुतः ४-२-६६

मनुष्यजातेः अयोपधात् इति अनुवर्तते । उकारान्तात् अयोपधात् मनुष्यजातिवाचितः प्रातिपदिकात् स्त्रियाम् ऊङ् प्रत्ययः स्यात् । कुरूः । कुरोः अपत्यं स्त्री । ब्रह्मबन्धूः । वीरबन्धूः । अयोपधात् इति किम् ? अध्वर्युः । अध्वर्युशाखाध्यायिनी इत्यर्थः । चरणलक्षणा इयं जातिः ।

**अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् (वा)**

रज्ज्वादिभिन्नात् अप्राणिजातिवाचकादपि प्रातिपदिकात् ऊङ् भवतीति वक्तव्यम् । रज्ज्वादिपर्युदासात् ‘ नञिवयुक्तमन्यसदृशाधिकरणे, तथाहि अर्थगतिः ।’ इति न्यायेन रज्ज्वादिसदृशानामुवर्णान्तानामेव ग्रहणात् अदन्तेभ्यो न भवति । अलाबूः । कर्कन्धूः । अप्राणिग्रहणं किम् ? कृकवाकुः । रज्ज्वादेस्तु-रज्जुः, हनुः ।

### ४३०. पङ्गोश्च ४-२-६८

पङ्गुशब्दात् स्त्रियामूङ् स्यात् । पङ्गूः । पङ्गुत्वस्याजातित्वात्

ऊङुतः इत्यस्याप्राप्तौ वचनमिदम् । श्वश्रूरिति तु अव्युत्पन्नं प्रातिपदिकम् ।

## ४३१. ऊरूत्तरपदादौपम्ये ४-१-६९

ऊरुः उत्तरपदं यस्येति बहुव्रीहिः । उत्तरपदेत्यनेन पूर्वपदमाक्षिप्तम् । औपम्ये इति तत्रान्वेति । उपमीयते अनयेत्युपमा = उपमानम् । उपमैव औपम्यम् । उपमानवाचिपूर्वपदात् ऊरूत्तरपदात् प्रातिपदिकात् स्त्रियाम् ऊङ् स्यात् । करभोरूः । नागनासोरूः । कदलीस्तम्भोरूः । 'धात्रीकराभ्यां करभोपमोरूः' इत्यत्र तु ऊङ् न, करभशब्दस्य उपमानवाचित्वेऽपि पूर्वपदत्वाभावात् । औपम्ये इति किम् ? वृत्तोरूः स्त्री ।

## ४३२. संहित-शफलक्षणवामादेश्च ४-१-७०

ऊरूत्तरपदात् इत्यनुवर्तते । संहित-शफ-लक्षण-वाम इत्येतत्पूर्वपदात् ऊरूत्तरपदात् प्रातिपदिकात् स्त्रियामूङ् स्यात् । अनौपम्यार्थमिदं सूत्रम् । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ।

### सहितसहाभ्यां चेति वक्तव्यम् (वा)

सहितसहाभ्यां परः यः ऊरुशब्दः तस्मादपि ऊङ् स्यादिति वक्तव्यम् । सहितोरूः—सहितौ ऊरू यस्याः सा । सहोरूः-सहेते इति सहौ, सहौ ऊरू यस्याः सा ।

## ४३३. शार्ङ्गरवाद्यञो ङीन् ४-१-७३

शार्ङ्गरवादि इति लुप्तपञ्चमीकम् । शार्ङ्गर वादिगणपठितेभ्यः अञन्तेभ्यः जातिवाचिभ्यः प्रातिपदिकेभ्यः स्त्रियां ङीन् प्रत्ययः स्यात् । 'शार्ङ्गरवी। कापटवी । ब्राह्मणी । गौतमी । अञन्तेभ्यः—वैदी । और्वी । गोत्रत्वेन जातित्वात् ङीषि प्राप्ते ङीन् । स्वरे विशेषः । जातिवाचिभ्यः किम् ? शार्ङ्गरवस्य स्त्री, वैदस्य स्त्री इति पुंयोगे तु ङीषेव ।

## ४३४. यङश्चाप् ४-१-७४

यङिति ञ्यङः ष्यङश्च ग्रहणम् । यङन्तात् प्रातिपदिकात् स्त्रियां चाप् स्यात् । आम्बष्ठ्या । सौवीर्या । कौसल्या । कौसल्य-आम्बष्ठ्य-सौवीर्यशब्दाः

यञन्ताः एषु वृद्धेत्कोसलाजादाञ्ञ्यङ् इति अपत्यार्थो ञ्यङ् विहितः। ततः अनेन चाप्। कारीषगन्ध्य-वाराह्य-बालाक्यशब्दाः ष्यङन्ताः। एषु 'अणिञोर-नार्षयोःगुरुपूत्तमयोः ष्यङ् गोत्र' इति ष्यङ् विहितः। ततः चाप्। कारीषगन्ध्या-वाराह्या-बालाक्या।

## ४३५. यूनस्तिः ४-१-७७

युवन्शब्दात् अनुपसर्जनात् प्रातिपदिकात् स्त्रियां ति प्रत्ययः स्यात्। स च तद्धितसंज्ञः। ऋन्नेभ्यः इति ङीपोऽपवादः। युवतिः। अनुपसर्जनादिति किम्? बहवो युवानो यस्यां सा बहुयुवा। 'युवतीकरनिर्मथितम्' इत्यादि-प्रयोगेषु युवती इतीकारान्तत्वं कथमिति चेत्? युमिश्रणे इति युधातोः शत्रन्तात् ङीपि साधु।

## ४३६. अजाद्यतष्टाप् ४-२-४

प्रातिपदिकादिति स्त्रियामिति च वर्तते? अजः आदिः येषां ते अजादयः। अजादयः च अत्चेति समाहारद्वन्द्वात् षष्ठी। अजाद्यत इति प्रातिपदिक-विशेषणम्। तदन्तविधिः। स्त्रियामित्यस्य अजादिष्वेवान्वयः न तु तदन्तेषु। स्त्रियां विद्यमानः यः अजादिः, तदन्तात् प्रातिपदिकात्, स्त्रियां विद्यमाना-दकारान्ताच्च प्रातिपदिकात् टाप् प्रत्ययः स्यात्। अजादेः—अजा, एडका, कोकिला, चटका, अश्वा, बाला, होडा, वत्सा, मन्दा, बिलाता, (सफला, भस्त्रफला, सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा, काण्डपुष्पा, प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा) क्रुञ्चा, उष्णिहा, देवविशा, ज्येष्ठा, कनिष्ठा, मध्यमा। अदन्तात्—खट्वा, रमा, गदा, सर्वा, या सा, एषा इत्यादि। अज एडक प्रभृतीनाम् अकारान्तत्वादेव टापि सिद्धे पुनः अजादिगणे पाठः जातिवाचिनां जातेरस्त्री इति प्राप्तं ङीषं, वयोवाचिनां 'वयसि प्रथमे' इति प्राप्तं ङीपं च बाधित्वा, पुनः टापः प्रातिप्रसवार्थः। तेन जातिवाचित्वेऽपि कोकिला, अश्वा, मूषिका इत्यादौ टाबेव। प्रथमवयोवाचित्वेऽपि बाला, वत्सा, होडा इत्यादौ टाबेव। स्त्रियामित्यस्य अजादौ विशेषणात् पञ्चाजी इत्यादौ टाप् न भवति। पञ्चा-

नामजानां समाहारः इति विग्रहे तद्धितार्थोत्तरपदसमाहारे चेति द्विगुः। 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति समाहारनिष्ठस्य स्त्रीत्वस्य पञ्चाजे समुदाये विद्यमानत्वेन अजस्य स्त्रियामविद्यमानत्वात्। अतः अत्र द्विगोरिति ङीप् भवति। एवमेव पञ्चाश्वी इत्यादि। त्रिलोकी पञ्चवटी इत्यादौ तु द्विगोरिति ङीवेव भवति। अकारान्तस्य त्रिलोक पञ्चवट इत्यस्य स्त्रियाम विद्यमानत्वेऽपि द्विगोरिति विशेषविहितत्वेन टापं बाधित्वा ङीपः प्रवृत्तेः।

### सम्भस्त्राजिनशणपिण्डेभ्यः फलात् (वा)

सम्, भस्त्र, अजिन, शण, पिण्ड एतेभ्यः परात् फलशब्दात् स्त्रियां टाप् स्यात्। पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्चेति ङीषोपवादः। सम्फला, भस्त्रफला, अजिनफला, शणफला, पिण्डफला।

### सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् (वा)

सत्, अच्, काण्ड, प्रान्त, शत, एक एतेभ्यः परात् पुष्पशब्दात् स्त्रियां टाप् स्यात्। इदमपि पाककर्णपर्णपुष्पेति प्राप्तस्य ङीषः अपवादः। सत्पुष्पा। प्राक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा।

### शूद्रा जातिः (वा)

शूद्रजातिः स्त्री वाच्या चेत् शूद्रशब्दात् तदन्ताच्च प्रातिपदिकात् टाप् स्यात्। शूद्रा। शूद्रात्स्वभार्यायामुत्पन्ना स्त्री। सच्छूद्रा। पुंयोगे तु ङीषेव। शूद्रस्य भार्या शूद्री।

### महत्पूर्वस्य प्रतिषेधः (वा)

महत्शब्दपूर्वस्य शूद्रशब्दस्य तु जातिवाचित्वेऽपि स्त्रियां टाप् न स्यात्। महाशूद्री। महाशूद्रशब्दः आभीरजातिवचनः। तदन्तविधिना प्राप्तः टाप् प्रतिषिध्यते। ननु 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति' तदन्तविधि-प्रतिषेधात् महत्पूर्वस्य शूद्रान्तस्य प्राप्तिरेव नेति निषेधोऽनर्थक इति चेत्। महत्पूर्वं निषेध एव ज्ञापयति अस्मिन् प्रकरणे तदन्तविधिरस्तीति। तेन अतिधीवरी अतिपीवरी अतिभवती अतिमहती इत्यादि सिध्यति।

## मूलान्नञः (वा)

नञः उत्तरः मूलशब्दः स्त्रियां टापं लभते । अमूला । नञः किम् ? शतमूली । पाककर्णेति ङीष् । सर्वा शब्दात् 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति अकच् प्रत्यये सर्विका इति भवति, न तु सर्वका इति । एवम् हरिका मूषिका इत्यादि । तत्र इत्वविधायकं सूत्रमाह ।

### ४३७. प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७–३–४४

असुप इति पञ्चम्यन्तम् । असमर्थसमासः सुपः परो न इत्यर्थः । प्रत्ययग्रहणपरिभाषया सुबन्ता इत्यर्थः । प्रत्ययस्थात् ककारात् पूर्वस्य अकारस्य इकारादेशः स्यात् आपि परे । स चेदाप् सुबन्तात्परो न भवति । सर्विका कारिका । हारिका । जटिलिका । मुण्डिका । बालिका । एतिका । प्रत्ययस्थादिति किम् ? शक्नोतीति शका । अयं ककारः धातुसम्बन्धी । कादिति किम् ? मण्डना । रमणा । पूर्वस्येति किम् ? परस्य मा भूत् । पटुका । मृदुका । पटुक आ, मृदुक आ इति स्थिते सवर्णदीर्घात्पूर्वम् ककारोत्तरस्य अकारस्य स्यात् । अत इति किम् ? गोका । नौका । तपरकरणं किम् ? राका । आपि किम् ? कारकः । धारकः । ननु आपीत्यनेन किं विशिष्यते ? यदि ककारः, कारिकेत्यत्रापि न प्राप्नोति अकारेण व्यवहितत्वात् । एकादेशे कृते नास्ति व्यवधानमिति समाधानं न युक्तम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवत्वेन व्यवधानात् । व्यवधानेऽपि भवतीति चेत् रथकट्या इत्यत्रापि स्यादिति चेत् ? आपः अनन्तरस्य ककारस्यासम्भवेन वचनसामर्थ्यात् स्थानिवद्भावकृतम् एकेन वर्णेन व्यवधानमाश्रीयते । 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति न्यायात् श्रुतिकृतमनेकेन वर्णेन व्यवधानं तु नाश्रीयते । ततः कारिका इत्यत्र इत्वं भवति । रथकट्या इत्यादौ न भवति । असुप इति किम् ? बहवः परिव्राजकाः यस्यां सा बहुव्राजका नगरी । सुबन्तात् परिव्राजकशब्दात् परः अयं आबिति कात्पूर्वस्याकारस्य इत्वं न भवति । यद्यपि परिव्राजकशब्दात् विहितस्य

सुपः 'सुपो धातु प्रातिपदिकयोः' इति लुका लुप्तत्वेन श्रवणं न, तथापि- 'प्रत्ययलोपे प्रत्ययलक्षणम्, इति प्रत्ययलक्षणेन परिव्राजकशब्दस्य सुबन्तत्व-मव्याहतम्। लुमतेति प्रत्ययलक्षणप्रतिषेधस्तु नेह प्रवर्तते, लुमता लुप्ते प्रत्यये तन्निमित्तेअङ्गकार्ये एव तस्य प्रवृत्तेः। नात्र सुप् निमित्तमित्थं, किन्तु टाप् निमित्तम्। बह्वूनि चर्माणि यस्यां सा बहुचर्मिका इत्यत्र तु सुबन्तात्परः टाप् न भवति कपाव्यवहितत्वादिति भवत्येवेत्वम्।

## मामकनरकयोरुपसङ्ख्यानम् (वा)

मामक–नरकशब्दयोः कात्पूर्वस्य इत्वं वक्तव्यम्। मामक–नरकशब्दाभ्यां टाप्। अत्र ककारस्य प्रत्ययस्थत्वाभावात् सूत्रेण इत्वे अप्राप्ते वचनमिदम्। ममेयं–मामिका। नरान् कायतीति नरिका।

## ४३८. नयासयोः ७–३–४५

या सा इति प्रथमान्तनिर्देशो न विवक्षितः। तेन यत्तदोर्ग्रहणम् प्रत्ययस्थादित्यतः अतः इत् इत्यनुवर्तते। यत्तदोरकारस्य इकारादेशः न स्यात्। यका। सका। यकाम्। तकाम्।

## त्यकनश्च न (वा)

त्यकन्प्रत्ययान्तस्यापि इत्वं न स्यात्। उपत्यका। अधित्यका।

## आशिषि वुनश्च न

आशीरर्थे विहितस्य वुनः स्थाने जातस्य अकेत्यकारस्यापि इत्वं न। जीवतात्-जीवका। भवतात्-भवका।

## क्षिपकादीनां न

क्षिपकादिशब्दानामस्येत्वं न स्यात्। क्षिपका। ध्रुवका। कन्यका। चटका।

## तारका ज्योतिषि

तारका-ज्योतिः। तारिका-दासी।

**४३९. उदीचामातः स्थाने यकपूर्वायाः ७-३-४६**

प्रत्ययस्थादिति सूत्रमनुवर्तते । यश्च कश्च यकौ, तौ पूर्वौ यस्यास्तस्याः । यकपूर्वाया इत्येतत् अत इत्यस्य विशेषणम् । अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः । तेन आकारस्य स्त्रीप्रत्ययत्वं लभ्यते । यकारपूर्वायाः ककारपूर्वायाश्च स्त्रीप्रत्ययातः स्थाने योऽकारः तस्य कात्पूर्वस्य इकारादेशः स्याद्वापि । आर्यिका-आर्यका । चटकिका-चटकका । मूषकिका-मूषकका । आतः किम् ? सांकाश्यिका । यकपूर्वाया इति किम् ? अश्विका ।

(सूत्राणि ४३९)

इति स्त्रीप्रत्यय प्रकरणम्

---

# कारक प्रकरणम्

स्वौजसमौट् इत्यादिना ङ्याप् प्रातिपदिकात् स्वादयो विहिताः । तेषाम् अर्थविशेषव्यवस्थां दर्शयितुमारभते—

**प्रातिपदिकार्थलिङ्ग परिमाणवचनमात्रे प्रथमा २-३-४६**

प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं चेति द्वन्द्वः । प्रातिपदिकार्थ-लिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम् इत्यस्वपदविग्रहः । मात्रशब्दोऽवधारणार्थः । द्वन्द्वान्ते श्रूयमाणस्य मात्रशब्दस्य प्रत्येकमन्वयः । प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे इति । तत्र लिङ्ग-परिमाणयोः प्रातिपदिकार्थं विना क्वाप्यनुपस्थितेः लिङ्गमात्रे अधिके, परिमाणमात्रे अधिके इत्यर्थो विवक्षितः । प्रातिपदिकार्थमात्रे, लिङ्गमात्राधिक्ये, परिमाण-मात्राधिक्ये, वचनमात्रे च प्रातिपदिकात् प्रथमा विभक्तिः स्यात् । प्रातिपदिकार्थः-नियतोपस्थितिकः अर्थः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेन भानं सः । लिङ्गपदोपादानात् प्रवृत्तिनिमित्तं तदाश्रयश्चैवात्र प्रातिपदिकार्थपदेन गृह्यते । लिङ्गम्-स्त्रीपुंनपुंसकानि । परिमाणम्—द्रोणः, खारी, आढकम् । वचनम्—संख्या,

एकत्वद्वित्वबहुत्वानि । प्रातिपदिकार्थमात्रे—उच्चैः, नीचैः, पुमान्, स्त्री, नपुंसकम्। लिङ्गमात्राधिक्ये- कृष्णः, श्रीः, ज्ञानम्, तटः, तटी, तटम् । परिमाणमात्राधिक्ये- द्रोणः, खारी, आढकम्। द्रोणादिभ्यः शब्देभ्यः लौकस्य दारुयस्य वा परिमाणत्वेनार्थस्य नियमेनोपस्थितिः । द्रोणादिपरिमितस्य व्रीह्यादेरर्थस्य विवक्षायां प्रथमासिद्ध्यर्थं परिमाणग्रहणम् । वचनमात्रे—एकः, द्वौ, बहवः । यद्यपि एकत्वद्वित्वबहुत्वानां नियतोपस्थितिसत्वात् प्रातिपदिकार्थत्वमेवास्ति तथापि एकत्वादीनां प्रकृत्यैवोक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाया अप्राप्तौ वचनग्रहणम् । मात्रग्रहणं किम्? ग्रामं गच्छति । कर्माद्याधिक्ये प्रथमा मा भूत् ।

## ४४०. सम्बोधने च २-३-४७

सम्बोधनम् अभिमुखीकृत्य ज्ञापनम् । मात्रग्रहणात् सम्बोधनाधिक्ये अप्राप्तौ सूत्रमिदम् । सम्बोधने अधिके गम्येपि प्रथमा स्यात् । हे राम मां पाहि ।

## ४४१. कारके १-४-२३

अधिकारसूत्रमिदम् । कर्मादिसंज्ञाविधायकेषु सूत्रेषु सम्बध्यते । क्रियाजनकं कारकम् । करोति=क्रियां निर्वर्तयतीति व्युत्पत्तेः ।

## ४४२. कर्तुरीप्सिततमं कर्म २-४-४९

कारके इत्यधिकृतं प्रथमान्ततया विपरिणम्यते । आप्तुमिष्यमाणम् ईप्सितम् इति क्रियाशब्दो विवक्षितः न तु अभिप्रेतार्थो रूढि शब्दः । अतिशयेन ईप्सितम् ईप्सिततमम् । कर्तुरिति ईप्सितापेक्षया 'क्तस्य च वर्तमाने' इति कर्तरिषष्ठी । तेन कर्त्रा आप्तुमिष्टतमम् इत्यर्थः सिध्यति । कर्ता च धातूपात्तव्यापाराश्रयः । सः केनाप्तुमिच्छतीति करणाकांक्षायां विशेषणीभूतेन व्यापारेणैव अर्थो लभ्यते । आप्तुमित्यस्य सम्बन्धुमित्यर्थः । स्वव्यापारप्रयोज्येन फलेन सम्बन्धुमिष्यमाणमिति विवक्षितार्थः । कर्तुः क्रियया आप्तुमिष्टतमं स्वनिष्ठव्यापारप्रयोज्यफलेनसम्बन्धुम् अतिशयेन इष्यमाणं कारकं कर्मसंज्ञं स्यात् ।

## ४४३. अनभिहिते २-३-१

अधिकारसूत्रमिदम् । इत ऊर्ध्वं विधीयमानाः विभक्तयः अनभिहिते-अनुक्ते भवन्ति इति वेदितव्यम् ।

## ४४४. कर्मणि द्वितीया २-३-२

अनभिहिते इति सम्बध्यते । अनुक्ते कर्मणि कर्मसंज्ञकात् प्रातिपदिकात् द्वितीया विभक्तिः स्यात् । हरिं भजति । ग्रामं गच्छति । तण्डुलं पचति । तुष्ट्यनुकूलः परिचरणात्मकः व्यापारः भजधातोरर्थः । आख्यातस्य तिङः कर्ता अर्थः । कर्ता परिचरणव्यापारेण तुष्टिरूप फलेन सम्बन्धुम् इष्यमाणः हरिः इति तस्य कर्मसंज्ञा । कर्मणः अन्यतः अनुक्तत्वात् कर्मवाचकात् हरिशब्दात् द्वितीया । पूजाव्यापारेण हरिं तोषयतीति तात्पर्यार्थः । उत्तरदेशसंयोगानुकूलः पदचलनरूपो व्यापारः गम् धातोरर्थः । कर्तुः पदचलनरूप व्यापारेण संयोगरूपफलसम्बन्धित्वेन इष्यमाणत्वात् ग्रामस्य कर्मत्वम् । ततः द्वितीया । ग्रामं पदचलनरूपव्यापारेण संयोजयति इत्यर्थः । विक्लित्यनुकूलः अधिश्रयणादिः व्यापारः पचधातोरर्थः । कर्तुः अधिश्रयणादि व्यापारेण विक्लित्तिरूपफलेन सम्बन्धुमिष्यमाणतया तण्डुलस्य कर्मत्वम् । ततो द्वितीया । तण्डुलम् अधिश्रयणादिव्यापारेण विक्लेदयति इत्यर्थः । एवमन्यत्रापि ऊह्यम् । कर्तुः किम् ? माषेषु अश्वं बध्नाति । माषाणां कर्मत्वं मा भूत् । कर्मणः अश्वस्यैव ईप्सिताः माषाः न तु कर्तुः । अश्वो हि भक्षणक्रियया माषानाप्तुमिच्छति । ईप्सितग्रहणं किम् ? पयसा ओदनं भुङ्क्ते । ईप्सितपदाभावे कर्तुरुद्देश्यं कर्म इति स्यात् । तथा च पयसामिश्रस्य ओदनस्य भोजने प्रवृत्तौ ओदनस्य कर्मणः संस्कारकतया पयसोऽपि उद्देश्यत्वात् कर्मत्वं स्यात् । ईप्सितत्वनिवेशे तु भुजिक्रियया आप्तुमिष्यमाणं पयो न भवति किन्तु संस्कारकत्वात् करणं भवतीति न दोषः । वारणार्थानामीप्सितः इति विहिताया अपादानसंज्ञायाः, कर्मसंज्ञायाश्च विषय व्यवस्था सिध्यर्थं तमप् ग्रहणम् । तेन अग्नेर्माणवकं वारयति इत्यत्र माणवकस्य कर्मत्वं अग्नेरपादानत्वं च सिध्यति । अनभिहिते इति किम् ? क्रियते कटः । पच्यते ओदनः ।

गम्यते ग्रामः । कर्मणि तिङ् विहितः । तिङा कर्मणः अभिहितत्वात् कटात् द्वितीया मा भूत् । भीष्मम् उदारं दर्शनीयं शोभनं कटं करोति इत्यादौ कटशब्दात् उत्पन्नया द्वितीयया कर्मणोऽभिहितत्वात् भीष्मादिभ्यो द्वितीया न प्राप्नोति । तदर्थं परिगणनं क्रियते—तिङ्-कृत्-तद्धित-समासाव्ययैः अनभिहिते इति । तेन विभक्त्या अभिधानेऽपि न दोषः । तिङ्—क्रियते कटः । कर्मणि तङ् । कृत्—कटः कृतः । भूते कर्मणि क्तः । तद्धितः—शत्यः-शतिकः । ठन्यतौ प्रत्ययौ कर्मणि । समासः—प्राप्तमुदकं यं सः प्राप्तोदकः ग्रामः । अन्यपदार्थकर्म बहुव्रीहिणाभिहितम् । अव्ययं—नारद इति अबोधि । इतिना अव्ययेन कर्म अभिहितम् । एतच्चेप्सिततमं कर्म त्रिविधम् । निर्वर्त्यम्, विकार्यम्, प्राप्यमिति । यदसदेवोत्पाद्यते तन्निर्वर्त्यम् । यथा-कटं करोति । ओदनं पचति । यत्लब्धसत्ताकमवस्थान्तरमापाद्यते तद्विकार्यम् । यथा-काष्ठं भस्म करोति । सुवर्णं कुण्डलं करोति । आभ्यतिरेकेण क्रियाकृतविशेषानाश्रयं प्राप्यम् । यथा-आदित्यं पश्यति ।

### ४४५. तथायुक्तं चानीप्सितम् १–४–५०

ईप्सितादन्यत् अनीप्सितम् । तेन द्वेष्यम्=प्रतिकूलम्, उपेक्ष्यम्=अप्रतिकूलं च गृह्यते । तथेति पृथक्पदं सादृश्यवाचकम् पूर्वसूत्रे संनिहितत्वात् ईप्सिततममेव सादृश्यप्रतियोगितया गृह्यते । ईप्सिततमवत् कर्तुः क्रियया युक्तम् अनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । विषं भक्षयति । गलविवरप्रवेशानुकूल हनुचलनादि व्यापारः भक्षयतेरर्थः । विषस्य द्वेष्यतया ईप्सिततमत्वाभावेऽपि ईप्सिततमस्य भुज्यमानस्य ओदनादेरिव क्रियाजन्यगलविवरप्रवेशात्मक फलाश्रयत्वात् विषस्य कर्मत्वम् । ग्रामं गच्छन् तृणं स्पृशति । स्पृश्यमानस्य तृणस्य ईप्सिततमत्वाभावेऽपि गङ्गां स्पृशतीत्यादौ ईप्सिततमस्य स्पृश्यमानस्य गङ्गादेरिव क्रियाजन्यसंयोगात्मक फलाश्रयत्वात् तृणस्य कर्मत्वम् । यद्यपि धातूपस्थाप्य फलशालि कर्म इत्येतावतैव उक्तस्थलेषु कर्मसंज्ञा सिद्धौ ईप्सितानीप्सितघटितं सूत्रद्वयं पृथक् न कार्यम् तथापि अग्नेर्माणवकं वारयति इत्यत्र वारणार्थानामीप्सितः इति माणवकस्य प्राप्तमपादान

निवारयितुं कर्तुरीप्सिततममिति वक्तव्यमेव। एवं च द्वेष्योदासीनसंग्रहार्थं तथायुक्तमिति सूत्रमावश्यकमेवेति मन्तव्यम्।

## ४४६. अकथितं च १-४-५१

अकथितम्-अकीर्तितमित्यर्थः। केनेत्याकांक्षायाम् अपादानादीनां पूर्वं कथितत्वेन तस्यैव परामर्शः। अपादानम्, संप्रदानम्, अधिकरणम्, करणम्, कर्ता, हेतुः इत्येतैर्विशेषैः अविवक्षितं किन्तु कर्मत्वेन विवक्षितं कारकं कर्मसंज्ञं स्यात्। अतिप्रसक्तिवारणाय दुह्-याच्-भिक्ष्-पच्-दण्ड्-रुधि-प्रच्छ्-चिञ्-ब्रूञ्-शास्-जि-मन्थ्-मुष्-नी-हृ-कृष्-वह् इत्येतेषां धातूनां मुख्यकर्मणा सह क्रियया सम्बध्यमानं कारकमेवापादानादि विशेषैरकथितं सत् कर्मसंज्ञकं भवति इति परिगणनं क्रियते। गां दोग्धि पयः। अत्र क्षरणानुकूलव्यापारः दुहेरर्थः। क्षरणरूपफलाश्रयत्वात् पयः मुख्यं कर्म। गोस्तु पयः प्रति निमित्तभावः। अवधिभावः न विवक्षितः। तेन कर्मत्वम्, द्वितीया। अवधित्वविवक्षायां तु अपादानत्वेन पञ्चमी भवति गोः दोग्धि पयः इति। बलिं याचते वसुधाम्। अत्र प्रार्थनार्थस्य याचेः वसुधा मुख्यं कर्म। तेन युक्तो बलिः अवधिभूतोऽपि तदविवक्षया कर्म भवति। एवमेव पौरवं भूमिं भिक्षते इत्यत्रापि। तण्डुलान् ओदनं पचति। विक्लित्यनुकूलनिर्वर्तनं पचेरर्थः। ओदनो मुख्यं कर्म। तण्डुलाः करणत्वाविवक्षया अकथितं कर्म। गर्गान् शतं दण्डयति ग्रहणार्थस्य दण्डधातोः शतं मुख्यं कर्म। गर्गास्तु अपादानत्वाविवक्षायाम् अकथितं कर्म। व्रजमवरुणद्धि गाम्। निर्गमप्रतिबन्धार्थस्य रुधेः गौः मुख्यं कर्म। व्रजस्तु अधिकरणत्वाविवक्षायाम् अकथितं कर्म। माणवकं पन्थानं पृच्छति। जिज्ञासितव्यार्थज्ञानानुकूलव्यापारार्थस्य पृच्छेः पन्थाः मुख्यं कर्म। माणवकः करणत्वाविवक्षायाम् अकथितं कर्म। वृक्षमवचिनोति फलानि। प्रच्यावनार्थस्य अवपूर्वस्य चिञः मुख्यं कर्म फलानि। वृक्षः अपादानत्वाविवक्षायाम् अकथितं कर्म। माणवकं धर्मं ब्रूते। बोधनानुकूलव्यापारार्थस्य ब्रूञः धर्मः मुख्यं कर्म। माणवकः सम्प्रदानत्वाविवक्षायाम् अकथितं कर्म। एवं शास्तेरपि प्रयोगे। शतं जयति देवदत्तम्।

अभिभवार्थस्य जेः मुख्यं कर्म शतम् । देवदत्तः अपादानत्वाविवक्षायामकथितं कर्म । सुधां क्षीरनिधिं मथ्नाति । सारोद्भवनानुकूलमन्थानदण्डभ्रमजनित-संक्षोभात्मक व्यापारार्थस्य मन्थेः मुख्यं कर्म सुधा । क्षीरोदधिस्तु उद्भवं प्रति अपादानत्वाविक्षायामकथितं कर्म । देवदत्तं शतं मुष्णाति । अत्रापि देवदत्तस्या-पादानत्वाविवक्षायां कर्मत्वम् । ग्राममजां नयति, हरति, कर्षति, वहति, इत्यत्रापि । अजाधारत्वेन अधिकरणस्य ग्रामस्य अधिकरणत्वाविवक्षायामकथित-कर्मत्वम् । अकथितं कारकमित्यत्र कारकमिति किम् ? माणवकस्य पितरं पन्थानं पृच्छति । माणवकस्य क्रियानिमित्तत्वाभावेन न कारकत्वमिति कर्मत्वं मा भूत् ।

## अकर्मकधातुभिर्योगे काल भाव देश गन्तव्याध्वनां कर्मसंज्ञा वाच्या (वा)

कालो नाम लोके कालत्वेन प्रसिद्धः अहोरात्र समूहः मासादिरेव विवक्षितः । मासमास्ते । नेह–अहनि स्वपिति । भावः धात्वर्थः–गोदोहमास्ते । देशः ग्रामसमूहः कुरुपञ्चालादिरेव गृह्यते । नतु ग्रामादिरपि । पञ्चालान् आस्ते । कुरून् स्वपिति । नेह–ग्रामे आस्ते । गन्तव्योध्वा–नियत परिमाणः क्रोशादिरेव गृह्यते । क्रोशमास्ते । नेह–पथि आस्ते ।

## ४४७. गति बुद्धिप्रत्यवसानार्थ शब्दकर्माकर्मकाणामणि कर्ता स णौ १–४–५२

गतिश्च बुद्धिश्च प्रत्यवसानं च गतिबुद्धिप्रत्यवसानानि तानि अर्थो येषामिति विग्रहः । अर्थशब्दस्य प्रत्येकमन्वयः । प्रत्यवसानं भक्षणम् । शब्दः कर्म येषां ते शब्दकर्माणः तेषाम् । अविद्यमानं कर्म येषां ते अकर्मकाः । कर्मशब्दः कारकपरः न क्रियापरः । गतिबुद्धिप्रत्ययसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाः तेषाम् इति द्वन्द्वः । अणौ कर्ता अणि कर्ता । गत्यर्थानां, बुध्यर्थानां, प्रत्यवसानार्थानां, शब्दकर्मकाणाम्, अकर्मकाणां च धातूनां णौ अनुत्पन्ने यः कर्ता सः णौ उत्पन्ने कर्मसंज्ञः स्यात् । अनुत्पन्ने

णिचि शुद्धधातुवाच्यक्रियां प्रति यः कर्ता सः ण्यन्त धातुवाच्यक्रियां प्रति कर्मसंज्ञो भवतीत्यर्थः । गच्छति माणवको ग्रामम्—गमयति माणवकं ग्रामम् । याति छात्रः शालाम्—यापयति छात्रं शालाम् ।

## गत्यर्थेषु नयतेः, अनियन्तृकस्य वहेश्च प्रतिषेधः (वा)

नयति भारं सेवकः—नाययति भारं सेवकेन । वहति पेटिकां भृत्यः—वाहयति पेटिकां भृत्येन । नियन्तृ कर्तृकस्य तु वहेः कर्मत्वं भवत्येव । नियन्ता प्रेरक एव विवक्षितः । अश्वाः रथान् वहन्ति—रथान् अश्वान् वाहयति सूतः । वहन्ति यवान् बलीवर्दाः—वाहयति यवान् बलीवर्दान् कर्षकः । बुध्यते शिष्यः धर्मम्—बोधयति शिष्यं धर्मम् । वेत्ति बालः अर्थम्—वेदयति बालम् अर्थम् । भुङ्क्ते क्षुधितः ओदनम्—भोजयति क्षुदितम् ओदनम् । अश्नाति कपिः फलम्—आशयति कपिं फलम् ।

## आदिखाद्योः अहिंसार्थस्य भक्षेश्च प्रतिषेधः (वा)

अत्ति अतिथिः अन्नम्—आदयति अतिथिना अन्नम् । खादति बटुः रोटिकाम्—खादयति बटुना रोटिकाम् । भक्षयति गौः पिण्याकम्—भक्षयति गवा पिण्याकम् । हिंसार्थस्य तु भक्षयतेः कर्मत्वं भवत्येव—भक्षयंति बलीवर्दाः सस्यम्—भक्षयति बलीवर्दान् सस्यम् । क्षेत्रस्थानां सस्यानां चेतनत्वात् तद्भक्षणं हिंसैव । शब्दकर्मणाम्—अधीते माणवको वेदम्—अध्यापयति माणवकं वेदम् । पठति बालः श्लोकम्—पाठयति बालम् श्लोकम् । अकर्मकाणाम्—आस्ते अध्यापकः-आसयति अध्यापकम् । शेते पान्थः—शाययति पान्थम् । गतिबुद्धीत्यादि किम् ? पचत्योदनं पाचकः—पाचयति ओदनं पाचकेन । अण्यन्तानां किम् ? गमयति देवदत्तो यज्ञदत्तम् । तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तम् ।

## ४४८. हृक्रोरन्यतरस्याम् १-४-५३

अणिकर्ता स णौ इति वर्तते । हरतेः करोतेश्च अण्यन्तावस्थायां यः कर्ता सः ण्यन्तावस्थायां वा कर्म स्यात् । हरति भारं सेवकः—हारयति भारं सेवकं- सेवकेन वा । करोति कटं भृत्यः—कारयति कटं भृत्यम्-भृत्येन वा ।

### अभिवादिदृशोरात्मनेपदे उपसंख्यानम् (वा)

अभिवदति गुरुं शिष्यः–अभिवादयते गुरुं शिष्यं-शिष्येण वा । पश्यन्ति भक्ताः देवम्–दर्शयते देवम् भक्तान् भक्तैर्वा । आत्मनेपदेकिम् ? अभिवादयति गुरुं शिष्येन । उभयतः, सर्वतः, धिक् , उपर्युपरि, अध्यधि, अधोऽधः, परितः, समया, निकषा, हा, प्रति इत्येतेषां प्रयोगे द्वितीया विभक्तिर्वाच्या । उभयतो ग्रामं नदी वहति । सर्वतः कृष्णं धेनवः । धिक्जालमम् । उपर्युपरि लोकम् । अध्यधि देशम् । अधोऽधो लोकम् । अभितः नगरीम् । परितः शालाम् । समया ग्रामम् । निकषा लङ्काम् । हा दुरात्मानम् । बुभुक्षितं न प्रतिभाति ।

### ४४९. अन्तरान्तरेणयुक्ते २-३-४

अन्तरा–अन्तरेणेति निपातयोरेव ग्रहणं प्रतिपदोक्तत्वात् । अन्तरा अन्तरेणेति शब्दाभ्यां योगे=अन्वये द्वितीया स्यात् । षष्ठ्यपवादः । अन्तरा त्वां च मां च कमण्डलुः अस्ति । अन्तरेण पुरुषकारं न किंचिल्लभ्यते । युक्ते इति किम् ? अन्तरा त्वां च मां च कृष्णस्य विग्रहः । अत्र कृष्ण शब्दस्य अन्तराशब्देन योगो नेति ततो न द्वितीया ।

### ४५०. कालाध्वनोरत्यन्तसंयोगे २-३-५

अन्तो–विच्छेदः तमतिक्रान्तः अत्यन्तः स च असौ संयोगश्च अत्यन्तसंयोगः निरन्तर संयोग इत्यर्थः । केनेत्याकांक्षायां क्रियागुणद्रव्यैरित्यौचित्याद्गम्यते । कालाध्वनोरिति अर्थग्रहणम् । न स्वरूपग्रहणम् । क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः सम्बन्धे गम्यमाने कालवाचिनः अध्ववाचिनश्च शब्दात् द्वितीया स्यात् । मासमधीते । मासं कल्याणी । मासं गुडधानाः । क्रोशम्-अधीते । क्रोशं कुटिला नदी । क्रोशः पर्वतः । अत्यन्त संयोगे किम् ? मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ।

### ४५१. स्वतन्त्रः कर्ता २-४-५४

स्वतन्त्रः प्रधानभूतः । स्वातन्त्र्यं च धात्वर्थव्यापाराश्रयत्वम् । कारकवि-कारात् क्रियाजनने स्वातन्त्र्यमिह विवक्षितम् । क्रियाजनने स्वातन्त्र्येण विवक्षितः

कर्तृसंज्ञः स्यात् । देवदत्तः पचति । स्थली पचति । इत्यादौ स्थाल्यादेः वस्तुतः स्वातन्त्र्याभावेपि तथा विवक्षया कर्तृत्वं भवति । अत एवोच्यते 'विवक्षातः कारकाणि भवन्ति' इति ।

## ४५२. तत्प्रयोजको हेतुश्च १-४-५५

तस्य प्रयोजकः तत्प्रयोजकः । तत् पदेन अनन्तरः कर्ता परामृश्यते । चकारेण कर्तृसंज्ञा समुच्चीयते । प्रयोजकः प्रेरकः । कर्तुः प्रयोजकः हेतुसंज्ञः स्यात् कर्तृसंज्ञश्च । कुलालः घटं करोति । तं प्रेरयतीत्यर्थे कारयति । हेतुत्वात् णिच् प्रत्ययः भवति । कर्तृत्वाच्च कर्तरि लकारः ।

## ४५३. साधकतमं करणम् १-४-४२

कारकाधिकारात् क्रियोत्पत्तौ इत्यर्थलाभः । अतिशयितं साधकं साधकतमम् । प्रकृष्टोपकारकमित्यर्थः । यद्व्यापारानन्तरं फलनिष्पत्तिः तत्प्रकृष्टम् । क्रियोत्पत्तौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् ।

## ४५४. कर्तृकरणयोस्तृतीया २-३-१८

अनभिहिते इत्यधिक्रियते । कर्तरि करणे च अनभिहिते कर्तृसंज्ञकात्, करणसंज्ञकाच्च शब्दात् तृतीया विभक्तिः स्यात् । कर्तरि—देवदत्तेन कृतम् । तेन भुक्तम् । रामेण वाली हतः । गुरुणा भाषितम् । हेतुकर्तरि—यजमानेन कारितम् । करणे—दात्रेण लुनाति । बाणेन हन्ति । परशुना छिनत्ति । अनभिहिते इति किम् ? देवदत्तः करोति । सः भुङ्क्ते । रामः हन्ति वालिनम् । गुरुः भाषते । यजमानः कारयति ।

## प्रकृत्यादिभ्य उपसंख्यानम् (वा)

प्रकृत्यादि शब्देभ्यः तृतीया भवतीति वक्तव्यम् । सर्वविभक्त्यपवादः । प्रकृत्या दर्शनीयः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेन धावति । विषमेण याति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । सहस्रेणाश्वान् क्रीणाति । नाम्ना सुतीक्ष्णः । चरितेन दान्तः । सुखेन आगच्छति । दुःखेन याति ।

## ४५५. अपवर्गे तृतीया २–३–६

अपवर्गो नाम फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः । कालाध्वनोरत्यन्तसंयोगे इत्यनुवर्तते । द्वितीयापवादः । अपवर्गे गम्यमाने कालवाचिनः अध्ववाचिनश्च अत्यन्तसंयोगे तृतीया स्यात् । मासेन प्रश्नोऽधीतः । क्रोशेन श्लोकः अधीतः । अध्ययनेन गृहीतः इति अर्थो गम्यते । अपवर्गे किम् ? मासं प्रश्नोऽधीतः । क्रोशं श्लोकोऽधीतः । अध्ययनं कृतं किन्तु न गृहीतम् इति गम्यते ।

## ४५६. सहयुक्तेऽप्रधाने २–३–१९

सहेनेति वक्तव्ये युक्तग्रहणेन सहार्थकशब्दानामपि ग्रहणं विज्ञायते । सहार्थकशब्देन योगे अप्रधानात् तृतीया विभक्तिः स्यात् । क्रियागुणद्रव्यैः द्वयोः सम्बन्धे सति सहशब्दस्य प्रयोगो भवति । पुत्रेण सहागतः पिता । आगमनक्रियासम्बन्धे पितापुत्रयोः समानेऽपि पितुरत्र आगमन क्रियासम्बन्धः शाब्दः इति तस्य प्राधान्यम् । पुत्रस्य तु पितृसाहित्यगम्यः आर्थिक इति तस्य अप्राधान्यम् इति पुत्रशब्दादेव तृतीया । पुत्रेण सह स्थूलः । पुत्रेण सह गोमान् । एवं पुत्रेण साकं सार्धं समं पिता आगत इत्यादावपि तृतीया । सहशब्दप्रयोगाभावेपि तदर्थावगमे तृतीया इष्यते, पुत्रेणागतः पिता । अप्रधाने इति किम् ? शिष्येण सह उपाध्यायस्य गौः । अत्र उपाध्यायशब्दात् मा भूत् ।

## ४५७. येनाङ्गविकारः २–३–२०

अङ्गानि अस्य सन्तीति अङ्गः इति अर्श आद्यजन्तः शरीरार्थः इह विवक्षितः । अङ्गस्य विकारः । येनेत्यनेन तदवयवो हेतुत्वेन निर्दिश्यते । न ह्यविकृतेनावयवेन अवयविनः शरीरस्य विकारः सम्भवति इति सामर्थ्यात् विकृतेनेति लभ्यते । येनावयवेन विकृतेन अङ्गिनः शरीरस्य विकारो लक्ष्यते ततः तृतीया विभक्तिः स्यात् । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुणिः । अङ्गविकार इति किम् ? अक्षि काणमस्य । असति अङ्गग्रहणे काणशब्दात् तृतीया स्यात् ।

## ४५८. इत्थंभूतलक्षणे २-३-२१

कश्चित् प्रकारं प्राप्तः-इत्थंभूतः। तस्य लक्षणम् इत्थंभूतलक्षणम्। लक्षण शब्दस्य ज्ञापकमित्यर्थः। कश्चित्प्रकारं प्राप्तस्य ज्ञापकात् तृतीया स्यात्। जटाभिः तापसः। तापसत्वस्य ज्ञापिकाः जटाः। अतः ततः तृतीया। कमण्डलुना छात्रः। अत्र छात्रत्वं प्रकारः तं प्राप्तस्य छात्रस्य कमण्डलुः ज्ञापकः। छात्रेणोपाध्यायम्। उपाध्यायत्वं प्राप्तस्य छात्रः ज्ञापकः। शिखया परिव्राजकः। करणत्वेनैव तृतीया सिध्यतीति न वाच्यम् करणत्वाविवक्षायां लक्ष्यलक्षणभाव-ज्ञाप्यज्ञापक भाव विवक्षायां तृतीयासिध्यर्थमिदं सूत्रम्। कमण्डलुपाणिः छात्रः इत्यत्र कमण्डलु पाणि शब्दात् तृतीया न भवति समासार्थं प्रति लक्षणार्थस्य गुणभूतत्वात्। लक्षणस्य प्राधान्ये एव तृतीया।

## ४५९. हेतौ २-३-२३

नात्र तत्प्रयोजको हेतुश्चेति लक्षितः हेतुः। किन्तु फलसाधनयोग्यः पदार्थः लौकिकः विवक्षितः। हेतुवाचिनः तृतीया स्यात्। धनेन कुलम्। कन्यया शोकः। विद्यया यशः। दण्डेन घटः। पुण्येन दर्शनम्। अध्ययनेन वसति। यद्यपि अध्ययनं वासफलं तथापि वासं प्रति अध्ययनस्य हेतुत्वमस्तीति अध्ययन शब्दात् तृतीया।

### गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका (वा)

न केवलं श्रूयमाणैव क्रिया विभक्तौ प्रयोजिका किन्तु गम्यमानापि। अलं श्रमेण। साध्यमित्यस्याध्याहारः। श्रमेण साध्यं नास्तीत्यर्थः। शतेन शतेन वत्सान् पाययति पयः। परिछिद्येति अध्याह्रियते।

### अशिष्टव्यवहारे दाणः प्रयोगे-चतुर्थ्यर्थे तृतीया (वा)

वेदमार्गानुयायिनः शिष्टाः। वेदमार्गादपेताः अशिष्टाः। व्यवहारः= आचारः। अशिष्टानाम् आचारविषये दाण धातुप्रयोगे चतुर्थ्यर्थे तृतीया स्यात्। दास्या संयच्छते कामुकः। शिष्टाचारे तु भार्यायै संयच्छति।

## ४६०. कर्मणा यमभिप्रैति स सम्प्रदानम् १-४-३२

कर्मसंज्ञकेन द्रव्येण यमभिसम्बुद्‌धुमिच्छति=शेषित्वेनाध्यवस्यति सः सम्प्रदानसंज्ञः स्यात् । कर्मणा सम्बन्धश्च स्वत्वादिरूपः । सम्प्रदानं त्रिविधम्-अनिराकरणम्, प्रेरकम्, अनुमन्तृ चेति । आद्यम्-सूर्यायार्घ्यं ददाति । नात्र सूर्यः प्रार्थयते-नानुमन्यते-न च निराकरोति । द्वितीयम्-विप्राय गां ददाति । तृतीयम्-उपाध्यायाय गां ददाति ।

**क्रियया यमभिप्रैति सोऽपि सम्प्रदानम् (वा)**

पत्ये शेते । युद्धाय सन्नह्यते ।

## ४६१. चतुर्थी सम्प्रदाने २-३-१३

अन्यतः अनभिहिते सम्प्रदाने कारके सम्प्रदानसंज्ञकात् चतुर्थी स्यात् । विप्राय गां ददाति । माणवकाय भिक्षां ददाति । पत्ये शेते । अनभिहिते किम् ? दानीयो विप्रः ।

## ४६२. रुच्यर्थानां प्रीयमाणः २-३-१३

रुचिरर्थो येषा ते रुच्यर्थाः तेषाम् । रुचिरिह अभिलाषः । प्रीयमाणः-तृप्यमाणः । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणः=प्रीत्याश्रयः सम्प्रदानं स्यात् । देवदत्ताय रोचते वेदान्तः । हरये रोचते भक्तिः । यज्ञदत्ताय स्वदते सूपः । प्रीयमाणः किम ? देवदत्ताय रोचते मोदकः पथि । अत्र पथः सम्प्रदानसंज्ञा न भवति ।

## ४६३. श्लाघ ह्नुङ् स्थाशपां ज्ञीप्स्यमानः १-०-३४

ज्ञपयितुमिष्यमाणः ज्ञीप्स्यमानः-बोधयितुमभिप्रेतः इत्यर्थः । श्लाघ-ह्नुङ्-स्था-शप् इत्येतेषां प्रयोगे बोधयितुमिष्टः सम्प्रदानं स्यात् । देवदत्ताय श्लाघते । अत्र श्लाघतेः केवलं न कत्थनमर्थः किन्तु कत्थनेन बोधनम् । देवदत्तः श्लाघमानः श्लाघां तमेव बोधयितुमिच्छतीत्यर्थः । यज्ञदत्ताय ह्नुते । होतव्यं किञ्चित् यज्ञदत्तं ज्ञापयतीत्यर्थः । कृष्णाय तिष्ठते । स्थित्या स्वाशयं कृष्णं बोधयतीत्यर्थः । दशरथाय शपते । उपालम्भेन स्वाशयं प्रकाशयतीत्यर्थः ।

ज्ञीप्स्यमान इति किम् ? देवदत्तं श्लाघते ।

### ४६४. धारेरुत्तमर्णः १-४-३५

ऋणस्यार्पयिता धनस्वामी उत्तमर्णः । धारयतेः प्रयोगे उत्तमर्णः अर्थः सम्प्रदानसंज्ञः स्यात् । देवदत्ताय शतं धारयति । यज्ञदत्ताय सहस्रं धारयति । उत्तमर्णे इति किम् ? देवदत्ताय शतं धारयति ग्रामे । अधिकरणस्य ग्रामस्य मा भूत् ।

### ४६५. स्पृहेरीप्सितः १-४-३६

ईप्सितः—अभिप्रेतः । स्पृहयतेः ईप्सितः अर्थः सम्प्रदानसंज्ञः स्यात् । पुष्पेभ्यः स्पृहयति । फलेभ्यः स्पृहयति । ईप्सित इति किम् ? पुष्पेभ्यो वने स्पृहयति । ईप्सितमात्रे इयं संज्ञा । यदा पुष्पादीनामीप्सिततमत्वं विवक्ष्यते तदा परत्वात् कर्मसंज्ञैव । पुष्पाणि स्पृहयति । अत एव स्पृहणीयमिति कर्मणि अनीयर् सिध्यति । केचित्तु कर्मसंज्ञायाः बाधिकेयं सम्प्रदानसंज्ञेति वदन्ति तन्मते पुष्पाणि स्पृहयति इति न भवति पुष्पेभ्यः स्पृहयति इत्येव ।

### ४६६. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः १-४-३७

अमर्षः क्रोधः । अपकारः-द्रोहः । अक्षमा-ईर्ष्या । गुणेषु दोषाविष्करणम् असूया । क्रोधस्तावत् कोप एव । द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते इति सामान्येन यं प्रति कोपः इत्युक्तम् । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः सः सम्प्रदानसंज्ञः स्यात् । दुर्जनः सुजनाय क्रुध्यति । सेवकः यजमानाय द्रुह्यति । धीमते ईर्ष्यति । पण्डिताय असूयति । यं प्रति कोप इति किम् ? भार्यामीर्ष्यति । एनां भार्यामन्यो न पश्येत् इत्येतदर्थं भार्यागुणेषु दोषारोपणं करोति । नात्र भार्यां प्रति कोपः । केवलं परेण दृश्यमानां तां न सहते । अतो नात्र सम्प्रदानसंज्ञा । कस्मैचित् कुप्यति इति कथम्, कोपस्य कोपप्रभवत्वाभावात् इति चेत् ? कुपिरत्र द्रोहार्थः इति न दोषः । अस्मान् द्वेष्टि इत्यत्र तु द्विषेः अनभिनन्दनार्थत्वेन क्रोधाद्यर्थत्वाभावात् न सम्प्रदानसंज्ञा ।

### ४६७. क्रुधद्रुहोरुपसृष्टयोः कर्म १-४-३८

पूर्वसूत्रापवादः। उपसर्गसम्बद्धयोः क्रुधद्रुहोर्योगे यं प्रति कोपः सः कर्मसंज्ञः स्यात्। देवदत्तमभिक्रुध्यति। क्रूरमभिद्रुह्यति। उपसृष्टयोरिति किम्? देवदत्ताय क्रुध्यति-द्रुह्यति वा।

### ४६८. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता १-४-४०

प्रति-आङ् इत्येतत्पूर्वस्य श्रुधातोः प्रयोगे प्रवर्तनारूपव्यापारस्य कर्ता सम्प्रदानसंज्ञकः स्यात्। प्रतिपूर्वः श्रु धातुः प्रेरणापूर्वकाभ्युपगमे, आङ् पूर्वश्च प्रेरणापूर्वप्रतिज्ञाने च वर्तते। अतः पूर्वशब्दः प्रवर्तनात्मकव्यापारं परामृशति। विप्राय गां प्रतिश्रृणोति। विप्रेण प्रेरितः तुभ्यं ददामीत्यभ्युपगच्छति। विप्रस्य प्रेरणकर्तृत्वात् संप्रदानसंज्ञा। शरणार्थिने अभयं आश्रृणोति। मां रक्षेति शरणार्थिना प्रेरितः रक्षामीति प्रतिजानीते। प्रेरणकर्तृत्वात् शरणार्थिनः सम्प्रदानत्वम्।

### ४६९. परिक्रयणे सम्प्रदानमन्यतरस्याम् १-४-४४

साधकतमम् इति वर्तते। परिक्रयणं नाम नियतकालं वेतनादिना स्वीकरणम्। परिक्रयणे साधकतमं कारकं वा सम्प्रदानं स्यात्। पक्षे करणसंज्ञा. शताय शतेन वा परिक्रीतः। सहस्राय सहस्रेण वा परिक्रीतः।

### तादर्थ्ये चतुर्थी वाच्या (वा)

तस्मै इदं तदर्थम्। तदर्थस्य भावः तादर्थ्यम् तस्मिन्। तच्छब्देन चतुर्थ्यन्तस्यार्थो निर्दिश्यते। तेन च उपकार्योपकारकभावसम्बन्धो विवक्षितः। तत्र उपकार्यात् चतुर्थी स्यात्। यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम्। ब्राह्मणाय दधि। मुक्तये हरिभजनम्।

### क्लृपि सम्पद्यमाने च (वा)

संपत्तिः—विकारात्मना उत्पत्तिः परिणाम इति यावत्। क्लृप्यर्थानां धातूनां प्रयोगे सम्पद्यमानेऽर्थे विद्यमानात् विकृतिवाचकात् चतुर्थी स्यात्। मूत्राय कल्पते यवागूः। मूत्राय सम्पद्यते यवागूः। मूत्राय जायते यवागूः।

भक्तिः ज्ञानाय कल्पते। देवदत्तस्य शालयः सम्पद्यन्ते। अत्र न, विकाररूपोत्पत्त्यभावात्।

### हितयोगे च (वा)

चतुर्थी स्यात्। गवे हितम्। ब्राह्मणाय हितम्।

### ४७०. क्रियार्थोपपदस्य च कर्मणि स्थानिनः २-३-१४

क्रिया अर्थः=प्रयोजनं यस्याः सा क्रियार्था क्रिया। उपोच्चारितं पदमुपपदम्। सा उपपदं यस्य सः क्रियार्थोपपदः तस्य। क्रियाया उपपदत्वं स्ववाचकशब्द द्वारा। तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम् इत्येव विषयः गृह्यते। स्थानं=प्रसक्तिः अस्यास्तीति स्थानी तस्य स्थानिनः अप्रयुज्यमानस्येत्यर्थः। क्रियार्थोपपदस्य तुमुन्नन्तस्य ण्वुलन्तस्य वा अप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी स्यात्। द्वितीयापवादः। पुष्पेभ्यो व्रजति। पुष्पाणि आहर्तुं व्रजतीत्यर्थः। फलेभ्यो याति=फलान्याहर्तुं याति। भार्यायै गच्छति=भार्यां द्रष्टुं गच्छति। नृसिंहाय नमस्कुर्मः—नृसिंहमनुकूलयितुम्। क्रियार्थोपपदस्येति किम्? प्रविश पिण्डीम्। पिण्डी शब्दात् मा भूत्। भक्षिरत्र स्थानी, प्रविश गृहं पिण्डीं भक्षयेति गम्यमानत्वात्। किन्तु नायं क्रियार्थोपपदः। कर्मणीति किम्? फलेभ्यो व्रजति शकटेन। शकटशब्दात् मा भूत्। स्थानिन इति किम्? पुष्पाणि आहर्तुं याति। पुष्पशब्दात् मा भूत्।

### ४७१. तुमर्थाच्च भाववचनात् २-३-१५

तुमुनः अर्थ इव अर्थो यस्य तस्मात् तुमर्थात्। भावः=क्रिया। उच्यते अनेनेति वचनः भावस्य वचनः भाववचनः तस्मात् क्रियावाचिनः इत्यर्थः। तुमर्थभाववचन प्रत्ययान्तात् प्रातिपदिकात् चतुर्थी स्यात्। भाववचनाश्च इति सूत्रेण विहिता प्रत्यया एव गृह्यन्ते। यागाय याति-यष्टुं यातीत्यर्थः। पाकाय व्रजति-पक्तुं व्रजति। त्यागाय गच्छति-त्यक्तुं गच्छति। भूतये याति। अत्र तादर्थ्ये चतुर्थी न प्राप्नोति घञा प्रत्ययेन तादर्थ्यस्य उक्तत्वात्। अतः इदं सूत्रम्। तुमर्थात् किम्? पाकः, त्यागः, रागः, पचनं वर्तते। अत्र

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri



चतुर्थी न, तुमर्थकत्वाभावात् । भाववचनात् किम् ? कारको व्रजति-भवत्यत्र तुमर्थः न तु भाववचनः किन्तु कर्तृवचनः ।

**४७२. नमः स्वस्ति स्वाहा स्वधालं वषड्योगाच्च २-३-१६**

नमः, स्वस्ति, स्वाहा, स्वाधा, अलम्, वषट् इत्येतैर्युक्तात् चतुर्थी स्यात् । देवेभ्यो नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । अलमिति पर्याप्त्यर्थकानां शब्दानां ग्रहणमिष्यते । तेन अलं श्रमेण, अलं विवादेन इत्यादौ न । प्रभुः, शक्तः, समर्थो मल्लो मल्लाय इत्यादावपि भवति । इन्द्राय वषट् । सूत्रे चग्रहणं पुनर्विधानार्थम् । तेन आशीर्विवक्षायां चतुर्थी चाशिष्यायुष्य-इत्यादिना विहितां षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । स्वस्ति ब्राह्मणेभ्यो भूयात् ।

**४७३. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि २-३-२२**

शरीर परिस्पन्दः चेष्टा । गत्यर्थानां धातूनाम् अध्वभिन्ने कर्मणि द्वितीया-चतुर्थ्यौ विभक्ती स्तः चेष्टायां गम्यमानायाम् । ग्रामं गच्छति । ग्रामाय गच्छति । गत्यर्थेति किम् ? ओदनं पचति । कर्मणीति किम् ? अश्वेन व्रजति । चेष्टायामिति किम् ? मनसा पाटलिपुत्रं गच्छति । अनध्वनि इति किम् ? अध्वानं गच्छति । अध्वनीत्यर्थग्रहणम् । पन्थानं गच्छति मार्गं गच्छति । गन्त्रधिष्ठिते अध्वन्येव निषेधः इष्यते । तेन उत्पथेन पथे गच्छति इत्यत्र चतुर्थी भवत्येव ।

**४७४. ध्रुवमपायेऽपादानम् २-४-२४**

अपायो विश्लेषः । विभाग इति यावत् । अपाये इति विषयसप्तमी । ध्रुवम् = अवधिभूतम् । अपाये साध्ये अवधिभूतं कारकम् अपादानसंज्ञं स्यात् ।

**४७५. अपादाने पञ्चमी २-३-२८**

अनभिहिते अपादाने कारके अपादानसंज्ञकात् पञ्चमी विभक्तिः स्यात् । अपादानं त्रिविधम् । निर्दिष्टविषयम् । उपात्तविषयम् । अपेक्षितक्रियम् ।

यत्र धातुना अपायलक्षणः अपादानसंज्ञाविषयो निर्दिश्यते तदाद्यम् । यथा ग्रामाद्गच्छति । अश्वात्पतति । यत्र धातुः धात्वन्तरार्थाङ्गं स्वार्थमाह तदुपात्तविषयम् । यथा बलाहकाद्विद्योतते । अत्र हि निस्सरणाङ्गविद्योतने विद्युतिर्वर्तते । बलाहकान्निस्सृत्य विद्योतते इति । कुसूलात्पचति । अत्र आदानाङ्गे पचिर्वर्तते । कुसूलादादाय पचतीति । यत्र च क्रिया न श्रूयते प्रमाणान्तरेण तु प्रतीयते तत्र अपेक्षितक्रियम् । यथा-आगच्छन्तं पुरुषं प्रत्यक्षेण पश्यन्नाह-कुतो भवानिति । सोपि तदेवागमनं प्रत्यक्षसिद्धम् उपजीवन्नाह-पाटलिपुत्रादिति । अत्र आगमनक्रिया न श्रूयते, किन्तुअध्याह्रियते । इदमभिप्रेत्यैव 'गम्यमानापि क्रिया कारकविभक्तौ निमित्तम्' इत्युच्यते । कस्मात्त्वम् ? इति प्रश्नस्य उपवनात्, ग्रामात्, नद्याः इति उत्तरम् । अत्र सर्वत्र आगत इति क्रियापेक्षम् अपादानत्वम् । ध्रुवमिति किम् ? ग्रामादागच्छति शकटेन, अत्र शकटशब्दात् मा भूत् । धावतः अश्वात् पततीत्यादौ अश्वस्य धावनक्रियाश्रयत्वेन स्थिरत्वाभावेपि पतनं प्रति अवधित्वमस्त्येवेति अपादानत्वम् । 'परस्परस्मात् मेषौ अपसरतः' इत्यत्र एकमेषनिष्ठां गतिं प्रति इतरस्यावधित्वात् अपादानत्वं न विरुध्यते । कारकं किम् ? वृक्षस्य पर्णं पतति । वृक्षस्य मा भूत् ।

### जुगुप्साविराम प्रमादार्थानामुपसंख्यानम् (वा)

जुगुप्साद्यर्थानां धातूनां प्रयोगे जुगुप्सादिविषयस्य अपादानत्वं वाच्यम् । अपायो नाम कायसंप्राप्तिपूर्वको हि भवति । न चेह कायसंप्राप्तिरस्तीति ध्रुवमपाय इत्यनेनाप्राप्तासंज्ञेत्यस्यारम्भः । अधर्माज्जुगुप्सते । पापाद्विरमति । धर्मात्प्रमाद्यति ।

### ४७६. भीत्रार्थानां भयहेतुः १-४-२५

भीतिः-भीः, त्राणं-त्राः । भीश्च त्राश्च भीत्रौ । भीत्रौ अर्थौ येषां ते । भयार्थानां त्राणार्थानां च धातूनां प्रयोगे भयहेतुः कारकम् अपादानसंज्ञं स्यात् । चौरेभ्यो बिभेति, चौरेभ्य उद्विजते । धूर्तेभ्यः त्रायते । राक्षसेभ्यो रक्षति । भयहेतुरिति किम् ? अरण्ये बिभेति । नात्रारण्यात् भयम् । किन्तु तत्रत्येभ्यो हिंस्रेभ्यः । एवं कानने त्रायते इत्यत्रापि ।

## ४७७. पराजेरसोढः १-४-२६

असोढः-ग्लानिविषयः। परापूर्वस्य जयतेः प्रयोगे असोढार्थः अपादानसंज्ञः स्यात्। अध्ययनात् पराजयते। अध्ययनं सोढुं न शक्नोतीत्यर्थः। अध्ययनं सोढुमशक्यमिति तस्य संप्रदानसंज्ञा। असोढ इति किम्? शत्रून् पराजयते। शत्रूनभिभवति इत्यर्थः। शत्रूणामभिभवनीयतया असह्यत्वाभावात् नापादानता।

## ४७८. वारणार्थानामीप्सितः १-४-२७

वारणं-प्रवृत्तिविघातः। वारणमर्थो येषां तेषाम्। वारणार्थानां धातूनां प्रयोगे ईप्सितोर्थः अपादानं स्यात्। यवेभ्यो गा वारयति। शालिभ्यो धेनूर्निवर्तयति। माषेभ्यः अश्वान् परावर्तयति। अत्र यवादिसंयोगात्प्रागेव निवारणस्य कथनात् ध्रुवमपाये इत्यस्य नावकाशः। यवादीनां संरक्षणीयतया ईप्सितत्वात् अपादानत्वम्। गवादेः परकीयतया वारणीयतया च अनीप्सितत्वं स्पष्टम्। तथा युक्तमित्यनेन गवादेः कर्मत्वम्। अथवा यवानां परकीयत्वे यवादिनाशे अधर्मः स्यादिति वा यवादिस्वामी दण्डयतीति वा यवादेः रक्षितुमिष्टत्वात् ईप्सितत्वम्, गवादेः स्वकीयत्वेपि बाधकनिवृत्यै वारयितुमिष्टमत्वात् कर्मत्वम्। ईप्सित इति किम्? यवेभ्यो गा वारयति क्षेत्रे। अत्र क्षेत्रस्य मा भूत्। अत्रापि ईप्सितशब्दः नाभिप्रेतपर्यायः; किन्तु क्रियाशब्दः। यद्यपि परकीयानामपि यवानां वारयितुः अभिप्रेतत्वाभावेपि वार्यमाणानां गवादेः अभिप्रेतत्वात् अभिप्रेतपर्यायत्वेपि अपादानत्वं निर्बाधम् सूत्रे कर्तुरीप्सित इति श्रवणात् तथापि अग्नेः माणवकं वारयति, कूपादन्धं वारयति इत्यत्र अग्नि कूपयोः अपादानत्वं न स्यात् नह्यग्निकूपौ वारयितुः वार्यमाणस्य वा अभिप्रेतौ। क्रियाशब्दस्य ग्रहणेतु-वार्यमाणस्य माणवकस्य, अन्धस्य च गमनादिक्रियया अग्निकूपादेराप्यमानत्वात् ईप्सितत्वं सम्भवति, माणवक इव अन्धश्चापि अपश्यन्नपि गन्तव्यं जिगमिषति।

## ४७९. अन्तर्धौ येनादर्शनमिच्छति १-४-२८

अन्तर्धिः व्यवधानम्। निमित्तसप्तमी। येनेति कर्तरि तृतीया अन्तर्धि

निमित्तं यत्कर्तृकमात्मनोऽदर्शनमिच्छति सः अपादानसंज्ञः स्यात् । यस्मात् दर्शनाभावमिच्छति तस्यापादानत्वमित्यर्थः । उपाध्यायादन्तर्धत्ते । उपाध्याया- न्निलीयते मामुपाध्यायो माद्राक्षीदिति निलीयते इत्यर्थः । अन्तर्धाविति किम् ? चौरान् न दिदृक्षते । अत्र यद्यपि आत्मनः चौरैरदर्शनमिच्छति तथापि अन्तर्धि- निमित्तं न किन्तु उपघातनिवृत्यर्थम् । इच्छति ग्रहणं किम् ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथास्यात् ।

## ४८०. आख्यातोपयोगे १-४-२९

आख्याता-प्रतिपादयिता । उपयोगो नाम नियमपूर्वक विद्याग्रहणम् । नियमपूर्वकविद्यास्वीकारे आख्याता अपादानसंज्ञः स्यात्, उपाध्यायादधीते । नियमविशेषपूर्वकम् उपाध्यायस्योच्चारणमनूच्चारयति इत्यर्थः । षष्ठ्यपवादः । उपयोगे किम् ? नटस्य गाथां शृणोति । नात्र नियमपूर्वं विद्याग्रहणमस्ति अतः नटस्य नापादानसंज्ञा ।

## ४८१. जनिकर्तुः प्रकृतिः १-४-३०

जनेः कर्ता जनिकर्ता । जनिः-जननम् उत्पत्तिः । प्रकृतिः उपादान- कारणम् । उत्पत्त्याश्रयस्य उपादानकारणम् अपादानसंज्ञं स्यात् । तन्तुभ्यः पटो जायते । सुवर्णात् कङ्कणं भवति । गोमयात् वृश्चिका जायन्ते । ब्रह्मणः प्रपञ्चो जायते ।

## ४८२. भुवः प्रभवः १-४-३१

भवनं-भूः । पूर्वसूत्रात् कर्तृग्रहणमात्रस्यानुवृत्तिः प्रभवति = प्रथमं प्रकाशते अस्मिन्निति प्रभवः । प्रथमप्रकाशस्थानमित्यर्थः । भूकर्तुः प्रथमप्रकाशस्थानम् अपादानसंज्ञं स्यात् । हिमवतो गङ्गा प्रभवति । काश्मीरेभ्यो वितस्ता प्रभवति । प्रथमं प्रकाशते इत्येवार्थः । हिमवान् गङ्गायाः काश्मीराः वितस्तायाः न हि-कारणमिति पूर्वसूत्रेण न प्राप्तिः ।

## ल्यब्लोपे कर्मण्यधिकरणे चोपसंख्यानम् (वा)

ल्यपः प्रत्ययत्वात् तदन्तग्रहणम् । ल्यबिति ल्यबर्थपरं चेह विवक्षितम् ।

ल्यबन्तार्थस्य लोपे सति गम्यमानतदर्थं प्रति कर्मणि अधिकरणे च पञ्चमी वाच्या। प्रासादात् प्रेक्षते-प्रासादमारुह्य प्रेक्षते इत्यर्थः । आसनात् प्रेक्षते-आसने उपविश्य प्रेक्षते । गृहात् प्रेक्षते गृहे स्थित्वा प्रेक्षते । शयनात् प्रेक्षते, श्वशुराज्जिहेति। स्वामिनो लज्जते ।

**यतश्चाध्वकालनिर्माणं ततः पञ्चमी (वा)**

निर्माणं-परिच्छेदः । यतः प्रभृति अध्वनः कालस्य वा इयत्तापरिच्छेदः ततः पञ्चमी स्यात् । तद्युक्तात्कालात्सप्तमी, अध्वनः प्रथमा सप्तमीच। तदित्यनेन पञ्चमी गृह्यते । पञ्चम्यन्तेनान्वितात् कालवाचिनः सप्तमी, अध्ववाचिनस्तु प्रथमासप्तम्याविति वाच्यम् । कार्तिक्या मासे आग्रहायणी । वनात् ग्रामः योजनं योजने वा । मथुरायाः बृन्दावनं त्रीणि योजनानि त्रिषु योजनेषु वा।

**४८३. अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते २-३-२९**

अन्य-आरात्-इतर-ऋते-दिक्शब्द-अञ्चूत्तरपद-आच्-आहि इत्येतैर्योगे पञ्चमी स्यात् । षष्ठ्यपवादः । अन्य इत्यर्थग्रहणम् । तेन पर्याययोगेपि भवति । दिशि दृष्टः शब्दः दिक्शब्दः । व्याख्यानात् पूर्वादय एव गृह्यन्ते न ऐन्द्रीककुबादयः। अन्यो देवदत्तात् । भिन्नो घटात् । विलक्षणो जनकात् । आराद्गृहात्। इतरः उपाध्यायात् । ऋते कृष्णात् । पूर्वो ग्रामात् पर्वतः । उत्तरो गृहात् वृक्षः । पूर्वो ग्रीष्मात् वसन्तः । उत्तरो वसन्तात् ग्रीष्मः । प्राक् मध्याह्नात्। दक्षिणा ग्रामात् । उत्तरा ग्रामात् । दक्षिणाहि उत्तराहि ग्रामात् ।

**प्रभृत्यर्थयोगेपि (वा)**

प्रभृत्यर्थैः शब्दैः योगेपि पञ्चमी स्यात् । वर्षात् प्रभृति विरामः। मासादारभ्य आगच्छति ।

**बहिर्योगे पञ्चमी षष्ठी च (वा)**

नगराद्बहिः । शालाया बहिः । षष्ठ्यपीत्युक्तत्वात् करस्य करभो बहिः इति सिध्यति ।

### ४८४. पञ्चम्यपाङ् परिभिः २-३-२०

कर्मप्रवचनीययुक्ते इत्यतः कर्मप्रवचनीय इत्यस्य सम्बन्धः। कर्मप्रवचनीयैः अप-आङ् परि इत्येतैर्योगे पञ्चमी स्यात्। मर्यादाभिविध्योरर्थयोः आङ् कर्मप्रवचनीयः। वर्जनार्थे अपपरी तथा। अप त्रिगर्तेभ्यो वृष्टो देवः। आमुक्तेः संसारः। आसकलात् ब्रह्म। परिपरि मगधेभ्यो वृष्टिः।

### ४८५. विभाषा २-३-२५

हेतौ पञ्चमीति च वर्तते। हेतुभूतात् पञ्चमी वा स्यात्। धूमादग्निमान्। घटो नास्ति अनुपलब्धेः।

### ४८५ A. गुणेऽस्त्रियाम् २-३-२५

विभाषा इत्यस्य सम्बन्धः। गुणवाचिनि हेतौ अस्त्रीलिङ्गे विद्यमानात् पञ्चमी वा स्यात्। जाड्याद्बद्धः। पक्षे हेतौ इति तृतीया, जाड्येन बद्धः। पाण्डित्यात् मुक्तः-पाण्डित्येन मुक्तः। गुणग्रहणं किम्? धनेन कुलम्। अस्त्रियामिति किम्? बुद्ध्या मुक्तः। प्रज्ञया मुक्तः। एतत्सूत्रारम्भात् पूर्वसूत्रम् अगुणे स्त्रियां च क्वचिदेव प्रवर्तते इति ज्ञायते।

### ४८६. पृथग्विनानानाभिस्तृतीयान्यतरस्याम् २-३-३२

पञ्चमी-द्वितीया इत्यनुवर्तते। अन्यतरस्यां ग्रहणं समुच्चयार्थम्। पृथक्-विना-नाना इत्येतैर्योगे तृतीया-पञ्चमी-द्वितीया चस्युः। रूपं रसेन पृथक्। रूपं रसात् पृथक्। रामं, रामेण, रामात् वा विना गतः। नाना सुहृदं, सुहृदा, सुहृदः वा आयातः।

### ४८७. करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य २-३-३३

असत्ववचनम्-अद्रव्यवचनम्। पञ्चमीति वर्तते। स्तोक-अल्प-कृच्छ्र-कतिपय एभ्यः अद्रव्यवचनेभ्यः करणे कारके पञ्चमी वा स्यात्। पक्षे तृतीया। यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यम् तदा स्तोकादीनामसत्ववचनता। स्तोकान्मुक्तः-स्तोकेनमुक्तः। अल्पात् अल्पेन वा मुक्तः। कृच्छात् कृच्छ्रेण वा त्यक्तः। कतिपयात् कतिपयेन वा मुक्तः। यदा तु धर्मवति द्रव्ये स्तोकादयो भवन्ति

तदा सत्त्ववचनता । सत्त्ववचनेभ्यस्तु करणे तृतीयैव । स्तोकेन विषेण हतः । अल्पेन मधुना मत्तः । कृच्छ्रेण रोगेण पीडितः । कतिपयेन साधनेन युक्तः । करणे इति किम् ? क्रियाविशेषणे कर्मणि मा भूत्—स्तोकं मुञ्चति ॥

### ४८८. दूरान्तिकार्थेभ्यो द्वितीया च २-३-३५

चकारः पञ्चमीतृतीययोः समुच्चयार्थः । असत्त्ववचनस्येत्यनुवर्तते । दूरार्थेभ्यः, अन्तिकार्थेभ्यश्च असत्त्ववचनेभ्यः शब्देभ्यः द्वितीया-पञ्चमी-तृतीयाः च स्युः । दूरं ग्रामस्य । दूराद्ग्रामस्य । दूरेण ग्रामस्य । अन्तिकं ग्रामस्य । अन्तिकात् ग्रामस्य । अन्तिकेन ग्रामस्य । सत्त्ववचनत्वे तु यथाप्राप्तं विभक्तयो भवन्ति । दूरः पन्थाः । दूराय पथे । दूरात् पथः । दूरस्य पथः ।

### ४८९. षष्ठी शेषे २-३-५०

उक्तादन्यः शेषः । कर्मकरणादयः प्रातिपदिकार्थपर्यन्ताः उक्ताः एतेभ्यो अन्यः स्वस्वामिभावादिः सम्बन्धः शेषः । शेषार्थे प्रातिपदिकात् षष्ठी विभक्तिः स्यात् । राज्ञः पुरुषः । देवदत्तस्य गृहम् । चैत्रस्य कम्बलः । इह सर्वत्र स्वस्वामिभावः । पशोः पादः । भगवतः चरणः । शिशोः करः । इह अवयवावयविभावः । पितुः पुत्रः । दशरथस्य तनयः । इह जन्यजनकभावः ।

### ४९०. ज्ञोऽविदर्थस्य करणे २-३-५१

विद्=ज्ञानम् अर्थः यस्य सः विदर्थः स न भवतीत्यविदर्थः । ज्ञानार्थभिन्नस्येत्यर्थः । जानातेः अज्ञानार्थस्य करणे कारके शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो जानीते । मधुनो जानीते । अत्र जानातेः प्रवृत्तिरर्थः । सर्पिषा मधुना करणेन प्रवर्तते इत्यर्थः । अविदर्थस्येति किम् ? स्वरेण पुत्रं जानाति ।

### ४९१. अधीगर्थदयेशां कर्मणि २-३-५२

शेषे इति वर्तते । अधीगिति अधिपूर्वस्य इक् (स्मरणे) इत्यस्य ग्रहणम् । अधीगर्थाः-स्मरणार्थाः । स्मरणार्थस्य दयतेः, ईशतेश्च कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी स्यात् । मातुरध्येति । मातुः स्मरति । सर्पिषो दयते ।

दीनानां दयते । मधुनः ईष्टे । लोकानामीष्टे । कर्मणीति किम् ? मातुः गुणैः स्मरति । करणानां गुणानां षष्ठी न भवति । शेष इति किम् ? मातरं स्मरति ।

### ४९२. कर्तृकर्मणोः कृति २-३-६५

कृत्प्रत्ययान्तप्रयोगे कर्तरि कर्मणि च षष्ठी स्यात् । कर्तरि-भवतः शायिका । भवतः आसिका । तस्य स्थितिः । कवेः कृतिः । कर्मणि-अपां स्रष्टा । पुरां भेत्ता । जगतः कर्ता । वज्रस्य भर्ता ।

**द्विकर्मकाणां कृदन्तानां प्रयोगे प्रधानकर्मणि नित्या गुणकर्मणि वा षष्ठी इष्यते ।**

नेता अश्वस्य ग्रामस्य ग्रामं वा चैत्रः । अश्वशब्दात् नित्यं षष्ठी ; ग्रामशब्दात्तु विकल्पेन । पक्षे द्वितीया । कर्तृकर्मणोः इति किम् ? शस्त्रेण नेत्ता । कृतीति किम् । तद्धितप्रयोगे मा भूत् । कृतपूर्वी कटम् । भुक्तपूर्वी ओदनम् । इह पूर्वादिनिः, सपूर्वाच्चेति इति प्रत्ययः । कर्ता तद्धितेनैवोक्तः इति षष्ठ्याः प्रसङ्गाभावेऽपि कर्म तु तेन अनभिहितमिति असति कृद्ग्रहणे कटादेः कर्मणः षष्ठी स्यात् ।

### ४९३. उभयप्राप्तौ कर्मणि २-३-६६

कृतीत्यनुवर्तते । उभयोः प्राप्तिः यस्मिन् कृति सः उभयप्राप्तिरिति बहुव्रीहिः । उभय शब्देन कर्तृकर्मणी परामृश्येते । एकस्मिन् कृति कर्तृकर्मणो-रुभयोः षष्ठ्यां प्रसक्तौ कर्मण्येव षष्ठी स्यात् न कर्तरि । पूर्वसूत्रेण प्राप्तां षष्ठीं नियमयितुमिदं सूत्रम् । आश्चर्यो गवां दोहोऽगोपालकेन । गोः कर्मणः षष्ठी । कर्तुः अगोपालकस्य न । रोचते मे ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं यज्ञदत्तेन । उभयप्राप्ताविति बहुव्रीह्याश्रयणं किम् ? आश्चर्यमिदम् ओदनस्य नाम पाकः ब्राह्मणानां च प्रादुर्भावः । इह नियमो मा भूत् । उभयोः प्राप्ताविति तत्पुरुषाश्रयणे अत्रापि कर्मण्येवेति नियमात् ब्राह्मणशब्दात् षष्ठी न स्यात् । बहुव्रीहौ तु एकस्यैव कृतः निमित्तत्वलाभात् प्रकृते पाक निरूपित-कर्मत्वमोदनस्य, प्रादुर्भावनिरूपितकर्तृत्वं ब्राह्मणानामिति एककृदन्तनिरूपितत्वाभावात्

नियमस्याविषयत्वमिति न दोषः ।

### स्त्रीप्रत्यययोरकाकारयोः प्रयोगे न

'स्त्रियां क्तिन्' इत्यधिकारे विहितयोः अकाकारप्रत्यययोः कृतोः प्रयोगे कर्मण्येवेति नियमो न भवति । कर्तर्यपि षष्ठी भवति । भेदिका देवदत्तस्य काष्ठानाम् । भेदिकेत्यत्र ण्वुल् । चिकीर्षा देवदत्तस्य कटस्य । अप्रत्ययादिति अकारप्रत्ययः ।

### शेषे विभाषा (वा)

अकाकारभिन्ने कृति प्रयुज्यमाने उभय प्राप्तौ कर्मणीति नियमो वा स्यात् । कर्तर्यपि षष्ठी वा भवतीति भावः । विचित्रा हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा । विचित्रा जगतः कृतिः भगवतः भगवता वा । शब्दानामनुशासनमाचार्यस्य आचार्येण वा ।

### ४९४. न लोकाव्ययनिष्ठा खलर्थतृनाम् २-३-६९

कर्तृकर्मणोः कृतीति विहिता षष्ठी प्रतिषिध्यते । ल-उ-उक-अव्यय-निष्ठा-खलर्थ-तृन् इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न स्यात् । ल इति लडादेर्ग्रहणम् । तेषां साक्षात्प्रयोगे अदर्शनात तदादेशाः शतृ-शानच्-कानच्-क्वसवः गृह्यन्ते । लादेशः—ओदनं पचन् । ओदनं पचमानः । ओदनं पेचानः । ओदनं पेचिवान् । उ इति उकारान्तश्च कृत् गृह्यते । कटं चिकीर्षुः । ओदनं बुभुक्षुः । कन्यामलंकरिष्णुः । उकः—दैत्यान् घातुकः । अव्ययम्—कटं कृत्वा । ओदनं भुक्त्वा । सुखं कर्तुम् । निष्ठा—रामेण हतो रावणः । ओदनं भुक्तवान् । खलर्थः—ईषत्करः प्रपञ्चः भगवता । दुष्करः पटो भवता । ईषत्पानः सोमो भवता । तृन्निति प्रत्याहारो विवक्षितः । तेन शानन्-चानश्-तृनामपि प्रतिषेधो भवति । सोमं पवमानः । आत्मानं मण्डयमानः । कर्ता लोकान् ।

### उकप्रतिषेधे कमेरप्रतिषेधः (वा)

दास्याः कामुकः ।

### द्विषः शतुर्वा (वा)

शतृप्रत्ययान्त द्विषधातुयोगे षष्ठीनिषेधो वा वक्तव्यः । चौरं द्विषन्, चौरस्य द्विषन् । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायेन न लोकेति प्रतिषेधः कारकषष्ठ्या एव, न शेषषष्ठ्याः । तेन नरकस्य जिष्णुः, इत्यादि सिध्यति ।

### ४९५. क्तस्य च वर्तमाने २-३-६७

वर्तमानकालविहितस्य क्तस्य प्रयोगे षष्ठी स्यात् । न लोकेति निषेधस्यापवादः । राज्ञां मतः । राज्ञां बुद्धः । राज्ञां पूजितः । मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमानार्थे क्तप्रत्ययः । क्तस्येति किम्? ओदनं पचमानः । वर्तमानेति किम्? ग्रामं गतः ।

### नपुंसके क्ते भावे उपसंख्यानम् (वा)

भावार्थे विहितस्य नपुंसके वर्तमानस्य क्तस्य प्रयोगे षष्ठी स्यात् । छात्रस्य हसितम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतम् ।

### ४९६. अधिकरणवाचिनश्च २-३-६८

अधिकरणार्थस्य क्तस्य प्रयोगे षष्ठी स्यात् । न लोकेत्यस्यापवादः । इदमेषामासितम् । इदमेषां शयितम् । इदमहेः सृप्तम् । इदमेषां भुक्तम् ।

### ४९७. अकेनोर्भविष्यदाधमर्ण्ययोः २-३-७०

अकश्च इन् च तयोः । नेत्यनुवर्तते । भविष्यति काले विहितस्य अकस्य, भविष्यति आधमर्ण्ये विहितस्य इनश्च प्रयोगे षष्ठी न स्यात् । सतां पालकोऽवतरति । कटं कारको व्रजति । ओदनं भोजको याति । अत्र तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् इति भविष्यति ण्वुल् । व्रजं गामी । शतं दायी । अत्र आवश्यकाधमर्ण्ययोर्णिनिरिति भविष्यति णिनिः । भविष्यदाधमर्ण्ययोरिति किम्? यवानां लावकः । सक्तूनां पायकः । अत्र ण्वुल् । तृचाविति कालसामान्ये ण्वुल् । अवश्यं कारी कटस्य । आवश्यके णिनिरिति वर्तमानेऽपि णिनिः ।

## ४९८. कृत्यानां कर्तरि वा २-३-७१

कर्तृकर्मणोः कृति इति नित्यं प्राप्ता षष्ठी कर्तरि विकल्प्यते। कृत्याः इत्यधिकृत्य विहिताः कृत्प्रत्ययविशेषाः कृत्याः। कृत्यप्रत्ययानां प्रयोगे कर्तरि वा षष्ठी स्यात्। भवता कटः कर्तव्यः। भवतः कटः कर्तव्यः। मया सेव्यो हरिः। मम सेव्यो हरिः। कर्तरि इति किम्? गेयो माणवकः साम्नाम्। गायतीति गेयः, इति कर्तरि यत्। साम्नामित्यत्र कर्मणि नित्यमेव षष्ठी भवेत् विकल्पेन मा भूत्।

### उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधः वाच्यः (वा)

कृत्यप्रत्यययोगे कर्तृकर्मणोः उभयोः प्रसक्ता षष्ठी न स्यात्। नेतव्या व्रजं गावः गोपालेन। नेतव्या ग्राममजा देवदत्तेन।

### निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् (वा)

निमित्तपर्यायाणां प्रयोगे तेभ्यः तत्समानाधिकरणेभ्यश्च सर्वासां विभक्तीनां प्रायः प्रयोगः स्यात्। किं निमित्तं वसति। केन निमित्तेन, कस्मै निमित्ताय, कस्मात् निमित्तात्, कस्य निमित्तस्य, कस्मिन् निमित्ते वसति। एवं किं कारणं, केन कारणेन, कस्मै कारणायेत्यादि। को हेतुः, केन हेतुना; किं प्रयोजनम्, केन प्रयोजनेन इत्याद्यपि। प्राय ग्रहणात् असर्वनाम्नः प्रथमाद्वितीये न भवतः। ज्ञानेन निमित्तेन हरिः सेव्यः, ज्ञानाय निमित्तायेत्यादि। एवम् अन्नेन कारणेन अन्नाय कारणाय इत्यादि। ज्ञानं निमित्तम्, अन्नं कारणं वसति इति न भवति।

## ४९९. षष्ठ्यतसर्थप्रत्ययेन २-३-३०

दक्षिणोत्तराभ्यामतसुच् इति विहितः अतसुच् प्रत्ययः, तस्यार्थो दिग्देशकालरूपः, सः अर्थो यस्य प्रत्ययस्य सः अतसर्थप्रत्ययः। अस्ताति प्रभृतयः पञ्च। अतसर्थेन प्रत्ययेन युक्ते षष्ठी स्यात्। अन्याराादितरर्ते इत्यादिना विहितायाः पञ्चम्या अपवादः। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरस्तात् शालायाः। उपरि वृक्षस्य। उपरिष्टात् गृहस्य। ततः पश्चात् स्मर्यते

इति भाष्यप्रयोगात् पञ्चात् शब्दयोगे पञ्चम्यपि ।

### ५००. एनपा द्वितीया २-३-३१

षष्ठीति वर्तते । एनप् इति एनबन्यतरस्यामदूरेऽपञ्चम्याः इति विहितः गृह्यते । एनबन्तेन योगे द्वितीया षष्ठी च स्तः । दक्षिणेन वटम् । दक्षिणेन वटस्य । उत्तरेण पर्वतम् । उत्तरेण पर्वतस्य । 'धनपतिगृहादुत्तरेणास्मदीयम्' इत्यत्र उत्तरेणेति न एनबन्तम् । किन्तु तृतीयान्तम्, अतो गृहादिति पञ्चमी नानुपपन्ना । धनपतिगृहानुत्तरेणेति पाठे तु एनबन्तत्वेऽपि न दोषः ।

### ५०१. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् २-३-३४

पञ्चम्यनुवर्तते । दूरार्थकैः अन्तिकार्थैश्च शब्दैर्योगे षष्ठी वा स्यात् पञ्चमी च । दूरं ग्रामस्य । दूरं ग्रामात् । विप्रकृष्टं गृहस्य-गृहात् । निकटं शालायाः । संनिकृष्टं घोषस्य घोषात् । अन्तिकं देवालयस्य देवालयात् । अभ्याशं तटाकस्य तटाकात् ।

### ५०२. कृत्वोर्थप्रयोगे कालेऽधिकरणे २-३-६४

संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् इति विहितस्य कृत्वसुचः प्रत्ययस्यार्थो येषां ते कृत्वोऽर्थाः तेषां प्रयोगे इत्यर्थः । शेषग्रहणमनुवर्तते । कृत्वोर्थानां प्रत्ययानां प्रयोगे कालवाचिन्यधिकरणे शेषे षष्ठी स्यात् । पञ्च कृत्वोऽह्नो भुङ्क्ते । द्विरह्नोऽधीते । कृत्वोर्थग्रहणं किम् ? अह्नि शेते । रात्रौ शेते । प्रयोगग्रहणं किम् ? अहनि भुक्तम् । प्रकरणादेः द्विस्त्रिश्चतुर्वेति गम्यते । न तु प्रयुज्यते । अत्र मा भूत् । कालग्रहणं किम् ? द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरणे इति किम् ? द्विरह्नो भुङ्क्ते । शेष इति किम् ? द्विरहन्यधीते ।

### ५०३. आधारोऽधिकरणम् १-४-४५

कारके इत्यधिकृतं प्रथमान्ततया विपरिणम्यते । तच्चाधारस्य विशेषणम् । क्रियान्वयि च कारकम् । आधारः कस्येत्याकांक्षायाम् उपस्थितत्वात् क्रियायाः इति लभ्यते । क्रिया च कर्तृकर्मगता विवक्षिता । कर्तृकर्मगतक्रियाधारत्वं

च कर्तृकर्मद्वारैव विवक्षितं न साक्षात् । कर्तृकर्मद्वारा कर्तृकर्मगत क्रियाया आधारः कारकम् अधिकरणसंज्ञः स्यात् ।

## ५०४. सप्तम्यधिकरणे च २-३-३६

अधिकरणे कारके अधिकरणसंज्ञकात् प्रातिपदिकात् सप्तमी स्यात् । चकारेण दूरान्तिकार्थेभ्य इत्यस्य अनुकर्षणम् । दूरान्तिकार्थेभ्यश्च प्रातिपदिकेभ्यः सप्तमी । अधिकरणं त्रिविधम् औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति । आधारस्य आधेयेन सह संयोगादिलक्षणः उपश्लेषः यत्रास्ति तदौपश्लेषिकम् यथा-कटे आस्ते । अत्र आधारस्य कटस्य आसनकर्तुश्च संयोगरूपः सम्बन्धः कर्तृद्वारकोऽयमाधारः । आसनक्रियायाः कर्तृस्थत्वात् । स्थाल्यां पचति । अत्र स्थाल्या पाककर्मणां तण्डुलानां संयोगः सम्बन्धः । कर्मद्वारकोऽयमाधारः पाकक्रियायाः कर्मस्थत्वात् । रूपे रूपत्वमस्ति, शरीरे चेष्टास्ति इत्यादौ समवायलक्षणः उपश्लेषः । रूपरूपत्वयोः, शरीरचेष्टयोः इति औपश्लेषिकाधिकरणत्वमेव यत्र विषयतासम्बन्धपुरस्कारेण आधारत्वं तत्र वैषयिकम् । यथा-मोक्षे इच्छास्ति अत्र इच्छागतसत्तारूपक्रियायाः विषयतया मोक्षः आधारः । इच्छारूप कर्तृद्वारकोऽयमाधारः । यथा वा-गुरौ वसति । अत्र विषयो ह्यनन्यत्रभावः चक्षुष्प्रभृतीनां रूपादिभ्योऽनन्यत्रभावात् चक्षुरादीनां रूपादयो विषया इत्युच्यन्ते एवं शिष्यादीनां गुर्वादिभ्योऽनन्यभावात् एषां ते विषया भवन्ति । स आधारोऽधिकरणमित्युच्यते । यः आश्रयः स आधारः, आश्रयश्च संयोगतः समवायतो वा भवति । शिष्यादीनां गुरुप्रभृतिभिः सह न संयोगः न च समवायोऽस्तीति कथमधिकरणत्वमिति चेत्? मैवम् । यदायत्ता हि यस्य स्थितिः सः संयोगसमवायाभ्यां विनापि तस्याश्रयो भवति । राजायत्तस्थितिः पुरुषः राजाश्रय इति व्यपदिश्यते लोके । एवमेव गुर्वायत्तस्थितिः शिष्यः गुर्वाश्रयो भवति इति गुर्वादीनाम् आश्रयभावो युक्तः । आधारस्य आधेयेन सह सकलावयवव्याप्तिरूपः सम्बन्धः यत्र तत्र अभिव्यापकम् । यथा-तिलेषु तैलम् दध्नि सर्पिः । अत्र तिलान् व्याप्य तैलं, दधि च व्याप्य सर्पिः वर्तते

तैलरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य तैलपिद्धारा तिलानां दध्नश्च आधारत्वात् कर्तृद्वारकोऽयमाधारः । नद्यामास्ते, गङ्गायां घोषः इत्याद्यर्थं सामीपिकमधिकरणं चतुर्थमिति केचित् । दूरान्तिकार्थेभ्यः—वनस्य दूरे, विप्रकृष्टे वा नदी प्रवहति । पर्वतस्य अन्तिके समीपे मुनीनामाश्रमाः सन्ति ।

## ५०५. अधिशीङ् स्थासां कर्म १–४–४६

शीङ् च स्था च आस् चेति द्वन्द्वः । अधिपूर्वाः शीङ्स्थासः इति मध्यमपदलोपीसमासः । आधार इति वर्तते । अधिपूर्वाणां शीङ्-स्था-आस् इत्येतेषामाधारः कारकं कर्मसंज्ञं स्यात् । अधिकरणसंज्ञापवादः । पर्यङ्कमधिशेते ग्राममधितिष्ठति । पर्वतमध्यास्ते । अधिपूर्वाणामिति किम् ? पर्यङ्के शेते । ग्रामे तिष्ठति । पर्वते आस्ते ।

## ५०६. उपान्वध्याङ् वसः १–४–४८

उप-अनु-अधि-आङ् इत्येवं पूर्वस्य वसतेः आधारः कर्मसंज्ञः स्यात् । ग्राममुपवसति । पर्वतमनुवसति । नगरीमधिवसति । राजधानीमावसति । वस निवासे इति भौवादिकस्यैव वसधातोर्ग्रहणम् । वस आच्छादने इत्यादादिकस्य न ग्रहणम्, लुग्विकरणालुग्विकरणयोः अलुग्विकरणस्य इति नियमात् ।

### क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् (वा

अत्र विषयशब्देन प्रकृतिरुच्यते । इन् प्रत्ययप्रकृतिभूतक्तान्तस्य कर्मणि सप्तमी विधेया । अधीती व्याकरणे । परिगणिती याज्ञिके । आम्नाती छन्दसि ।

### साध्वसाधुप्रयोगे च सप्तमी (वा)

साधुः = हितकारी । असाधुः = अहितकारी । साधुर्देवदत्तो मातरि । असाधुर्भरतो मातरि । अत्र साधुत्वासाधुत्वयोः मातृविषयत्वेपि क्रियाया अभावेन अधिकरणत्वाभावात् वचनमिदम् ।

### निमित्तात्कर्मयोगे (वा)

यत् क्रियाप्रयोजनम्, यदर्थः क्रियाया आरम्भः तत्फलमिह निमित्तम् ।

योग: संयोगसमवायात्मक: सम्बन्ध: । निमित्तवाचिन: सप्तमी स्यात् कर्मणा निमित्तस्य सम्बन्धश्चेद्भवति । हेतुतृतीयापवाद: । चर्मणि द्वीपिनं हन्ति । चर्मार्थं व्याघ्रं हन्ति इत्यर्थ: । द्वीपिहननस्य निमित्तं चर्म, तस्य कर्मणा द्वीपिना समवाय: सम्बन्ध: । अयुतसिद्धयोर्हि समवाय: । एवं दन्तयोर्हन्ति कुञ्जरम् । निमित्तभूतयो: दन्तयो: कर्मणा कुञ्जरेण समवाय: सम्बन्ध: । केशेषु चमरीं हन्ति । सीम्नि पुष्कलकोहत: । पुष्कलक: = शङ्कु:, सीमाज्ञानार्थं शंकु: हत: = निखात: इति केचित् । अत्र निहन्यमानेन शंकुना सीम्न: संयोग: सम्बन्ध: । सीमा = अण्डकोश:, पुष्कलक: = गन्धमृग: । अण्डकोशार्थं गन्धमृगो व्यापादित इत्यन्ये । कर्मसम्बन्धे इति किम् ? वेतनेन धान्यं लुनाति । अत्र वेतनस्य, लूयमानस्य धान्यस्य च तादर्थ्यमेव सम्बन्ध: न संयोग: समवायो वा । हेतुतृतीयात्र ।

### ५०७. यस्य च भावेन भावलक्षणम् २-३-३७

सप्तमीति वर्तते । भाव: = क्रिया । यस्य च क्रियया क्रियान्तरं लक्ष्यते तत: क्रियावत: सप्तमी स्यात् । निर्ज्ञातकालाहि क्रिया अनिर्ज्ञातकालाया: क्रियाया: कालपरिच्छेदकत्वात् लक्षणं भवति । क्रिया च कर्त्राश्रया कर्माश्रया च भवति । कर्त्राश्रया—ब्राह्मणेषु अधीयानेषु गत: । कर्माश्रया—गोषु दुह्यमानासु गत: । कदा गत: ? इति प्रश्नस्योत्तरमिदम् । अत्र दोहनक्रियाया: साक्षाल्लक्षकत्वम् । गवां तु तदाश्रयतया । गोदोहनदशायां गत: इत्यर्थ: । दुग्धासु आगत: । गोदोहनकालोत्तरमागत इत्यर्थ: । अग्निषु हूयमानेषु गत: । अग्निषु हुतेषु आगत: । भावेनेति किम् ? यो जटाभि: स भुङ्क्ते । पुनर्भावग्रहणं किम् ? यो भुङ्क्ते स देवदत्त: । उदिते आदित्ये जुहोति इत्यत्र तु सामीपिकमधिकरणत्वम् । उपरागे स्नायात् इत्यत्र उपरागपदेन उपरागाश्रयकालो लक्ष्यते । इति अधिकरणसप्तम्येव । एवमेव ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते । सत्सु तरत्सु असन्त: तिष्ठन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति । इत्यादि ।

## ५०८. षष्ठी चानादरे २-३-३८

च ग्रहणात् सप्तमीत्यनुकृष्यते। अनादरे इति विषयसप्तमी। यस्य चेति पूर्वसूत्रमनुवर्तते। अनादरे गम्यमाने यस्य क्रियया क्रियान्तरं लक्ष्यते ततः क्रियावतः षष्ठीसप्तम्यौ स्तः। रुदतः प्राव्राजीत्। रुदति प्राव्राजीत्। क्रोशतः क्रोशति वा प्राव्राजीत्। रुदन्तं, क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः।

## ५०९. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च २-३-३९

स्वामिन्, ईश्वर, अधिपति, दायाद, साक्षिन् प्रतिभू प्रसूत इत्येतैर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यामेव प्राप्तायां पक्षे सप्तमीविधानार्थमिदम्। गवां स्वामी-गोषु स्वामी। प्रजानामीश्वरः-प्रजास्वीश्वरः। लोकानां-लोकेषु वा अधिपतिः। गवां गोषु वा दायादः। विद्यार्थिनां विद्यार्थिषु वा प्रतिभूः। गवां गोषु वा प्रसूतः।

## ५१०. यतश्च निर्धारणम् २-३-४१

षष्ठीसप्तम्यौ वर्तेते। जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। तत् यतः=यस्मात् निर्धारणं ततः षष्ठीसप्तम्यौ स्तः। जात्या-नृणां नृषु वा ब्राह्मणः श्रेष्ठः। मनुष्याणां मनुष्येषु वा क्षत्रियः शूरतमः। गुणेन-गवां गोषु वा कृष्णा संपन्नक्षीरतमा। क्रियया-अध्वगानाम् अध्वगेषु वा धावन्तः शीघ्रतमाः। संज्ञया-छात्राणां छात्रेषु वा मैत्रः पटुः।

## ५११. पञ्चमी विभक्ते २-३-४२

यतश्च निर्धारणम् इति वर्तते। विभक्तम्=विभागः भेदः इह विवक्षितः। निर्धारणावधेः निर्धार्यमाणस्य यत्र भेद एव तत्र निर्धारणावधेः पञ्चमी स्यात्। षष्ठीसप्तम्यपवादः। माथुराः पाटलीपुत्रकेभ्यः आढ्यतराः। देवदत्तः यज्ञदत्तात् पटुतरः।

## ५१२. नक्षत्रे च लुपि २-३-४५

तृतीयासप्तम्यौ अनुवर्तेते। अधिकरणे इति चानुवर्तते। नक्षत्रे इत्यनन्तरं प्रकृत्यर्थे सतीत्यध्याहारः। लुप् शब्देन लुप् संज्ञया लुप्त प्रत्ययार्थो

विवक्षितः । नक्षत्रे प्रकृत्यर्थे सति लुप् संज्ञया लुप्यमानस्य प्रत्ययस्य योऽर्थः तत्र वर्तमानात् नक्षत्रशब्दात् अधिकरणे तृतीयासप्तम्यौ स्तः । पुष्येण, पुष्ये वा पायसमश्नीयात् । अत्र नक्षत्रेण युक्तः कालः इति विहितस्याणः लुबविशेषे इति लुप् । मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् । मूले श्रवणे वा । नक्षत्रे इति किम् ? पञ्चालेषु वसति । लुपीति किम् ? पुष्ये शनिः । मघासु ग्रहः। अधिकरणे इत्युक्तेः अद्य पुष्यः, अद्य कृत्तिका इह न भवति । नात्राधिकरणत्वं विवक्षितम् । सप्तम्यधिकरणे चेत्यनेनैव सिद्धे पक्षे तृतीयाविधानार्थमिदं सूत्रम्।

## ५१३. सप्तमीपञ्चम्यौ कारकमध्ये २-३-७

कालाध्वनोरित्यनुवृत्तं पञ्चम्यन्ततया विपरिणम्यते । कारकशब्दः कर्तृत्वादि कारकशक्तिपरः । कारकयोः मध्यमिति विग्रहः । कारकशक्तिमध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ स्तः । अद्य भुक्त्वा मैत्रः, द्व्यहे द्व्यहाद्वा भोक्ता । अद्य भुक्त्वा द्व्यहे अतीते तत्समीपे तृतीयेऽह्नि भोक्ता इत्यर्थः। अद्यतनभुजिक्रियानिरूपितकर्तृत्वस्य द्व्यहोत्तरदिनगतभुजिक्रियानिरूपितकर्तृत्वस्य च मध्येऽयंकालः । एवं अद्य भुक्त्वा मैत्रः द्व्यहे द्व्यहाद्वा भोक्ता इत्यत्रापि। इहस्थः इष्वासः क्रोशे क्रोशाद्वा लक्ष्यं विध्यति । कर्तृकर्मशक्त्योः मध्येऽयं देशः।

(सूत्राणि ५१३)

इति कारक प्रकरणम्

---

# समास प्रकरणम्

## ५१४. समर्थः पदविधिः २–२–१

विधीयते इति विधिः कार्यम् । पदस्य विधिः पदविधिः इति शेष षष्ठ्या समासः । समर्थशब्दः समर्थाश्रितं बोधयति लक्षणया । सामर्थ्यस्वरूपं तत्प्रभेदश्च इसुसोः सामर्थ्ये इति सूत्रे एव विचारितम् । समासस्थले एकार्थीभाव सामर्थ्यमपेक्षितम् ।

## ५१५. प्राकडारात्समासः २–२–३

अधिकारसूत्रमिदम् । कडाराः कर्मधारये इति यावत् समास इत्यधिक्रियते । समस्यते एकीक्रियते अनेकं पदमिति समासः । इति अन्वर्थेयं संज्ञा । आकडारात् इत्यनेनापि प्रागिति सिद्धे प्राग्रहणम् एकसंज्ञाधिकारेपि अव्ययीभावादि संज्ञासमुच्चयार्थमिति बोध्यम् ।

## ५१६. सह सुपा २–२–४

सुबामन्त्रिते इत्यतः सुबित्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । सुप्, सह, सुपा इति त्रयमपि अधिकृतं वेदितव्यम् । इत ऊर्ध्वं समासविधायकेषु सूत्रेषु इदमुपस्थितं भवति । समासविधायकमपीदम् । सुबन्तं सुबन्तेन सह समस्यते । पूर्वम् भूतः इति विग्रहः । समासे सति कृत्तद्धितसमासाश्चेति समुदायस्य पूर्वं भूत इत्यस्य प्रातिपदिकसंज्ञा ।

## ५१७. सुपोधातुप्रातिपदिकयोः २–४–७२

धातुप्रातिपदिकयोरित्यवयवषष्ठी । 'ण्यक्षत्रियार्षञितो यूनि लुक्' इत्यतो लुगित्यनुवर्तते । धातुप्रातिपदिकयोरवयवस्य सुपो लुक् स्यात् धात्ववयवस्य सुपः– पुत्रमात्मनः इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति सुबन्तात् पुत्रशब्दात् क्यच्, क्यजन्तस्य 'सनाद्यन्ता धातव' इति धातुसंज्ञाविधानात् सुपः धात्ववयवत्वम् इति पुत्रशब्दोत्तरस्य अमः लुक् भवति । ततः पुत्रशब्दाकारस्य इत्यादि । पुत्रीयति

इति रूपं सिध्यति । एवं गव्यति नाव्यति कुटीयति इत्यादि । प्रादिकावयवस्य सुपः—' राज्ञः पुरुषः ' इत्यत्र समासे राजशब्दोत्तरस्यासः पुरुषशब्दोत्तरसोश्च लुक् । प्रकृते पूर्वशब्दोत्तरस्य अमः, भूतशब्दोत्तरस्य सोश्च लुक् ।

### ५१८. प्रथमानिर्दिष्टं समास उपसर्जनम् २—२—४३

समासपदं समासविधायकशास्त्रपरम् । समासविधायकशास्त्रे प्रथमान्त-निर्दिष्टं उपसर्जनसंज्ञं स्यात् । वक्ष्यति ' द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ' इति । द्वितीया समासविधायकशास्त्रे द्वितीयेति प्रथमान्तेन निर्दिष्टम् । एवं तृतीयासमासशास्त्रे तृतीयेति ।

### ५१९. एकविभक्ति चापूर्वनिपाते २—२—४४

' प्रथमानिर्दिष्टं समास ' इति सूत्रात् समासे, उपसर्जनं इति अनुवर्तते । अत्र समासपदं समासार्थवाक्यपरम् । समासे = विग्रहवाक्ये इत्यर्थः । एकैव विभक्तिर्यस्य तत् एकविभक्ति । नियतविभक्तिकमिति यावत् । विग्रहे यन्नियत-विभक्तिकं तत् पूर्वनिपातभिन्ने कार्ये उपसर्जनं स्यात् । कौशाम्ब्याः निष्क्रान्तः, निष्क्रान्तं, निष्क्रान्तेनेत्यादि सर्वविभक्त्यन्तेन विग्रहे ' निरादयः क्रान्ताद्यर्थे पञ्चम्या ' इति समासे निष्कौशाम्बिः, निष्कौशाम्बिम्, निष्कौशाम्बिना इत्यादि भवति । अत्र कौशाम्बी शब्दः एवं विग्रहे नियतविभक्तिकः इति तस्योपसर्जनत्वं भवति । समासशास्त्रे पञ्चमीनिर्दिष्टत्वेन प्रथमानिर्दिष्टत्वाभावेन उपसर्जनसंज्ञाया-मप्राप्तायां पुनर्वचनमिदमारब्धम् । अनेन उपसर्जनत्वेपि न पूर्वनिपातः ।

### ५२०. उपसर्जनं पूर्वम् २—२—३०

समास इति वर्तते । सप्तम्यन्ततया परिणामः । पूर्वमित्यस्य पूर्वं प्रयोज्यमित्यर्थः । समासे उपसर्जनं पूर्वं प्रयोज्यम् । द्वितीया—कृष्णं श्रितः = कृष्णश्रितः । तृतीया—शङ्कुलाखण्डः । चतुर्थी—यूपदारु इत्यादि । एवं पूर्वं भूतः पूर्वभूत इति प्राप्तम् । किन्तु ' भूतपूर्वेचरट् ' इति निर्देशबलात् भूतशब्दस्यैव पूर्वनिपातः भवति । ' भूतपूर्व ' इति समुदायात् पुनः यथायथं सुबुत्पत्तिः भूतपूर्वः, भूतपूर्वमित्यादि ।

## ५२१. अव्ययीभावः २–२–५

अधिकारोयम् ।

५२२. **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु २–२–६**

'सुप् सुपा' इति च वर्तते । अव्ययीभावः, समासः इत्यधिकृतम् । विभक्तिश्च-समीपंच-समृद्धिश्च-व्यृद्धिश्च-अर्थाभावश्च-अत्ययश्च-असंप्रतिश्च-शब्दप्रादुर्भावश्च-पश्चात् च, यथा च-आनुपूर्व्यं च-यौगपद्यं च सादृश्यं च सम्पत्तिश्च-साकल्यं च अन्तश्च विभक्तिअन्ताः । उच्यन्ते इति वचनाः । विभक्तिअन्ताश्च ते वचनाश्च इति विग्रहः । वचनग्रहणंप्रत्येकमभिसम्बध्यते । विभक्तीत्यादिना तदर्थो ग्राह्यः । विभक्त्यादिष्वर्थेषु विद्यमानम् अव्ययं सुबन्तं समर्थेन सुबन्तेन समस्यते । सोऽव्ययीभावः ।

## ५२२. अव्ययीभावश्च १–४–२८

'स नपुंसकम्' इत्यतः नपुंसकम् इत्यनुवर्तते । अव्ययीभावसमासः नपुंसकलिङ्गः स्यात् । स्त्रीषु अधिकृत्य कथा प्रवर्तते अधिस्त्रि । कुमारीषु अधिकृत्य कथाप्रवर्तते अधिकुमारि । अत्र सप्तमीविभक्त्यर्थे विद्यमानस्य अधि इत्येतदव्ययस्य स्त्री शब्देन, कुमारी शब्देन च समासे, 'सुपोधातु' इति सप्तम्या लुक् । 'ह्रस्वो नपुंसके प्रातिपदिकस्येति' ह्रस्वः, प्रथमानिर्दिष्टत्वात् अधेः पूर्वनिपातः । समासादन्त्यस्य सुपः 'अव्ययादाप्सुपः' इति लुक् ॥

## ५२३. नाव्ययीभावादतोऽम्त्वपञ्चम्याः १–४–८३

'अव्ययादाप्सुपः' इति प्राप्तः लुक् प्रतिषिध्यते । 'ण्यक्षत्रियार्षञितो' इत्यतो लुगिति, 'अव्ययादाप्सुपः' इत्यतः सुपः इति चानुवर्तते । 'नाव्ययीभावादतः' इत्येकं वाक्यम् । अता अव्ययीभावो विशेष्यते । तदन्तविधिः अदन्तादव्ययीभावादुत्तरस्य सुपः न लुक् । 'अम् तु अपञ्चम्या' इति वाक्यान्तरम् । पञ्चमीभिन्नस्य तु सुपः अमादेशः स्यात् । एवं च पञ्चम्याः लुक् अमादेशश्च न भवति किन्तु तस्याः श्रवणमेव भवति । समीपवचने–

कुम्भस्य समीपमित्यर्थे समीपार्थस्य उपेत्यव्ययस्य कुम्भस्येत्यनेन समासे 'सुपोधातु' इति सुब्लुकि उपकुम्भशब्दात् पुनः उत्पन्नस्य सुपः 'अव्ययादाप्सुप' इति लुकि प्राप्ते तस्यानेन अमादेशः उपकुम्भम् । एवम् उपकृष्णम् । पञ्चमीविभक्तौ तु उपकुम्भात् उपकृष्णात् इति । अत इति किम् ? अधिस्त्रि । अधिकुमारि ।

## ५२४. तृतीयासप्तम्योर्बहुलम् १-४-८४

'नाव्ययीभावादि' त्यनेन नित्यमम्भावे प्राप्ते वचनमिदम् । 'नाव्ययीभावादि'त्यतः अत इत्यनुवर्तते । अदन्तादव्ययीभावात् तृतीयासप्तम्योः बहुलमम्भावः स्यात् । उपकुम्भं, उपकुम्भेन वा कृतम् । उपकुम्भम् उपकुम्भे वा निधेहि । समीपार्थे विद्यमानानामपि समया, निकषा, आरात् इत्यव्ययानां सुबन्तेन अव्ययीभावसमासः न भवति । विभक्त्यर्थसमीपादिमात्रवृत्त्यव्ययस्यैव 'अव्ययं विभक्तीति' सूत्रेण समासाङ्गीकारात् । समयानिकषाराच्छब्दानामधिकरण शक्तिप्रधानतया समीपार्थमात्रवृत्तित्वाभावात् । ग्रामस्य समीपे इति हि तेषामर्थः। उपशब्दस्तु समीपार्थमात्रवाची । उपकृष्णं भक्ता इत्यत्र कृष्णसामीप्यवन्त इत्यर्थात् ॥ समृद्धिः ऋद्धेः धनधान्यादेराधिक्यम् । मद्राणां समृद्धिः सुमद्रम्। मगधानां समृद्धिः सुमगधम् । व्यृद्धिः = ऋद्धेरभावः । यवनानाम् ऋद्धेरभावः दुर्यवनम् । अर्थाभावः = वस्तुनोऽभावः । अभावोमशकानां निर्मशकम् । अभावो मक्षिकाणां निर्मक्षिकम् ।

## ५२५. गोस्त्रियोरुपसर्जनस्य १-१-४८

'ह्रस्वोनपुंसके प्रातिपदिकस्ये'त्यतः ह्रस्व इति' प्रातिपदिकस्येति-चानुवर्तते । उपसर्जनस्येति गोस्त्रियोर्विशेषणम् । स्त्रीशब्देन स्त्रीप्रत्ययो गृह्यते । प्रत्ययग्रहणपरिभाषया तदन्तविधिः । उपसर्जनीभूतः यो गोशब्दः तदन्तस्य, उपसर्जनीभूतं स्त्रीप्रत्ययान्तं यत्तदन्तस्य च प्रातिपदिकस्य ह्रस्वः स्यात् । मक्षिका इत्यस्य ह्रस्वः, ततः समुदायात् विहितस्य नाव्ययीभावादिति अम् निर्मक्षिकम् । अभाव इत्यनेनेष्टसिद्धौ अर्थग्रहणसामर्थ्यात् अत्यन्ताभावस्यैव विवक्षितत्वेन गौरश्वोन, घटः पटो नेत्यादिषु इतरेतराभावे नाव्ययीभावः । अत्ययः = अभूतत्वम् , अतिक्रमः ।

उत्पत्त्यभावः प्रध्वंसः इत्यर्थः । अतीतानि हिमानि निर्हिमम् । अतीतानि शीतानि निःशीतम् एवम् अतिहिमम् । असंप्रति—उपभोगस्य वर्तमानकालप्रतिषेधः । अर्थाभावो हि क्वचिद्देशे कालत्रयेप्यभावः इति भेदः । अतिकम्बलम्—कम्बलस्य न वर्तमानकालः उपभोगस्येत्यर्थः । निद्रायाः उपभोगस्य न वर्तमानकालः इत्यर्थे अतिनिद्रम् । अत्र निद्रा इत्यस्य 'एकविभक्तिचापूर्वनिपाते' इति उपसर्जनत्वेन गोस्त्रियोरिति ह्रस्वः भवति । शब्दप्रादुर्भावः=शब्दस्य प्रकाशता । इति पाणिनि । पाणिनिशब्दस्य प्रकाशः इत्यर्थः । इतीत्यव्ययं शब्दप्रकाशे वर्तते । पश्चात्—अनुरथं पादातम् । रथानां पश्चात् इत्यर्थः । पश्चादित्यर्थे अनु इत्यव्ययम् । यद्यपि पश्चात् इत्यर्थकं अव्ययम् पश्चादिति शब्दोऽपि, तथापि पश्चाच्छब्दस्य नायं समासः 'अचः परस्मिन्' इति सूत्रस्य भाष्ये ततः पश्चात् इति प्रयोगदर्शनात् । अव्ययीभावसमासे तु—उपसर्जनत्वात् पश्चाच्छब्दस्य पूर्वनिपातः स्यात् । यथार्थे विद्यमानस्याव्ययस्य समासः, यथार्थश्च-योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यं च । योग्यतायाम् :—अनुरूपम् । रूपस्य योग्यमित्यर्थः । वीप्सायाम् :—अर्थमर्थं प्रति—प्रत्यर्थम् । प्रति इत्यव्ययमत्र वीप्सायां वर्तते । पदार्थानतिवृत्तौ :—यथाशक्ति । यथाशब्दः पदार्थानतिवृत्तौ वर्तते । पदमत्र शक्तिशब्दः । तस्यार्थः शक्तिरेव । तस्या अनतिवृत्तिः=अनतिक्रमः । यथाशक्ति करोति इत्यस्य शक्त्यनतिक्रमेण करोतीत्यर्थः । सादृश्ये :—सादृश्यार्थे विद्यमानस्य सहे त्यव्ययस्य हरिणा समासे सह हरि इति स्थिते ।

## ५२६. अव्ययीभावे चाकाले ६-३-८२

'सहस्य सः संज्ञायाम्' इत्यतः सहस्य सः इत्यनुवर्तते । सहस्य सः आदेशः स्यात् अव्ययीभावसमासे । न तु कालवाचके परे । कालवाचके परे सहस्य सोनेत्यर्थः एवं सचक्रम्, सतृणम् इत्यादिषु सहस्य सभावः । अकाले इत्युक्तत्वात् सहपूर्वाह्णम् इत्यादौ सभावो न । आनुपूर्व्यम्=अनुक्रमः । ज्येष्ठानुपूर्व्येण इत्यर्थे अनुज्येष्ठम् ॥ यौगपद्यम्=एककालता । सचक्रं प्रयुक्तम् । युगपच्चक्रं प्रयुक्तम् इत्यर्थः । सादृश्यम्=तुल्यता । सूत्रे सादृश्यशब्दः

स्वार्थेप्यन्तः सदृशार्थकः । तेन गुणभूतेपि सादृश्ये प्रवर्तते । सदृशः सख्या ससखि, अत्र सहेत्यव्ययं सदृशार्थे वर्तते । सादृश्यप्राधान्ये यथार्थत्वेन संग्रहः । सम्पत्तिः = अनुरूपः स्वभावः, स्वोचितं कर्मेति यावत् । क्षत्राणां सम्पत्तिः सक्षत्रम् । क्षत्रियाणामनुरूपं कर्मेत्यर्थः । अत्र सहेत्यव्ययम् सम्पत्तौ वर्तते । साकल्यम् = अशेषता । सतृणमत्ति, सबुसमभ्यवहरति । पात्रे परिविष्टम् अशेषं भक्षयति इत्यर्थः । न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थो तृणानामभ्यवहाररूपाविकार्यवचनेन प्रतिपाद्यते । नत्वत्र तृणभक्षणेतात्पर्यम् । तस्यात्राप्रसक्तेः । अन्ते = 'अन्त' इति परिग्रहापेक्षया समाप्तिरुच्यते । साग्नि अधीते = अग्निग्रन्थपर्यन्तमधीते । अग्निशब्देन अग्निचयनप्रतिपादकोग्रन्थः विवक्षितः । एतावन्मया अध्येतव्यमिति यावतोऽध्ययनस्य भवतीति साकल्यात् अन्त इत्यस्य पृथगुपादानम् । अव्ययमिति योगं विभज्य अव्ययं समर्थेन सुपा समस्यते इत्यर्थमाश्रित्य विभक्त्यर्थाद्यभावेपि क्वचित् अव्ययस्य सुबन्तेन समासः अङ्गीक्रियते । तेन दिशयोर्मध्यम् इत्यर्थविवक्षायां मध्यार्थस्य अपेत्यव्ययस्य दिशयोरित्यनेन समासेन 'अपदिशम्' इति सिध्यति ।

## ५२७. यथाऽसादृश्ये २-२-७

असादृश्ये वर्तमानं यथेत्येतत् अव्ययं सुपा सह समस्यते । सोव्ययीभावः । योग्यता-वीप्सा-पदार्थानतिवृत्तिरूपे असादृश्ये सादृश्यभिन्ने यथार्थेऽपि वर्तमानस्य अव्ययस्य यथार्थत्वादेव सिद्धे पुनरिदं नियमार्थम् । असादृश्ये एव यथाशब्दः समस्यते इति । यथावृद्धं ब्राह्मणानामन्त्रयस्व । ये ये वृद्धाः यथावृद्धम् । अत्र यथाशब्दोवीप्सार्थकः । एवं यथाध्यापकम् । असादृश्ये इति किम् ? यथा देवदत्तः तथा यज्ञदत्तः । अत्र न भवति ।

## ५२८. यावदवधारणे २-२-८

अवधारणम् इयत्तापरिच्छेदः । परिमाणनिश्चयः । अवधारणे वर्तमानं यावदित्यव्ययं सुपासह समस्यते । सोव्ययीभावः, यावत् पात्रं ब्राह्मणानामन्त्रयस्व । यावन्ति पात्राणि सम्भवन्ति पञ्चषड्वा तावतः आमन्त्रयस्व । यावच्छ्लोकम् ।

यावद्धनम् । अवधारणे किम् ? यावद्दत्तं तावद्भुक्तम् । इयत् भुक्तमिति नावधारयतीत्यर्थः । नात्र इयत्तापरिच्छेदः इति समासो न ।

### ५२९. सुप् प्रतिना मात्रार्थे २–२–९

मात्रा, बिन्दुः स्तोकम् अल्पमिति पर्यायाः । मात्रार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते । सोव्ययीभावः । सुबित्यनुवर्तमाने पुनरिहसूत्रे सुप्ग्रहणम् अव्ययमित्यस्यासम्बन्धार्थम् । किञ्चित् शाकम्+शाकप्रति । सूपस्यलेशः सूपप्रति । मात्रार्थे इति किम् ? वृक्षं प्रति विद्योतते विद्युत् । अत्र प्रतेः मात्रार्थकत्वाभावात् न तेन समासः ।

### ५३०. विभाषा २–२–२२

अधिकारोयम् । उत्तरत्र समासविधिषु विभाषेति सम्बध्यते । तेन वक्ष्यमाणानां समासानां वैकल्पिकत्वं सिध्यति । इतः प्राचीनानां नित्यसमासत्वं च गम्यते । 'सुप् सुपा' इति विहितस्तु समासः विकल्पः, अव्ययं विभक्तीत्यादिना समासविधानाज्ज्ञापकात् ।

### ५३१. अपपरिबहिरञ्चवः पञ्चम्या २–२–२२

अप, परि–बहिस्-अञ्चु इत्येते सुबन्ताः पञ्चम्यन्तेनसह वा समस्यन्ते, सोऽव्ययीभावः । अपत्रिगर्तं वृष्टोदेवः अपत्रिगर्तेभ्यः वृष्टोदेवः । परिविष्णु संसारः । परिविष्णोः संसारः । बहिर्वनम् । बहिर्वनात् । प्राग्ग्रामम्-प्राग्ग्रामात् । यद्यपि पञ्चम्यपाङ्परिभिः इत्यत्र बहिश्शब्दप्राग्भावेन बहिर्योगे पञ्चम्यनुशासनं नास्ति तथापि पञ्चम्यन्तेन बहिश्शब्दस्य समासविधानात् ज्ञापकादेव बहिर्योगेपि पञ्चमी इष्यते ।

### ५३२. आङ्मर्यादाभिविध्योः २–२–२३

मर्यादायाम्–अभिविधौ च वर्तमानम्-आङ् इत्येतत् पञ्चम्यन्तेन वा समस्यते, सोऽव्ययीभावः । मर्यादायाम् आमुक्तिसंसारः आमुक्तेः । आपाटलिपुत्रं वृष्टोदेवः आपाटलिपुत्रात् । अभिविधौ आकुमारं यशः पाणिनेः, आकुमारेभ्यः । आबालं हरिभक्तिः । आबालेभ्यः ।

## ५३३. लक्षणेनाभिप्रती आभिमुख्ये २-१-१४

लक्षणम्=चिह्नम् । अभिमुख्ये वर्तमानौ अभिप्रती चिह्नवाचिना सुबन्तेन वा समस्येते सोऽव्ययीभावः । अभ्यग्निशलभाः पतन्ति=अग्निमभि । प्रत्यग्निशलभाः पतन्ति=अग्निं प्रति । अग्निं लक्ष्यीकृत्य अभिमुखं पतन्ति इत्यर्थः । अत्र अग्निः लक्षणम् । तेन हि शलभपातो लक्ष्यते । आभि मुख्ये चाभिप्रती वर्तेते । अग्न्यभिमुखमेव पतन्ति नापि पार्श्वतः नापि पृष्ठतः इत्यर्थावगमात् । लक्षणेनेति किम् ? मथुरां प्रति गतः । मथुराया अन्यत्र प्रस्थितः दिङ्मोहात् मथुरामेव प्रतिनिवृत्त इति नात्र मथुरा लक्षणम् । यदुद्दिश्य हि गच्छति तल्लक्ष्यं भवति । अभिप्रती इति किम् ? येनाग्निस्तेन गतः । भवत्यत्राग्निर्लक्षणम् आभिमुख्यमप्यस्ति । अभिप्रती तु न स्तः अतः येन तेन शब्दाभ्यां सह समासो न भवति । आभिमुख्य इति किम् ? अभ्यङ्का: गावः । प्रत्यङ्का गावः । नवाङ्का इत्यर्थः । अत्र अभिशब्दः अभिनवार्थे, प्रतिशब्दश्च-प्रतिनवार्थे वर्तते । अङ्कोऽत्र भवति गवां लक्षणम् । आभिमुख्यन्तु नास्ति ।

## ५३४. यस्य चायामः २-२-२६

लक्षणेनेति वर्तते । अनुरित्यनुवर्तते । आयामो=दैर्घ्यम् । अनुः यस्यायामवाची, तेन लक्षणभूतेन सह वा समस्यते । अनुगङ्गं वाराणसी । अनुयमुनं मथुरा । गङ्गादैर्घ्यवती वाराणसी । यमुनायामवती मथुरा इत्यर्थः । आयाम इति किम् ? वृक्षमनुविद्योतते विद्युत् ।

## ५३५. पारेमध्ये षष्ठ्या वा २-२-२८

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते । वा वचनाच्च षष्ठी समासोऽपि पक्षे अभ्यनुज्ञायते । पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते सोऽव्ययीभावः । तत्सन्नियोगेन पारमध्यशब्दयोरेकारान्तत्वं च निपात्यते । पारं गङ्गायाः पारेगङ्गम् । मध्यं गङ्गायाः मध्येगङ्गम् । पक्षे गङ्गापारम् गङ्गामध्यम् । विभाषाधिकारात् वाक्यमपि ।

### ५३६. संख्या वंश्येन २-१-२९

वंशः=सन्तानः । स द्विविधः । विद्यया, जन्मना चेति । विद्यया वंशः=गुरुपरम्परा । जन्मनावंशः=पुत्रादिपरम्परेति प्रसिद्धमेव । वंशेभवो वंश्यः । वंश्यवाचिना सुबन्तेन सह संख्या वा समस्यते । विद्यया-द्विमुनि व्याकरणम् । द्वौ च तौ मुनी च वंश्यौ पाणिनिकात्यायनौ व्याकरणस्य प्रवर्तकौ द्विमुनि । त्रयो मुनयः त्रिमुनि व्याकरणस्य । जन्मना-एकविंशतिभारद्वाजम् । एकविंशति भरद्वाजाः इति कर्मधारयं बाधित्वा अव्ययीभावः ।

### ६३७. नदीभिश्च २-२-२०

संख्येत्यनुवर्तते । नदीवचनैः शब्दैः सह संख्या समस्यते । समाहारे चायमिष्यते । सप्तानां गङ्गानां समाहारः सप्तगङ्गम् । तद्धितार्थोत्तरपदसमाहारे चेति द्विगुसमासं बाधित्वा अव्ययीभावः । द्वयोर्यमुनयोः समाहारः द्वियमुनम् । अत्र सूत्रे नदीशब्देन नदीशब्दस्य, विशेषतो नदीवाचकानां च ग्रहणम् । तेन पञ्चानां नदानां समाहारः=पञ्चनदम् । सप्तानां गोदावरीणां समाहारः=सप्तगोदावरम् इति सिध्यति ।

### ५३८. अन्यपदार्थे च संज्ञायाम् २-२-२१

नदीभिरित्यनुवर्तते । अन्यपदार्थे वर्तमानं सुबन्तं नदीभिः सह समस्यते संज्ञायाम् । विभाषाधिकारेपि नित्यसमास एवायम् । वाक्येन संज्ञाया अनवगमात् । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् अयमपि देशः । एवम् कृष्णगङ्गम्, शनैर्गङ्गम् । अन्यपदार्थे इति किम् ? कृष्णवेण्णा । कृष्णाचासौ वेण्णाचेति विशेषणसमासोयम् । संज्ञायामिति किम् ? शीघ्रगङ्गोदेशः ।

### ५६९. समासान्ताः ५-४-६८

अधिकारोयम् । अत्र समासपदं अलौकिकविग्रहवाक्यपरम् । अलौकिकविग्रहवाक्ये समाससंज्ञासमकालमेव समासान्तः । अन्तशब्दः चरमावयववाची ।

### ५४०. अव्ययीभावे शरत्प्रभृतिभ्यः ५-४-१०७

'राजाहः सखिभ्यष्टच्' इत्यतः टजित्यनुवर्तते । समासान्ता इत्यधि-

क्रियते । शरद्इत्येवमादिभ्यः प्रातिपदिकेभ्यः टच् समासान्तः स्यात्, अव्ययीभावे । शरदः समीपम्-उपशरदम् । प्रतिशरदम् । विपाट् शब्दः नदीविशेषवाची । प्रतिविपाशम् । अव्ययीभावे इति किम् ? परमशरत् । अनस्-मनस्-उपानह्-दिव्-हिमवत्-अनुडुह्-दिश्-विश्-चेतस्-चतुर् इत्यादयः शरत्-प्रभृतिषु पठिताः ।

## ५४१. जराया जरस् च (वा)

जराशब्दात् टच् स्यात् अव्ययीभावे जरसादेशश्च । जरायाः समीपम् उपजरसम् ।

## ५४२. प्रतिपरसमनुभ्योऽक्ष्णः (ग)

प्रति-पर-सम्-अनु इत्येतेभ्यः परस्मात् अक्षिशब्दात् टच् स्यात् अव्ययीभावे। अक्ष्णोः अभिमुखमित्यर्थे प्रत्यक्षम् । अक्षिशब्दात् टचि यस्येति चेति इकारस्य लोपः । अक्ष्णः परम् परोक्षम् । परोक्षे लिट् इति निपातनात् अक्ष्यकारस्योत्वम् आद्गुणः । अक्ष्णोर्योग्यम् समक्षम् । अक्ष्णोः पश्चात्-अन्वक्षम् ।

## ५४३. अनश्च ५-४-१०८

अनन्तादव्ययीभावात् टच् स्यात् । राज्ञः समीपम्-उपेत्यस्य राजन् शब्देन समासे टचि सति ।

## ५४४. नस्तद्धिते ६-४-१४४

न इति षष्ठ्यन्तम् अधिकृते भस्येत्यत्र विशेषणम् । तदन्तविधिः । टेरिति । अल्लोपो न इत्यतः लोप इति चानुवर्तते । नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते परे अन् इत्यस्य लोपः उपराजम् । एवं प्रतिराजम् । आत्मनि इत्यध्यात्मम् , प्रत्यात्मम् ।

## ५४५. नपुंसकादन्यतरस्याम् ५-४-१०९

अन इत्येव । विकल्पार्थं वचनमिदम् । अन्नन्तं यन्नपुंसकं तदन्तादव्ययीभावात् टच् वा स्यात् उपचर्मम् । उपचर्म ।

### ५४६. झयः ५-४-२२१

अन्यतरस्यामित्यनुवर्तते । झयन्तादव्ययीभावात् टच् वा स्यात्, उपसमिधम् । उपसमित् । उपदृषदम् । उपदृषत् ।

### ५४७. गिरेश्च सेनकस्य ५-४-२२२

गिर्यन्तादव्ययीभावात् टच् वा स्यात् । उपगिरम् । उपगिरि ।

इत्यव्ययीभावसमासप्रकरणम्

(सूत्राणि ५४७)

---

## अथ तत्पुरुषसमास प्रकरणम्

### ५४८. तत्पुरुषः २-२-२२

अधिकारोऽयम्, शेषो बहुव्रीहिरित्यतः प्राक् । तत्पुरुष इति संज्ञा ।

### ५४९. द्विगुश्च २-२-२३

द्विगुश्च समासः तत्पुरुषसंज्ञो भवति । द्विगोः तत्पुरुषत्वे समासान्तः प्रयोजनम् । पञ्चराजी । दशराजी । द्व्यहः । पञ्चगवम् । इत्यादौ तत्पुरुषत्वप्रयुक्तः टच् प्रत्ययः भवति ।

### ५५०. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २-२-२४

तत्पुरुष इत्यधिक्रियते । 'सुप् सुपा' इति वर्तते । द्वितीयेत्येतत् सुब्विशेषणम् । श्रितादिशब्दाः श्रितादिप्रकृतिकेषु लाक्षणिकाः । द्वितीयान्तं सुबन्तं श्रितादिप्रकृतिकैः सुबन्तैः वा समस्यते । स तत्पुरुषः । कृष्णं श्रितः कृष्णश्रितः । कष्टं श्रितः-कष्टश्रितः । नरकश्रितः । दुःखमतीतः-दुःखातीतः । कान्तारातीतः । नरकं पतितः-नरकपतितः । कूपपतितः । ग्रामं गतः-ग्रामगतः । नगरगतः । तरङ्गानत्यस्तः-तरङ्गात्यस्तः । अत्यस्तः = अतिक्रान्तः । सुखं प्राप्तः सुखप्राप्तः । ग्रामप्राप्तः । संशयमापन्नः-संशयापन्नः । सुखापन्नः ।

क्षेमापन्नः । समर्थविशेषणेन श्रितान्तप्रकृतिकसुबन्तस्य ग्रहणे कृष्णं परम श्रितः इत्यादौ समासः स्यादिति न शङ्कनीयम् । समासविधौ तदन्तविधिप्रतिषेधात् ।

गम्यादीनामुपसंख्यानम् (वा)

गम्यादिप्रकृतिकैः सुबन्तैः द्वितीयान्तं समस्यते इति वक्तव्यम् । ग्रामं गमी-ग्रामगमी । ग्रामं गामी-ग्रामगामी । अन्नं बुभुक्षुः-अन्नबुभुक्षुः ।

### ५५१. खट्वा क्षेपे २–२–२६

द्वितीयेति वर्तते । स्वयं क्तेनेत्यतः क्तेनेत्यनुवर्तते । प्रत्ययग्रहणात् तदन्तविधिः । क्षेपो=निन्दा । खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायां गम्यमानायाम् । वाक्येन निन्दाया अनवगमात् नित्यसमास एवायम् । खट्वारूढः=जाल्मः । खट्वारोहणं चेह विमार्ग-प्रस्थानस्योपलक्षणम् । सर्व एवाविनीतः खट्वारूढः इत्युच्यते । खट्वाप्लुतः । अपथप्रस्थित इत्यर्थः । अधीत्य स्नात्वा गुर्वनुज्ञातेन खट्वा आरोढव्या । यस्तावदन्यथा करोति सः खट्वारूढः इत्युच्यते । क्षेपे इति किम् ? खट्वाम् आरूढः ।

### ५५२. अत्यन्तसंयोगे च २–२–२९

द्वितीया इति काला इति चानुवर्तते । अत्यन्तसंयोगः=कृत्स्नसंयोगः । कालस्य स्वेन सम्बन्धिना व्याप्तिः । द्वितीयान्ताः कालवाचिनः शब्दाः अत्यन्त-संयोगे गम्यमाने सुबन्तेन वा समस्यन्ते । स तत्पुरुषः । मुहूर्तम् सुखम्-मुहूर्तसुखम् । वर्षं क्लेशः-वर्षक्लेशः ।

### ५५३. तृतीया तत्कृतार्थेन गुणवचनेन २–२–३०

तत्कृतेति लुप्ततृतीयाकं भिन्नं पदम् । तत्कृतेत्यत्र तच्छब्देन तृतीयान्त परामर्शिना तदर्थो लक्ष्यते । तत्कृतेन=तृतीयान्तार्थकृतेनेत्यर्थः । तस्य गुणद्वारा गुणवचनेऽन्वयः । गुणमुक्तवान् गुणवचनः । अथवा गुण उक्तः अनेनेति गुणवचनः । यश्च पूर्वं गुणे वर्तित्वा पश्चात् तद्वति द्रव्ये वर्तते स गुणवचनः । तृतीयान्तं सुबन्तं तृतीयान्तार्थकृतगुणवचनेन शब्देन अर्थशब्देन च सह समस्यते

स तत्पुरुषः । शङ्कुलया खण्डः = शङ्कुलाखण्डः । खण्डनं खण्डः । मत्वर्थीयः अर्श आद्यच् । शङ्कुलाकृतखण्डनक्रियावानित्यर्थः । किरिणा काणः-किरिकाणः । खण्डकाणशब्दौ अत्र खण्डने, निमीलने च क्रियारूपापन्ने गुणे वर्तित्वा पश्चात् द्रव्ये वर्तेते इति गुणवचनौ भवतः । अर्थेन-धान्येनार्थः = धान्यार्थः । तत्कृतेनेति किम् ? - अक्ष्णा काणः । नात्र तृतीयान्तेन अक्ष्णा काणत्वं कृतम् । किन्तु अन्येन केनापि रोगेण । अक्ष्णा तु केवलं काणत्वयुक्तो लक्ष्यते । गुणवचनेनेति किम् ? गोभिर्वपावान् । गोसम्बन्धिक्षीरादिभोजनेन वपावत्त्वमिति तत्कृतत्वमस्ति । किन्तु वपावान् शब्दो न गुणवचनः ।

### ५५४. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २-२-३२

पूर्व-सदृश-सम-ऊनार्थ-कलह-निपुण-मिश्र-श्लक्ष्ण, एतैः सह तृणीयान्तं समस्यते स तत्पुरुषः । मासेन पूर्वः-मासपूर्वः । संवत्सरपूर्वः । पक्षपूर्वः । दिनपूर्वः । मातृसदृशः । पितृसदृशः । गोसदृशः । पितृसमः । वसुधासमः । माषोनम् । कार्षापणोनम् । द्रोणोनम् । पादविकलः । रूपविकलः । असिकलहः । वाक्कलहः । वाङ्निपुणः । आचारनिपुणः । आर्जननिपुणः । गुडमिश्रः । तिलमिश्रः । सोपसर्गेणापि मिश्रशब्देन समासः इष्यते, मिश्रंचानुपसर्गमसन्धौ इति सूत्रे अनुपसर्गग्रहणात् ज्ञापकात् ।

### अवरस्योपसंख्यानम् (वा)

तृतीयान्तं अवरशब्देनापि समस्यते इति वाच्यम् । मासावरः । संवत्सरावरः ।

### ५५५. कर्तृकरणे कृता बहुलम् २-२-३२

कर्ता च करणं चेति समाहारद्वन्द्वः । तृतीयेति वर्तते । कृता इति तदन्तग्रहणम् । कर्तरि, करणे च या तृतीया तदन्तं कृदन्तेन सह बहुलं समस्यते । स तत्पुरुषः । कर्तरि—अहिहतः । हरित्रातः । करणे—नखभिन्नः । परशुच्छिन्नः ।

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् (प)

समासविधौ तदन्तविधेः प्रतिषेधात् वचनमिदमारब्धम् । कृदन्तग्रहणे गतिपूर्वस्य कारकपूर्वस्यापि ग्रहणमनुमन्यते । अहिनिहतः । नखनिर्भिन्नः । कर्तृकरणे इति किम् ? भिक्षाभिः उषितः । हेतावेषा तृतीया । कृता इति किम् ? काष्ठैः पचतितराम् । बहुलग्रहणात् दात्रेण लूनवान्, परशुना च्छिन्नवान् इत्यत्र समासो न भवति । पादहारकः इत्यत्र भवति ।

## ५५६. अन्नेन व्यञ्जनम् . २–२–३४

व्यञ्जनम्+संस्कारकं द्रव्यम् । व्यञ्जनवाचि तृतीयान्तम् अन्नवाचिना सुबन्तेन समस्यते, स तत्पुरुषः । दध्ना ओदनः-दध्योदनः । क्षीरौदनः । वृत्तौ क्रियाया (उपसेकरूपायाः) अन्तर्भावात् अन्नव्यञ्जनयोः सामर्थ्यम् ।

## ५५७. भक्ष्येण मिश्रीकरणम् २–२–३५

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते । गुडेन संमिश्राः धानाः-गुडधानाः । गुडपृथुकाः । अत्रापि क्रियाया अन्तर्भावात् पूर्वोत्तरपदयोः सामर्थ्यम् ।

## ५५८. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २–२–३६

तदर्थ-अर्थ-बलि-हित-सुख-रक्षित एषां द्वन्द्वः । तदर्थेत्यत्र तच्छब्देन चतुर्थ्यन्तार्थः परामृश्यते । तस्मै इदं तदर्थम् । चतुर्थ्यन्त वाच्यप्रयोजकं यत् तत् तदर्थमिति पर्यवस्यति । चतुर्थ्यन्तं तदर्थवाचिना, अर्थ, बलि, हित, सुख, रक्षित इत्येतैः सह च समस्यते । तदर्थेन प्रकृतिविकृतिभावे एव समास इष्यते । यूपदारु । कुण्डलहिरण्यम् । रन्धनायस्थाली-इह न भवति । अश्वघासः धर्मनियमः इत्यत्र षष्ठीसमासः न चतुर्थ्यन्तसमासः ।

## अर्थेन नित्यसमासः विशेष्यलिङ्गता चेष्यते (वा)

द्विजार्थः सूपः । ब्राह्मणार्थं पयः । क्षत्रियार्था यवागूः । भूतबलिः । कुबेरबलिः । गोहितम् । अश्वहितम् । गोसुखम् । अश्वसुखम् । गोरक्षितम् । अश्वरक्षितम् ।

## ५५९. पञ्चमी भयेन २-२-३७

पञ्चम्यन्तं भयशब्देन सुबन्तेन वा समस्यते । भयभीतभीतिभीनिर्गत-जुगुप्सुभिरिति वाच्यम् । (परिगणनम्) वृकभयम् । चोरभीतः । व्याघ्रभीतिः । सर्पभीः । ग्रामनिर्गतः । अधर्मजुगुप्सुः ।

## ५६०. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः २-२-३८

अल्पशः = किञ्चित्, पञ्चम्यन्तं अपेत-अपोढ-मुक्त-पतित-अपत्रस्त इत्येतैः समस्यते । सुखापेतः । कल्पनापोढः । चक्रयुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः । किञ्चिदित्युक्तेः प्रासादात्पतितः इत्यत्र न समासः ।

## ५६१. षष्ठी २-२-८

षष्ठ्यन्तं सुबन्तेन समर्थेन समस्यते । राज्ञः पुरुषः-राजपुरुषः । ब्राह्मणकम्बलः ।

## ५६२. न निर्धारणे २-२-२०

निर्धारणे विहिता या षष्ठी तदन्तं न समस्यते । नृणां द्विजः श्रेष्ठः । मनुष्याणां क्षत्रियः शूरतमः । कृष्णा गवां संपन्नक्षीरतमा । अध्वगानां धावन् शीघ्रतमः ।

## प्रतिपदविधाना च षष्ठी न समस्यते (वा)

प्रतिपदं विधानं यस्याः सा । 'षष्ठी शेषे' इति शेषलक्षणां षष्ठीं वर्जयित्वा सर्वा षष्ठी प्रतिपदविधामा । प्रतिपदविधाना या षष्ठी तदन्तं न समस्यते । सर्पिषो ज्ञानम् । मधुनो ज्ञानम् ।

## ५६३. पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २-२-११

पूरणगुणसुहितानि अर्थाः येषां ते । ते च सच्च अव्ययं च तव्यश्च समानाधिकरणं चेति समाहारद्वन्द्वः । पूरण-गुण-सुहितार्थैः, सत् प्रत्ययान्तेन, अव्ययेन, तव्य प्रत्ययान्तेन, समानाधिकरणेन च षष्ठ्यन्तं न समस्यते । पूरणार्थे-छात्राणां पञ्चमः । सर्वां षष्ठः । गुणार्थे-बलाकायाः शौक्ल्यम् । काकस्य कार्ष्ण्यम् । सुहितार्थाः = तृप्त्यर्थाः, तत्र-फलानां तृप्तः । फलानां सुहितः ।

सत् प्रत्ययान्तेन = 'तौसत्' इत्युक्तशतृशानजन्तेन, ब्राह्मणस्य कुर्वन्, कुर्वाणो वा। अव्ययम्-राज्ञः कृत्वा। ब्राह्मणस्य हृत्वा। कृदव्ययमेव गृह्यते। तेन-तदुपरि इत्यत्र समासः भवति। तव्यप्रत्ययान्ते ब्राह्मणस्य कर्तव्यम्। तव्यत् प्रत्ययान्तेन तु भवत्येव समासः। ब्राह्मणकर्तव्यम्। समानाधिकरणेन-पाणिनेः सूत्रकारस्य। तक्षकस्य सर्पस्य।

## ५६४. अधिकरणवाचिना च २-२-१३

अधिकरणवाची यः क्तः तदन्तेन षष्ठ्यन्तं न समस्यते। इदम् एषा-मासितम् यातम् भुक्तं वा।

## ५६५. कर्मणि च २-२-१४

क्तेनेत्यस्य नेह सम्बन्धः। कर्मग्रहणं षष्ठीविशेषणम्। चकारः इति-पर्यायः। कर्मणि इति सप्तम्येकवचनमुच्चार्य विहिता षष्ठी गृह्यते। उभयप्राप्तौ कर्मणि इति विहिता या षष्ठी तदन्तं न समस्यते। आश्चर्यो गवां दोहः अगोपालकेन। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यतिना। विचित्रा सूत्रस्य कृतिः पाणिनिना।

## ५६६. तृजकाभ्यां कर्तरि २-२-१५

कर्तरीति तृजकयोरेव विशेषणं श्रुतत्वात्, न तु षष्ठ्याः। षष्ठ्यन्तं कर्त्रर्थतृजकाभ्यां न समस्यते। अपां स्रष्टा। वज्रस्य भर्ता। ओदनस्य पाचकः। कर्तरि किम्? इक्षुभक्षिका। अत्र भावे ण्वुल्। 'त्रिभुवन विधातुः' इत्यत्र तु शेषषष्ठ्या समासः।

## ५६७. कर्तरि च २-२-९

षष्ठ्यन्तं याजकादिभिः सह समस्यते। 'तृजकाभ्यां कर्तरि' इति निषेधस्य प्रतिप्रसवोयम्। ब्राह्मणयाजकः। देवपूजकः।

### कृद्योगा च षष्ठी समस्यते इति वाच्यम् (वा)

'प्रतिपदविधाना' इति निषेधस्य प्रतिप्रसवोयम्।

### ५६८. सप्तमी शौण्डैः २–२–४०

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, स तत्पुरुषः। अक्षेषु शौण्डः=अक्षशौण्डः। ईश्वराधीनः।

### ५६९. तद्धितार्थोत्तरपद समाहारे च २–२–५२

समानाधिकरणेन इति दिक् संख्ये इति चानुवर्तते। एकापि सप्तमी विषयभेदात् भिद्यते। तद्धितार्थेत्यंशे वैषयिकी उत्तरपदेत्यंशे सामीपिकी। समाहारांशे आधारार्था। तद्धितार्थे विषये, उत्तरपदे परे, समाहारे वाच्ये दिक् संख्ये समानाधिकरणेन समस्येते। तद्धितार्थे-पूर्वस्यां शालायां भवः पौर्वशालः। आपरशालः। उत्तरपदे-पूर्वशालाप्रियः। अपरशालाप्रियः। समाहारे दिक्शब्दो न सम्भवति। संख्या-तद्धितार्थे-पञ्चकपालः। षण्णां मातॄणामपत्यं षाण्मातुरः। उत्तरपदे-पञ्चगवधनः। दशगवधनः। पञ्च गावो धनं यस्येत्यर्थे पञ्चगोशब्दयोस्तत्पुरुषे सति।

### ५७०. गोरतद्धितलुकि ५–४–९२

तत्पुरुषस्याङ्गुलेः इत्यतः तत्पुरुषस्येत्यनुवर्तते। पञ्चम्यन्ततया विपरिणम्य गोरित्यनेन विशेष्यते। तदन्तविधिः। राजाहस्सखिभ्यष्टच् इत्यतः टच् अनुवर्तते। समासान्तः इत्यधिकृतम्। गोन्तात् तत्पुरुषात् समासान्तः टच् स्यात् न तद्धितलुकि। पञ्चगवधनः। एवं दशगवधनः। समाहारे-पञ्चकुमारी-त्रिलोकी।

### ५७१. संख्यापूर्वो द्विगुः २–२–५२

संख्या पूर्वः अवयवो यस्येति बहुव्रीहिः। तद्धितार्थ इति पूर्वसूत्रविहितः समासः अन्यपदार्थः। तद्धितार्थेत्युक्तः त्रिविधोपि संख्यापूर्वः समासः द्विगुसंज्ञः स्यात् तद्धितार्थे-पञ्चकपालः। उत्तरपदे-पञ्चनावप्रियः।

### ५७२. द्विगुरेकवचनम् २–४–१

समाहारग्रहणं कर्तव्यमिति वार्तिकोक्तेः समाहारः इति लभ्यते। समाहारे द्विगुः एकार्थप्रतिपादकः स्यात्। समाहारे-पञ्चानां गवां समाहारः पञ्चगवम्।

### ५७३. उपमानानि सामान्यवचनैः २-२-५५

उपमीयन्ते=सदृशतया व्यवच्छिद्यन्ते ताभिः इत्युपमानानि उपमानोपमेययोः साधारणो धर्मः=सामान्यः। तद्युक्तवन्तः शब्दाः सामान्यवचनाः। पूर्वं सामान्यमुक्त्वा तद्वति द्रव्ये ये पर्यवस्यन्ति ते सामान्यवचनाः। उपमानवाचीनि सुबन्तानि सामान्यवचनैः=साधारणधर्मविशिष्टैः उपमेयवचनैः सह समस्यन्ते। घन इव श्यामः=घनश्यामः।

### ५७४. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २-२-५६

उपमितम्=उपमेयम्। उपमेयवाचि सुबन्तं उपमानवाचिभिः व्याघ्रादिभिः सह समस्यते। स तत्पुरुषः, न चेत् सामान्यवाची शब्दः प्रयुज्यते। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। सामान्याप्रयोगे इति किम्? पुरुषोऽयं व्याघ्र इव शूरः।

### ५७५. विशेषणं विशेष्येण बहुलम् २-२-५७

विशेषणम्—भेदकम्। विशेष्यम्—भेद्यम्। विशेषणवाचि सुबन्तं विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलम् समस्यते। स तत्पुरुषः। नीलोत्पलम्। रक्तोत्पलम्। बहुलवचनं व्यवस्थार्थम्। क्वचिन्नित्यसमास एव—कृष्णसर्पः। क्वचिन्न भवत्येव—रामो जामदग्न्यः। क्वचिद्विकल्पः—नीलमुत्पलम्, नीलोत्पलं। विशेषणमिति किम्? तक्षकः सर्पः। विशेष्येणेति किम्? लोहितस्तक्षकः।

### ५७६. तत्पुरुषः समानाधिकरणः कर्मधारयः २-२-४२

समानम् एकम् अधिकरणं वाच्यं येषां पदानां तानि समानाधिकरणानि पदानि। तान्याश्रयभूतानि यस्य सः समानाधिकरणः। समानाधिकरणपदः तत्पुरुषः कर्मधारयसंज्ञः स्यात्। परमराज्यम्। उत्तमराज्यम्। सुन्दरपुरुषः।

### ५७७. पुंवत्कर्मधारयजातीयदेशीयेषु ६-३-४२

स्त्रियाः, भाषितपुंस्कादनूङ् इति अनुवर्तते। कर्मधारयांशे अधिकरणसप्तमी। जातीय देशीय विषये परसप्तमी। कर्मधारये जातीय देशीययोश्च परयोः

अनूङ: भाषितपुंस्कस्त्रीशब्दस्य पुंवत् = पुंशब्दे-इव रूपं स्यात्। कृष्णा चासौ चतुर्दशीच-कृष्णचतुर्दशी। महानवमी। पाचकस्त्री। पञ्चमभार्या। पाचकजातीया। पाचकदेशीया।

## ५७८. मयूरव्यंसकादयश्च २-२-७२

अत्र कृतसमासकार्याः समुदाया एव निर्दिश्यन्ते। मयूरव्यंसकादयः शब्दाः तत्पुरुषसंज्ञा भवन्ति। मयूरव्यंसकः। उच्चावचम्। निश्चप्रचम्। अकिञ्चनम्। अकुतोभयः।

### आख्यातमाख्यातेन क्रियासातत्ये (वा)

आख्यातम् = तिङन्तम्। तिङन्तं तिङन्तेन समस्यते क्रियासातत्ये गम्यमाने। अश्नीत पिबत इति असकृत् यत्राभिधीयते सा क्रिया अश्नीतपिबता। पचतभृज्जता। खादतमोदता।

## ५७९. नञ् २-२-६

नञ् समर्थेन सुबन्तेन सह समस्यते, स तत्पुरुषः।

## ५८०. न लोपो नञः ६-३-७३

नेति लुप्तषष्ठीकं पदम्। 'अलुगुत्तरपदे' इत्यतः उत्तरपदे इत्यनुवर्तते। नञो नस्य लोपः स्यात्। न ब्राह्मणः अब्राह्मणः। न वृषलः = अवृषलः।

## ५८१. तस्मान्नुडचि ६-३-७४

तच्छब्देन पूर्वसूत्रावगतः लुप्तनकारोनञ् परामृश्यते। उत्तरपद इत्यनुवृत्तम् अचीत्यनेन विशेष्यते। तदादिविधिः। तस्मादित्युत्तरस्येति परिभाषा अचीति सप्तम्याः षष्ठीत्वं प्रकल्पयति लुप्तनकारात् नञः परस्य अजादेरुत्तरपदस्य नुडागमः स्यात्। न अश्वः अनश्वः। अनपराधी। अनुचितम्। न एकधा इति विग्रहे अनेकधा इत्येव न्याय्यम्। नैकधा इति कथमिति चेत्? अस्ति नञः अन्यः न शब्दः। तस्य 'सह सुपा' इति सूत्रेण एकधाशब्देन समासः। सः न तत्पुरुषः। अतः लोपो न।

### ५८२. कुगतिप्रादयः २-२-१८

कुश्च गतिश्च प्रादिश्चेति द्वन्द्वः । कु इति कुत्सितार्थः अव्ययशब्दः गृह्यते गत्यादिसाहचर्यात्, न तु पृथ्वीपर्यायः । कुगतिप्रादयः समर्थेन सुबन्तेन समस्यन्ते स तत्पुरुषः । कुपुरुषः । ऊरीकृत्य । दुष्पुरुषः ।

**प्रादयो गताद्यर्थे प्रथमया (वा)**

प्रगतः आचार्यः = प्राचार्यः । प्रान्तेवासी ।

**अत्याद्यः क्रान्ताद्यर्थे द्वितीयया (वा)**

खट्वाम् अतिक्रान्तः = अतिखट्वः । अतिमालः ।

**निरादयः क्रान्ताद्यर्थे पञ्चम्या (वा)**

निष्क्रान्तः कौशाम्ब्याः निष्कौशम्बिः । निर्वाराणसिः ।

### ५८३. उपपदमतिङ् २-२-१९

नित्यमिति वर्तते । उपपदमतिङन्तं समर्थेन शब्दान्तरेण नित्यं समस्यते, स तत्पुरुषः । कुम्भकारः । नगरकारः । अतिङिति किम् ? एधानाहारको व्रजति । अत्र सुप्सुपा न सम्बध्यते ।

### ५८४. आन्महतः समानाधिकरणजातीययोः ६-३-४६

'अलुगुत्तरपदे' इत्यतः अनुवृत्तम् उत्तरपदे इति समानाधिकरणपदे अन्वेति । समानाधिकरणे उत्तरपदे, जातीये च प्रत्यये परतः महतः आकारादेशः स्यात् । महादेवः । महाब्राह्मणः । महाबाहुः । महाबलः । महाजातीयः । समानाधिकरणजातीययोः किम् ? महतः पुत्रो महत्पुत्रः । अमहान् महान् सम्पन्नः महद्भूतः चन्द्रमाः इत्यत्रापि आत्वं न भवति । महदर्थस्य गौणत्वात् 'गौणमुख्ययोः मुख्ये कार्यसंप्रत्ययः' इति न्यायात् ।

### ५८५. द्व्यष्टनः संख्यायाम् बहुव्रीह्यशीत्योः ६-३-४७

द्वि अष्टन् इत्येतयोः आकारादेशः स्यात् संख्यायामुत्तरपदे परतः बहुव्रीह्यशीत्योः । द्वादश । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । द्व्यष्टन इति किम् ? पञ्चदश । संख्यायामिति किम् ? द्वैमातुरः । अष्टमातुरः । अबहुव्रीह्य-

र्तीत्योः किम् ? द्वित्राः । द्विदशाः । द्व्यशीतिः ।

५८६. तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५-४-८६

अजित्यनुवर्तते । संख्याव्ययादेः अङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तः अच् स्यात् । द्वे अङ्गुली प्रमाणमस्य = द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो = निरङ्गुलम् ।

५८७. राजाहः सखिभ्यष्टच् ५-४-९२

पूर्वसूत्रात् तत्पुरुषस्येत्यनुवृत्तम् पञ्चमीबहुवचनान्ततया विपरिणतम् । 'राजाहः सखिभ्यः' इत्यनेन विशेष्यते । तदन्तविधिः । राजन् अहन् सखि एतदन्तेभ्यः तत्पुरुषेभ्यः समासान्तः टच् स्यात् । परमश्चासौ राजा च परमराजः । अतिराजः । परमाहः । उत्तमाहः । राजसखः ।

५८८. अनेः शुनः ५-४-९६

अतिशब्दात्परो यः श्वन् शब्दः तदन्तात् तत्पुरुषात् टच् स्यात् । अतिक्रान्तः श्वानम् = अतिश्वः ।

५८९. नावो द्विगोः ५-४-९९

'गोरतद्धितलुकि' इत्यतः 'अतद्धितलुकि' इत्यनुवर्तते । नौ शब्दान्तात् द्विगोः समासान्तः टच् स्यात् न तु तद्धितलुकि । द्वौ नावौ समाहृते द्विनावम् । त्रिनावम् = तिस्रोनावः समाहृताः द्विगोरिति किम् ? राजनौः । अतद्धितलुकि इति किम् ? पञ्चभिः नौभिः क्रीतः = पञ्चनौः ।

५९०. कुमहद्भ्यामन्यतरस्याम् ५-४-१०५

ब्रह्मणः इति वर्तते । कुमहद्भ्याम् परो यो ब्रह्मा तदन्तात् तत्पुरुषात् समासान्तः टच् वा स्यात् । कुब्रह्मः । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा ।

५९१. छाया बाहुल्ये २-४-२२

'स नपुंसकम्' इत्यतः नपुंसकमित्यनुवर्तते । छायान्तः तत्पुरुषः नपुंसकलिङ्गः स्यात्, बाहुल्ये गम्यमाने । इक्षूणां छाया इक्षुच्छायम् । बाहुल्ये किम् ? कुड्यच्छाया ।

### ५९२. सभा राजामनुष्यपूर्वा २-४-२३

समान्तः तत्पुरुषः नपुंसकलिङ्गः स्यात् । सा चेत्सभा राजपूर्वा अमनुष्यपूर्वा च भवति । राजपर्यायस्यैवेष्यते । इनसभम् । ईश्वरसभम् । राजसभा-इह न भवति । अमनुष्यशब्दो रूढ्या रक्षःपिशादीनाह । रक्षस्सभम् । पिशाचसभम् ।

(सूत्राणि ५९२)

इति तत्पुरुषसमास प्रकरणम्

---

## अथ बहुव्रीहिसमास प्रकरणम्

### ५९३. शेषो बहुव्रीहिः २-२-२३

उक्तादन्यः शेषः । 'द्वितीयाश्रित' इत्यादिना द्वितीयाद्यन्तानां समास उक्तः । तेभ्योऽन्यः शेषः । प्रथमान्त इत्यर्थः । इदं पदद्वयमधिक्रियते ।

### ५९४. अनेकमन्यपदार्थे २-२-२४

'विभाषा' इत्यधिकृतम् । अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा समस्यते, स बहुव्रीहिः । अन्यपदार्थोनाम समस्यमानपदातिरिक्तस्य पदस्यार्थः, 'यं येन' इत्यादि पदैर्गृह्यमाणः । न तु 'यः' इत्यादिप्रथमान्तेन । यथा

प्राप्तमुदकं यं, सः प्राप्तोदको ग्रामः । द्वितीयाबहुव्रीहिः ।

ऊढः रथः येन, सः ऊढरथोऽनड्वान् । तृतीया ,,

उपहृतः पशुः यस्मै, सह उपहृतपशू रुद्रः । चतुर्थी ,,

उद्धृतमोदनं यस्याः, सा उद्धृतौदना स्थाली । पञ्चमी ,,

पीतमम्बरं यस्य, सः पीताम्बरो हरिः । षष्ठी ,,

वीराः पुरुषाः यस्यां, सा वीरपुरुषा नगरी । सप्तमी ,,

बहुविचित्रपदं काव्यं, दत्तभुक्तधनः पुरुषः इत्यादिः बहुपदबहुव्रीहिः । प्रथमान्तमिति किम् ? पञ्चभिः भुक्तं यस्य सः । अत्र बहुव्रीहिर्न भवति ।

**प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः**

पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजशब्दस्य लोपो वा वाच्य इत्यर्थः । प्रपतितः पर्णः यस्य, स प्रपतितपर्णः प्रपर्णो वा तरुः । उद्गतमुखः उन्मुखो वा पक्षी । विगतकेशः-विकेशः ।

**नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः**

अविद्यमानपुत्रः-अपुत्रः । अलोभः पुरुषः ।

**सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः**

सप्तम्यन्तपूर्वपदस्य उपमानपूर्वपदस्य च सुबन्तेन बहुव्रीहिर्भवति, पूर्वपदे यदुत्तरपदं तस्य लोपश्चेत्यर्थः । कण्ठेस्थः कालः यस्य सः कण्ठेकालः शिवः । उरसिलोमा । सप्तम्या अलुग् वक्ष्यते । गजमुखमिव मुखं यस्य सः गजमुखः । कुरङ्गनयना । चन्द्र इव वदनं यस्याः सा चन्द्रवदना । नागवेणिः । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । अस्तिक्षीरागौः । उच्चैरित्यादीनां वृत्तौ ऊर्ध्वदेशस्थितमित्याद्यर्थः । उच्चैर्मुखः । नीचैर्मुखः ।

**५९५. संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये २-२-२५**

संख्येये या संख्या तया सह अव्ययादयः समस्यन्ते, स बहुव्रीहिः । अन्यपदार्थस्याप्रतीतेः पूर्वेणाप्राप्तौ वचनम् । दशानां समीपे ये सन्ति ते उपदशाः । नव एकादश वेत्यर्थः । बहुव्रीहौ संख्येये इति वक्ष्यमाणो डच् । उपशब्दः समीपे समीपिनि च वर्तते । आद्ये उपदशमित्यव्ययीभावः, द्वितीये बहुव्रीहिरिति विवेकः ।

**५९६. ति विंशतेर्डिति ६-४-१४२**

विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति । आसन्नविंशाः । तिलोपोत्तरमतो गुणे इति पररूपम् । विंशतेरासन्ना इत्यर्थः । अदूरत्रिंशाः । टेरिति टिलोपः । अदूरचत्वारिंशाः । अदूरविंशाः । अधिकदशाः । द्वौ वा त्रयो वा द्वित्राः । डचि टिलोपः । अत्र ' अनिर्ज्ञातेऽर्थे बहुवचनमेव । यथा-कति भवतः पुत्राः ? इति बहुवचनमेव । अथवा समुदायेन पञ्चसंख्या विषय इति

बहुवचनम् । पञ्चधाः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः ।

**त्र्युपाभ्यां चतुरोऽजिष्यते**

डचोऽपवादः । तेन टिलोपो न । चतुर्णां समीपे ये सन्ति ते उपचतुराः । त्रयो वा चत्वारो वा त्रिचतुराः । संख्येये इति किम् ? अधिका विंशतिर्गवाम् ।

**५९७. दिङ्नामान्यन्तराले २–२–२६**

दिशां नामान्यन्तराले वाच्ये समस्यन्ते, स बहुव्रीहिः । दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा दिक् । पूर्वोत्तरा । उत्तरपश्चिमा । पश्चिमदक्षिणा ।

**सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः**

इति पूर्वपदस्य ह्रस्वः । सूत्रे नामग्रहणात् रूढानामेव समासः । तेन यौगिकानां न । ऐन्द्र्याः कौबेर्याश्च अन्तरालं दिक् ।

**५९८. तत्र तेनेदमिति सरूपे २–२–२७**

तत्रेति सप्तम्यन्तं गृह्यते । तेनेति तृतीयान्तम् । सरूपग्रहणं प्रत्येकमभिसंबध्यते । इतिशब्दो लौकिकीं विवक्षामनुसारयति । सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये पदे, इदं युद्धं प्रवृत्तमित्यर्थे समस्येते, बहुव्रीहिश्च समासः । इतिकरणादयं विषयविशेषो लभ्यते । केशेषु केशेषु गृहीत्वा प्रवृत्तमिदं युद्धं=केशाकेशि । कचाकचि । इच् समासान्तो वक्ष्यते पूर्वपददीर्घश्च । गृहीत्वेत्यस्य पुरुषमित्यादि कर्म यथायथमूह्यम् । दण्डैश्च दण्डैश्च प्रहृत्य प्रवृत्तं युद्धं=दण्डादण्डि । मुसलामुसलि । मुष्टीमुष्टी । युद्धं ग्रहणं प्रहरणमिति च क्रियामात्रस्योपलक्षणम् । तेन 'कर्णाकर्णि प्रथितमयशः हस्ताहस्तिमिषात् स्पृशन् कुचतटीं' इत्यादि सिद्धम् । तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वञ्च ।

**५९९. तेन सहेति तुल्ययोगे २–२–२८**

समकालभवेन गमनादिना योगस्तुल्ययोगः । तुल्ययोगे विद्यमानं सहेत्येतत् तृतीयान्तेन समस्यते, स बहुव्रीहिः । पुत्रेण सह आगतः सहपुत्र आगतः । पक्षे–

## ६००. वोपसर्जनस्य ६-३-८२

'सहस्य सः संज्ञायां' मित्यतः 'सहस्य सः' इत्यनुवर्तते। उपसर्जनसर्वावयवः समासः उपसर्जनः। स च बहुव्रीहिरन्यपदार्थप्राधान्यात्। बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा। सपुत्रः। सहभार्यः—सभार्यः। बहुव्रीह्यवयवस्येति किम्? सहकृत्वा। 'सहे च' (३-२-९६) इति क्वनिप् उपपदसमासः। तुल्ययोग इति किम्? 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'। पुत्राणां विद्यमानत्वेऽपीत्यर्थः। वहनक्रियायां योगाभावान्न समासः। कथं सकर्मकः, सलोमकः? अत्र सहशब्दः विद्यमानवाची। सह विद्यमानं कर्म यस्येति विग्रहः। 'अनेकमन्यपदार्थे' इति समासः। तेन विद्यमानपुत्रेत्यर्थे सपुत्रा गर्दभीत्यपि। तुल्ययोगे प्रथमान्ताभावात् पूर्वेण प्राप्त्यभावादिदं सूत्रं प्रवृत्तम्।

## ६०१. प्रकृत्याशिषि ६-३-८३

सहशब्दः प्रकृत्या स्यादाशिषि। स्वस्ति देवदत्ताय सहपुत्राय सहभार्याय। स्वस्ति भूयात् यजमानस्य सहकुटुम्बस्य। अत्र सकुटुम्बस्येत्यसाधु।

## ६०२. स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६-३-३४

भाषितपुंस्कादनूङित्येकं समस्तं पदम्। भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्ते तद् भाषितपुंस्कम्। तदस्यास्तीति भाषितपुंस्कः शब्दः। अर्शआद्यच्। तस्मात् ऊङ् न विद्यते इति भाषितपुंस्कादनूङ्। तस्येत्यर्थः। निपातनात् पञ्चम्या अलुक्, षष्ठ्याश्च लुक्। स्त्रियाः = स्त्रीवाचकस्य। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात् परः ऊङोऽभावो यस्मिन् तस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः। 'अलुगुत्तरपदे' इत्यतः उत्तरपदे इत्यनुवृत्तम्। सुन्दरी भार्या यस्य सः सुन्दरभार्यः। अत्र सुन्दरत्वं प्रवृत्तिनिमित्तं स्त्रियां पुंसि च तुल्यमिति भाषितपुंस्कम्। तद्वान् सुन्दरशब्दः। गौरादित्वान्ङीपि सुन्दरी। अत्र ऊङ् नास्ति।

समानाधिकरणे भार्याशब्दे परे सुन्दरेति पुंवद्रूपम् । चित्रगुः । 'गोस्त्रियो-रुपसर्जनस्ये'ति गोशब्दस्य ह्रस्वः । सूक्ष्मबुद्धिः । जरती माता अस्य जरन्मातृकः । पावनी दृष्टिरस्य पावनदृष्टिः । स्त्रियाः किम् ? ग्रामणि कुलं गतिरस्य ग्रामणिगतिः । पुंवत्त्वे ग्रामणीगतिरिति दीर्घः श्रूयेत । भाषितपुंस्कात् किम् ? गङ्गाभार्यः । गङ्गाशब्दो नित्यस्त्रीलिङ्ग इति भाषितपुंस्कत्वाभावात् न पुंवद्भावः । अनूङ् किम् ? वामोरूभार्यः । 'संहितशफलक्षण वामादेश्च' इत्यूङ् । समानाधिकरणे किम् ? तरुण्याः माता तरुणीमाता । स्त्रियां किम् ? नर्तकी प्रधानं यस्यां सा नर्तकीप्रधाना गोष्ठी । उत्तरपदे इति किम् ? असमासे मा भूत् । गुरोः पावनी दृष्टिः । पूरण्यान्तु—

## ६०३. अप् पूरणीप्रमाण्योः ५-४-११६

'बहुव्रीहौ सक्थ्यक्ष्णोः . . .' इत्यतो बहुव्रीहाविति वर्तते । स्त्रीलिङ्ग-निर्देशात् पूरणप्रत्ययान्तं स्त्रीलिङ्गमिह गृह्यते । पूरणप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात् प्रमाणीशब्दान्ताच्च बहुव्रीहेरप् स्यात् समासान्तः । स च तद्धितः । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । प्रमाणशब्दः करणल्युडन्तो विशेष्यनिघ्नः । टीड्ढाणञिति ङीप् । स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः । अप्रियादिष्विति किम् ? कल्याणी प्रिया अस्य कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । अबला । तनया—इति प्रियादयः । कथं दृढभक्तिः ? दृढं भक्तिरस्येति विग्रहः । अदार्ढ्यनिवृत्तिमात्रपरत्वेन दृढ-शब्दस्य 'सामान्ये नपुंसकम्' इति नपुंसकता । स्त्रीत्वविवक्षायां दृढभक्तिः ।

## ६०४. तसिलादिष्वाकृत्वसुचः ६-३-३५

तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत् स्यात् । परिगणनं कर्तव्यम् । त्रतसौ ? तरप् तमपौ । चरड्जातीयरौ । कल्पब्देशीयरौ । रूपप्पाशपौ । थाल् । थ्यन् ॥ अथोदाहरणानि । बह्वीषु-बहुत्र । बह्व्याः बहुतः । अतिशयेन दर्शनीया दर्शनीयतरा । दर्शनीयतमा । अतिशयेन पट्वी

पट्वितरा, पट्वितमेत्यत्र तु वक्ष्यमाणो ह्रस्वः परत्वात् पुंवद्भावं बाधते । पटुतरा, पटुतमेति तु स्त्रियां ङीषोऽभावे बोध्यम् । भूतपूर्वा मृद्वी मृदुचरी । वृद्धया सदृशी वृद्धजातीया । ईषदसमाप्तौ कल्पब्देशीयरौ । प्रायेण दर्शनीया दर्शनीयकल्पा । दर्शनीयदेशीया । देश्यस्य त्वपरिगणनात् दर्शनीयादेश्येत्येव । एवं पट्वीदेश्या । काशिकायां देश्यस्यापि परिगणनं कृतम् । भाष्ये तु न दृश्यते । प्रशस्ता दर्शनीया दर्शनीयरूपा । रूप्यस्यापरिगणनात् । सुन्दर्या भूतपूर्वः सुन्दरीरूप्यः पटः । याप्या निन्दनीया अश्वा अश्वपाशा । बह्वीशब्दात् प्रकारवचने थाल् । बहुथा । बहुप्रकारेत्यर्थः । अजाभ्यो हिता अजथ्या ।।

## शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः (वा)

बह्वीभ्यो देहि बहुशः । अल्पाभ्यो देहि अल्पशः ।

## त्वतलोर्गुणवचनस्य (वा)

शुक्लाया भावः शुक्लत्वं । शुक्लता । पट्व्याः भावः पटुत्वं । पटुता । गुणवचनस्य किम् ? कर्त्रीत्वम् । 'अत्र संज्ञाजातिकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्दो गुणवचन इत्युच्यते । आकडारसूत्रभाष्यतः तथैव लाभात्' इति नागेशभट्टाः । जातेरेकत्वमिति तु—'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इत्यनेन सिद्धम् । 'शरदः कृतार्थता' इत्यादौ सामान्ये नपुंसकम् । कृतार्थस्य भावः कृतार्थता ।।

## भस्याढे तद्धिते (वा)

'स्त्रीभ्यो ढक्' इति विहितो ढोऽत्र गृह्यते । तद्धिते परे भस्य स्त्रीवाचकस्य पुंवद्भावः । हस्तिनीनां समूहो हास्तिकम् । 'अचित्तहस्तिधेनोष्ठक्' । पुंवत्त्वे 'नस्तद्धिते' इति टिलोपः । अढे किम् ? रौहिणेयः ।। भवत्याः छात्राः भावत्काः-भवदीयाः । 'भवतष्ठक्छसौ' । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' ।।

## कुक्कुट्यादीनामण्डादिषु (वा)

कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं मृगपदम् । मृगक्षीरम् । काकशावः ।

## ६०५. न कोपधायाः ६-३-३७

कोपधायाः स्त्रियाः न पुंवत् । पाचिकाभार्यः । रसिकाभार्यः ।

## ६०६. स्वाङ्गाच्चेतः ६-३-४०

स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात् किम् ? पटुभार्यः । ईतः किम् ? सुनयनाभार्यः ।

## ६०७. जातेश्च ६-३-४१

जातेः परः यः स्त्रीप्रत्ययस्तदन्तं न पुंवत् । शूद्राभार्यः । ब्राह्मणीभार्यः । सौत्रस्यैवायं निषेधः । तेन हस्तिनीनां समूहो हस्तिकमित्यत्र 'भस्याढे . . .' इति पुंवद्भावो भवत्येव ।

## ६०८. बहुव्रीहौ संख्येये डजबहुगणात् ५-४-७३

'संख्याव्ययासन्न' इति विहितः संख्येये यो बहुव्रीहिः तस्मात् डच् स्यात् समासान्तः, न तु बहुगणान्तात् । उपदशाः । 'नस्तद्धिते' इति टिलोपः । उपत्रिंशाः । टेरिति टिलोपः । अबहुगणादिति किम् ? उपबहवः । उपगणाः । अत्र स्वरे विशेषः–

## संख्यायास्तत्पुरुषस्य डच् वाच्यः (वा)

निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निश्चत्वारिंशानि मैत्रस्य । निर्विंशानि यज्ञदत्तस्य ।। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । कथं गवां विंशतिः गोविंशतिः ? अव्ययपूर्वादिति तत्पुरुषस्य विशेषणादिति भाष्यम् ।

## ६०९. बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ५-४-११३

स्वाङ्गवाचिनः सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य सः दीर्घसक्थः । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । पुण्डरीकाक्षः । कमलाक्षी । पित्रादिभ्योऽपि । बहुव्रीहेः किम् ? विशालाक्ष्णा पश्यति । कथं 'काक्षेण

पश्यती' ति ? अक्षमिन्द्रियम् । कुत्सितमक्षं काक्षम् । 'का पथ्यक्षयोः' (६-३-१०४) इति कादेशः । दर्शन क्रियायोगात् सामान्यवाचिनो विशेषेऽव-स्थानम् ।। स्वाङ्गात् किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शनात्' इत्यच् ।।

६१०. द्वित्रिभ्यां ष मूर्ध्नः ५-४-११५

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ द्विमूर्धः । त्रिमूर्धः ।।

६११. अन्तर्बहिर्भ्यांश्च लोम्नः ५-४-११७

अप् पूरणीप्रमाण्योः इत्यतोऽबिति वर्तते । आभ्यां लोम्नोऽप् स्यात् बहु-व्रीहौ । अन्तर्गतानि लोमान्यस्य अन्तर्लोमः पटः । बहिर्लोमं चर्म ।।

६१२. सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ५-४-१२०

एते बहुव्रीहौ अच् प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः पुरुषः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवा अस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । शारिः शारिका पक्षिविशेषः । चतस्रः अश्रयः अस्य चतुरश्रः । प्रोष्ठो गौः तस्येव पादावस्य प्रोष्ठपदः ।।

६१३. नित्यमसिच् प्रजामेधयोः ५-४-१२२

नञ् दुस् सुभ्य इत्यनुवर्तते । एभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद् बहुव्रीहेः ऽच् प्रत्ययः स्यात् समासान्तः । अविद्यमाना प्रजा अस्य अप्रजाः । दुष्प्रजाः । अत्र 'इदुदुपधस्य . . .' इति षत्वम् । सुप्रजाः । अमेधाः । 'मतिं चकार पुर्मेधाः' (रामा-बाल-४७-१९) सुमेधाः ।

६१४. धर्मादनिच् केवलात् ५-४-१२४

बहुव्रीहिणा पूर्वपदादित्याक्षिप्यते । केवलात् पूर्वपदात् परो यो धर्मशब्दः तदन्ताद्बहुव्रीहेरनिच् स्यात् । कल्याणः धर्मोऽस्य कल्याणधर्मा । प्रियाधर्मा । केवलात् किम् ? परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् । परमस्वधर्मः । अत्र परमशब्देऽपि पूर्वपदमिति स्वशब्दस्य केवलत्वं नास्ति । केवलत्वञ्च स्वसजातीयान्याभाववत्त्वम् । कर्मधारयपूर्वपदे बहुव्रीहावनिज् भवत्येव । सन्दिग्ध-

साध्यधर्मा । संदिग्धसाध्यः धर्मः यस्येति विग्रहः । अत्र हि 'सन्दिग्धसाध्य' इति समुदायः पूर्वपदं केवलम् । एवं निवृत्तिधर्मा, अनुच्छित्तिधर्मा ॥

६१५. दक्षिणेर्मा लुब्धयोगे ५-४-१२६

लुब्धो व्याधः । दक्षिणेर्मेत्यनिजन्तो निपात्यते लुब्धयोगे बहुव्रीहौ । दक्षिणे ईर्मं व्रणं यस्य सः दक्षिणेर्मा मृगः । दक्षिणाङ्गे व्याधेन कृतव्रण इत्यर्थः ॥

६१६. इच् कर्मव्यतिहारे ५-४-१२७

कर्मव्यतिहारे यो बहुव्रीहिः तस्मादिच् स्यात् समासान्तः । 'तत्र तेनेदमिति सरूपे' इत्ययं बहुव्रीहिर्गृह्यते ।

६१७. अन्येषामपि दृश्यते ६-३-१३७

'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतो दीर्घ इति वर्तते । यस्य दीर्घो न विहितः ततोऽन्येषामपि दीर्घो दृश्यते । स च शिष्टप्रयोगादनुगन्तव्यः । प्रायेण कर्मव्यतिहारे बहुव्रीहौ । केशाकेशि । कचाकचि । मुष्टीमुष्टि ॥ अन्यत्रापि । तुराषाट् । तुरशब्दस्य दीर्घः । नारकः । पूरुषः ॥

६१८. द्विदण्ड्यादिभ्यश्च ५-४-१२८

तादर्थ्ये चतुर्थी । द्विदण्ड्यादिसिध्यर्थमिच् स्यात् समासान्तः । समुदायनिपातनादर्थविशेषो गम्यते, यथाप्रयोगम् । द्वौ दण्डौ यस्मिन् प्रहरणे तत् द्विदण्डि प्रहरणम् , द्विमुसलि । उभाहस्ति । निकुच्य कर्णौ धावति निकुच्यकर्णि धावति । प्रोह्य पादौ हस्तिनं वाहयति । प्रोह्यपादि वाहयति । संहत्य पुच्छं धावति संहतपुच्छं धावति श्वा । उभाकर्णि प्रहरति । उभौ कर्णौ गृहीत्वेत्यर्थः । एवमुभादन्ति, उभयादन्ति, उभापाणि, उभयापाणि । उभाबाहु । निपातनादिच्प्रत्ययलोपः । प्रत्ययलक्षणेनाव्ययीभावत्वम् । इजन्तानामव्ययत्वं पूर्वमुक्तम् ।

६१९. धनुषश्च ५-४-१३२

'ऊधसोऽनङ्' इत्यतोऽनङित्यनुवर्तते । धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् । प्रत्ययाविकारस्थत्वेऽपि ङित्वादन्तादेशः । गाण्डीवधन्वा । शार्ङ्गधन्वा ।

यद्यपि नकारान्तधन्वशब्दादप्येतत् सिद्धम्, 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इत्यमरः, तथापि गाण्डीवधनुरित्यादिवारणार्थमिदम्। कथं तर्हि महिम्नःस्तवे-स्वलावण्याशंसा धृतधनुषम्' इति, आर्षत्वात् समाधेयम्।

## ६२०. वा संज्ञायाम् ५-४-१३३.

पूर्वेण प्राप्तोऽनङ् विकल्प्यते। दृढधनुः-दृढधन्वा। शतधनुः-शतधन्वा। पुरुषविशेषस्य संज्ञा।

## ६२१. जायाया निङ् ५-४-१३४

जायान्तस्य बहुव्रीः निङादेशः स्यात्। सीता जाया अस्य। आकारस्य निङि—

## ६२२. लोपोव्योर्वलि ६-१-६६

वकारयकारयोर्लोपः स्याद्वलिपरे। इति यलोपः। सीताजानिः। व्रजव्रीडादिषु धातुपाठे वकारोच्चारणसामर्थ्यान्न वलोपः। 'स्थण्डिलाच्छयितरि व्रते' इत्यादि निर्देशाच्च॥ जानकीजानिः। कोपधत्वान्न पुंवद्भावः। युवतिः जाया अस्य युवजानिः। पुंवद्भावः। सुन्दरजानिः॥

## ६२३. गन्धस्येदुत्पूतिसुसुरभिभ्यः ५-४-१३५

उत् पूति सु सुरभि-इत्येतेभ्यः परस्य गन्धशब्दस्य इकारादेशः स्यात्। गन्धस्येति षष्ठीनिर्देशात् पूर्वोत्तरसाहचर्याच्च इकार आदेशः। प्रत्ययत्वेऽपि न क्षतिः। 'यस्येति च' इत्यकारस्य लोपात्। उद्गतो गन्धोऽस्य उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। अस्ति गन्धशब्दो गुणवाची 'चन्दनस्य गन्ध' इत्यादौ। अस्ति द्रव्यवाची 'वहति जलमियं पिनष्टि गन्धान्' इत्यादौ। 'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः'॥ इति कोशात्। तत्र गुणवाचिनः सूत्रे ग्रहणम्।

### गन्धस्येत्वे तदेकान्तग्रहणम् (वा)

इति वार्तिकात्। गुणसमुदायो द्रव्यम्। तदेकान्तोऽवयवो गुणः। सुगन्धि पुष्पं सलिलञ्च। सुगन्धिर्वायुः। तेनेहन-सु शोभनाः गन्धाः सुगन्धिद्रव्याणि अस्य, सुगन्ध आपणिकः।

### ६२४. अल्पाख्यायाम् ५–४–१३६

अल्पार्थे यो गन्धशब्दः तस्येकारो भवति बहुव्रीहौ । सूपगन्धि भोजनम् । सूपस्य गन्धः लेशो यस्मिन् । घृतगन्धि ॥

### ६२५. उपमानाच्च ५–४–१३७

उपमानवाचकात् परो यो गन्धशब्दः तस्येकारः स्याद् बहुव्रीहौ ॥ पद्मस्येव गन्धोस्य पद्मगन्धिः । उत्पलगन्धिः ॥

### ६२६. पादस्य लोपोऽहस्त्यादिभ्यः ५–४–१३८

उपमानादित्येव । हस्त्यादिवर्जितात् परस्य पादशब्दस्य लोपः स्यात् समासान्तो बहुव्रीहौ । अभावात्मकोऽपि लोपः स्थानिद्वारेण समासान्तः । शैषिकस्य कपो निवृत्त्यर्थं लोपस्य समासान्तत्वमावश्यकम् । अन्यथा अनुक्तसमासान्तत्वात् 'शेषाद्विभाषा' इति कप् प्रसज्येत ॥ व्याघ्रस्येव पादावस्य व्याघ्रपात् । सिंहपात् । अहस्त्यादिभ्यः किम् ? हस्तिपादः । गणिकापादः । कुसूलपादः ।

### ६२७. कुम्भपदीषु च ५–४–१३९

कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् । 'पादः पत्' । कुम्भपदी । एकपदी । शतपदी । द्विपदी । त्रिपदी । षट्पदी । अष्टापदी । अपदी ॥

### ६२८. सुहृद्दुर्हृदौ मित्रामित्रयोः ५–४–१५०

सुदुर्भ्यां परस्य हृदयस्य हृद्भावो निपात्यते, यथासंख्यं मित्रामित्रयोरभिधेययोः । सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः कारुणिकः । दुर्हृदयश्चोरः ॥

### ६२९. उरःप्रभृतिभ्यः कप् ५–४–१५१

उरःप्रभृत्यन्तात् बहुव्रीहेः कप् प्रत्ययः स्यात् समासान्तः । व्यूढं=विशालमुरोऽस्य व्यूढोरस्कः । प्रियसर्पिष्कः । 'इणः षः' इति षत्वम् । उरस्, सर्पिस्, उपानह्, पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः, दधि, मधु, शालि, अर्थान्नञः–इत्युरःप्रभृतयः । अर्थान्नञः अनर्थकम् । नञः किम् ?

अपार्थम् । 'शेषाद्विभाषा' इति पाक्षिके कपि अपार्थकमित्यपि ।।

## ६३०. इनः स्त्रियाम् ५-४-१५२

इन्नन्ताद् बहुव्रीहेः कप् प्रत्ययः स्यात् स्त्रियाम् । बहुदण्डिका नगरी । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति'। बहुवाग्मिका सभा । स्त्रियां किम् ? बहुस्वामी । बहुस्वामिको ग्रामः ।।

## ६३१. नद्यृतश्च ५-४-१५३

बहुव्रीहिणा उत्तरपदादित्याक्षिप्यते । नद्युत्तरपदात् ऋदन्तोरपदाच्च बहुव्रीहेः कप् स्यात् ? बह्वयः कुमार्यः अस्मिन् बहुकुमारीको देशः । अत्र ।

## ६३२. केऽणः ७-४-१३

'शृदॄप्रां ह्रस्वो वा' इत्यतो ह्रस्व इत्यनुवर्तते । के प्रत्यये परेऽणो ह्रस्वः स्यात् । कुमार्येव कुमारिका । स्वार्थे कप्रत्ययस्तद्धितः । किशोरिका । अणः किम् ? गोका । नौका । इति ह्रस्वे प्राप्ते ।

## ६३३. न कपि ७-४-१४

कपि प्रत्यये परेऽणो ह्रस्वो न स्यात् । बहुवधूको ग्रामः । अनेककर्तृकः । शोभनस्वसृकः ।।

## ६३४. शेषाद्विभाषा ५-४-१५४

इतः पूर्वं बहुव्रीह्यधिकारे येभ्यः समासान्ता उक्तास्तेभ्योऽन्यः शेषः । तस्माद् बहुव्रीहेः कप् वा स्यात् । महायशस्कः । महायशाः । वृषस्कन्धः । वृषस्कन्धकः ।। बहुव्रीह्यधिकारे इति किम् ? विशालपथिका नगरी । विशालपथा वा । 'ऋक्पूरब्धूः पथामानक्षे' इति वक्ष्यमाणेन अः समासान्तः । अनुक्तेति किम् ? व्याघ्रपात् । सुगन्धिः । स्वार्थे कप्रत्यये तु सुगन्धिकः ।।

## ६३५. आपोऽन्यतरस्याम् ७-४-१५

कप्याबन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः । बहुमालकः । कबभावे बहुमालः । कोमललताकं । कोमललतकं । कोमललतम् ।।

30

### ६३६. वन्दिते भ्रातुः ५-४-१५७

पूजितेऽर्थे यो भ्रातृशब्दस्तदन्ताद् बहुव्रीहेर्नकप् । प्रशस्तभ्राता रामः । वन्दिते किम् ? मूर्खभ्रातृको दुर्योधनः ।

### ६३७. नाडीतन्त्र्योः स्वाङ्गे ५-४-१५९

स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तान्न कप् । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । तन्त्रीर्धमनी । तन्त्रीशब्द उणादौ । स्त्रीप्रत्ययान्तत्वाभावात् गोस्त्रियोरिति ह्रस्वो न । स्वाङ्गे किम् ? बहुनाडीकः स्तम्बः । बहुतन्त्रीका वीणा ।

### ६३८. निष्प्रवाणिश्च ५-४-१६०

'नद्यृतश्च' इति प्राप्तस्य कपोऽभावोऽत्र निपात्यते । प्रवाणी तन्तुवायशलाका । निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः । समाप्तवानक्रियः नवः इत्यर्थः ॥

### ६३९. सप्तमीविशेषणे बहुव्रीहौ २-२-३५

'उपसर्जनं पूर्वम्' इत्यतः पूर्वमित्यनुवर्तते । सप्तम्यन्तं विशेषणञ्च बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेकालः । उरसिलोमा । विशेषणत्वादेव सिद्धे सप्तमीग्रहणं क्वचिद्व्यधिकरण्येऽपि समासो भवतीति ज्ञापनार्थम् । तेन सच्छास्त्रजन्मा विवेकः, इत्यादि सिद्धम् । एवं फालनेत्रः । विशेषणम्-चित्रगुः । पीताम्बरः । उभयोः प्रथमानिर्दिष्टत्वेनानियमे प्राप्ते विशेषणस्यैव पूर्वनिपातार्थमिदम् ।

#### सर्वनामसंख्ययोरुपसंख्यानम् (वा)

बहुव्रीहौ पूर्वनिपातस्येति शेषः । सर्वं श्वेतमस्य सर्वश्वेतः । सर्वकृष्णः । द्विशुक्लः । द्विकृष्णः ।

#### वा प्रियस्य पूर्वनिपातः (वा)

भोजनप्रियः । प्रियभोजनः ।

#### गड्वादिभ्यः सप्तम्यन्तं परम् (वा)

गडुकण्ठः । चन्द्रमौलिः । दण्डपाणिः ।

### ६४०. वाऽहिताग्न्यादिषु २-२-३७

आहिताग्न्यादिषु पूर्वप्रयोगार्हं वा परं प्रयोज्यम् । अग्न्याहितः । आहिताग्निः । जातपुत्रः । पुत्रजातः । जातदन्तः । तैलपीतः । ऊढभार्यः । गतार्थः । आकृतिगणोऽयम् । तेन अस्युद्यतः । उद्यतासिः इत्यादयः सिद्धाः । किञ्च विशेषणविशेष्यभावस्य विवक्षानिबन्धनत्वात् लक्ष्यानुसारेण पूर्वनिपतितस्य विशेषणत्वं बोध्यम् । यथा-'यूपच्छिद्रेषु ग्रामेषु' । भार्याद्वितीयश्चैत्रः ।।

**संख्याया अल्पीयस्याः (वा)**

द्वित्राः । त्रिचतुराः ।

(सूत्रम् ६४०)

इति बहुव्रीहिसमास प्रकरणम्

---

## अथ द्वन्द्वसमास प्रकरणम्

### ६४१. चार्थे द्वन्द्वः २-२-२९

'अनेकमन्यपदार्थे' इत्यतोऽनेकमित्यनुवर्तते । अनेकं सुबन्तं चशब्दार्थे वर्तमानं वा समस्यते, स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्य एकस्मिन् पदार्थेऽन्वये चार्थः समुच्चयः । यथा-ईश्वरं गुरुञ्च भजस्व । अत्र ईश्वरपदार्थस्य गुरुपदार्थानपेक्षत्वेनासामर्थ्यान्न समासः । एवमाम्रं खर्जूरञ्च भक्षयेत्यादौ । अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । यथा-भिक्षामट गाञ्चानय । अत्र भिक्षाटनस्य प्राधान्यं, गवानयनस्यानुषङ्गिकत्वम् । अत्र अटनक्रियया आनयनक्रिया अन्वाचीयते आनुषङ्गिकत्वेन योज्यते । भिक्षाया गोश्च परस्परमनन्वयात् सामर्थ्याभावेन न समासः । एवं जलमानय कूर्मञ्च पश्येत्यादौ । मिलितानां परस्पर सापेक्षाणामेकस्मिन्नन्वये तु इतरेतरयोगः । यथा-रामो लक्ष्मणश्च

वनं गच्छतः । समूहः समाहारः । अवयवभेदानुगतः इतरेतरयोगः । तिरोहितावयवभेदः संहतिप्रधानः समाहार इति तयोर्भेदः । चार्थयोरनयोः सामर्थ्यात् समासः ।। रामश्च लक्ष्मणश्च रामलक्ष्मणौ । धवखदिरौ । धर्मार्थकाममोक्षाः ।। समाहारे-पाणी च पादौ च एषां समाहारः पाणिपादम् । समाहारस्यैकत्वात् एकवचनम् । 'स नपुंसकम्' इति क्लीबता । संज्ञापरिभाषम् ।।

## ६४२. राजदन्तादिषु परम् २-२-३१

'उपसर्जनं पूर्वम्' इत्यत उपसर्जनमित्यनुवर्तते । तेन पूर्वप्रयोगार्हं पदं लक्ष्यते । राजदन्तादिषु पूर्वं प्रयोगार्हं पदं परं प्रयोज्यम् । दन्तानां राजा राजदन्तः । तत्पुरुषोऽयम् । दन्तपङ्क्तौ मध्यस्थौ द्वौ राजदन्तौ । वनस्य अग्रे अग्रेवणम् । निपातनात् सप्तम्या अलुक् । 'वनं पुरगामिश्रका...' (८-४-४) इत्यादिना णत्वम् ।

### धर्मादिष्वनियमः (वा)

अर्थधर्मौ । धर्मार्थौ । जायापती । जम्पती । दम्पती । जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते । अन्तादी । आद्यन्तौ । आकृतिगणोऽयम् ।।

## ६४३. द्वन्द्वे घि २-२-३२

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ।।

## ६४४. अजाद्यन्तम् २-२-३३

पूर्वं प्रयोज्यम् । ईशकृष्णौ ।

### बहुष्वनियमः (वा)

अश्वरथेन्द्राः ।। इन्द्ररथाश्वाः ।।

## ६४५. अल्पाच्तरम् २-२-३४

अल्पाच्तरं शब्दरूपं द्वन्द्वे पूर्वं प्रयोज्यम् । शिवकेशवौ । धवखदिरौ ।

## ६४६. द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २-४-२

'द्विगुरेकवचनम्' इति पूर्वसूत्रात् एकवचनमित्यनुवर्तते । प्राण्यङ्गानां सेनाङ्गानाञ्च द्वन्द्वः एकवत् स्यात् । चार्थसमाहारस्यैकत्वात् एकवचने सिद्धे

नियमार्थं प्रकरणम् । एषां समाहार एव यथा स्यात् । प्राण्यङ्गानां तावत्-पाणिपादम् । शिरोग्रीवम् । अक्षिकर्णम् । तूर्याङ्गशब्देन वादकानां ग्रहणं, न तु वाद्यानाम् । मार्दङ्गिकपाणविकम् । वैणिकतालिकम् । सेनाङ्गानां तावत् । रथिकाश्वारोहम् । सैनिकहास्तिपकम् । अत्र प्रत्यासत्त्या तत्तद्वाक्योपस्थित-प्राण्यङ्गाद्येव द्विर्तीयं गृह्यते । तेन रथिकमार्दङ्गिकौ—इत्यादि सिध्यति । सर्वत्र समाहारे 'स नपुंसकम्' इति क्लीबता ॥

### ६४७. क्षुद्रजन्तवः २–४–९

क्षुद्रजन्तुवाचिनां द्वन्द्व एकवत् स्यात् । दंशमशकम् । यूकालिक्षम् । आनकुलात् क्षुद्रजन्तवः ॥

### ६४८. येषाञ्च विरोधः शाश्वतिकः २–४–८

येषां शाश्वतिकं वैरं प्रसिद्धं तद्वाचिनां द्वन्द्व एकवत् स्यात् । गोव्याघ्रम् । अहिनकुलम् । मार्जारमूषकम् । अश्वमहिषम् । 'देवासुराः' इत्यादौ तु वैरं नैमित्तिकं न तु शाश्वतिकमिति न दोषः ॥

### ६४९. न दधिपय आदीनि २–४–१४

एतानि नैकवत् स्युः । एषां समाहारद्वन्द्वो न भवतीति यावत् । दधिपयसी । मधुसर्पिषी । शुक्लकृष्णौ । अध्ययनतपसी । ऋक्सामे । वाङ्मनसे ॥ अनयो रजन्तनिपातनं वक्ष्यते ॥

### ६५०. आनङ् ऋतो द्वन्द्वे ६–३–२५

'ऋतो विद्यायोनिसंबन्धेभ्यः' इति सूत्रमनुवर्तते । 'अलुगुत्तरपदे' इत्यत उत्तरपदे इति च । ऋकारान्तानां विद्यासंबन्धवाचिनां योनिसंबन्धवाचिनाञ्च यो द्वन्द्वः, तत्रोत्तरपदे परे पूर्वपदस्य आनङादेशः स्यात् । आनङि ङकार इत् । अकार उच्चारणार्थः । ङित्वादन्त्यादेशः । नकारस्तु रपरत्वनिवृत्त्यर्थः । 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपः । होतापोतारौ । होतृपोतृनेष्टोद्गातारः । उत्तरपदपरकत्वं नेष्टृशब्दस्यैवेति तस्यैवानङ् । अत्र होत्रादिकर्तृकैकयज्ञोपयोगि-विद्यावत्त्वसंबन्धो बोध्यः । योनिसंबन्धेभ्यः—मातापितरौ । पिताभ्रातरौ ।

यातानानन्दारौ । मातास्वसारौ । ऋत इत्यनुवर्तमाने पुनः ऋत इत्युच्चारणं ऋकारान्तानामेव द्वन्द्वे यथा स्यादित्यर्थम् । तेन पितृपितामहावित्यादौ न । कथं तर्हि पितापुत्रौ ? मातापुत्रौ । पुत्रेऽन्यतरस्यामित्यतः 'पुत्रे' इत्यनुवर्तते ॥ एतच्च क्काचित्कम् । भ्रातृपुत्रौ ॥

६५१. देवताद्वन्द्वे च ६-३-२६

इहोत्तरपदे परे आनङ् । इन्द्रावरुणौ । इन्द्राबृहस्पती । सूर्याचन्द्रमसौ ? मित्रावरुणौ ।

वायुशब्दप्रयोगे प्रतिषेधः (वा)

अग्निवायू । वाय्वग्नी । पुनर्द्वन्द्वग्रहणं वेदप्रसिद्धसाहचर्यस्य परिग्रहार्थम् । तेनेह न । ब्रह्मप्रजापती । शिववैश्रवणौ ॥ कथं सूर्यचन्द्रौ ? अदेवतात्वेन ग्रहणात् ।

६५२. ईदग्नेः सोमवरुणयोः ६-३-२७

अग्नेरीकारः स्याद्देवताद्वन्द्वे सोमवरुणयोः परयोः ॥ अग्नीवरुणौ । सोमे तु-

६५३. अग्नेः स्तुत्स्तोमसोमाः ८-३-८२

षत्वप्रकरणस्थमिदम् । अग्नेः परेषां स्तुत्प्रभृतीनां सस्य षः स्यात् समासे । अग्नीषोमौ । अग्निष्टुत् । अग्निष्टोमः ।

६५४. मातरपितरावुदीचाम् ६-३-३२

उदीचामाचार्याणां मतेऽनङादेशो मातृशब्दस्य निपात्यते । माता च पिता च मातरपितरौ । पक्षे मातापितरौ । 'पिता मात्रा' इति वक्ष्यमाणेनैकशेषे पितरावित्यपि ॥

६५५. द्वन्द्वाच्चुदषहान्तात् समाहारे ५-४-१०६

द्वन्द्वाच्चवर्गान्तात् दकारान्तात् षकारान्तात् हकारान्ताच्च टच् प्रत्ययः स्यात् समाहारे । 'राजाहःसखिभ्यष्टच्' इत्यतष्टजित्यनुवर्तते । वाक् च त्वक् च वाक्त्वचम् । श्रीस्रजम् । संपद्विपदम् । वीचिविप्रुषम् । धेनुगोदुहम् । छत्रोपानहम् ॥ समाहारे किम् ? प्रावृट्शरदौ ।

---

# अथ समासपरिशिष्टम्

एकादश द्वादशेति कोऽयं समासः ? द्वन्द्वः । एकश्च दश च एकादश । 'अन्येषामपि दृश्यते' (६-३-१३७) इत्येकशब्दस्य दशशब्दे परे दीर्घः । द्वौ च दश च द्वादश । 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इति द्विशब्दस्य आत् । त्रयोदश । 'त्रेस्त्रयः' । अष्टादश । 'द्व्यष्टन' इत्यात्वम् । एकेन न विंशतिः । एकान्नविंशतिः । एकान्नविंशतिः । एकोनविंशतिरित्यर्थः । विंशतिशब्देन नञ् समासः । ततश्चैकेन 'सह' इति योगविभागात् मयूर-व्यंसकादित्वाद्वा समासः । 'एकादिश्चैकस्य चादुक्' इति नञः प्रकृतिभावः एकस्य चादुगागमश्च । दकारस्यानुनासिकविकल्पः । एकाधिका विंशतिः । एकविंशतिः । शाकपार्थिवादित्वात् अधिकपदस्य लोपः । कर्मधारयः समासः । एकश्च विंशतिश्च एषां समाहारः एकविंशतिरिति समाहारद्वन्द्वो वा । 'स नपुंसकम्' इति क्लीबता तु नास्ति, लोकाश्रयत्वाल्लिङ्गस्य । इतरेतरयोगद्वन्द्वस्तु न, अनभिधानात् । एवं द्वाविंशतिरित्यादि । द्वयोः शतयोः समाहारः द्विशतम् । द्विसहस्रम् । 'स नपुंसकम्' इति क्लीबता । पक्षे स्त्रियां 'द्विगोः' (४-१-२१) इति ङीपि द्विशती द्विसहस्रीत्यपि ? सहस्राणां शतं शतसहस्रम् । षष्ठीतत्पुरुषः—

**संख्याया अल्पीयस्याः (वा)**

इति शतशब्दस्यपूर्वनिपातः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः । सुजर्थान्तर्भावेण 'संख्ययाव्ययासन्ने' ति बहुव्रीहिः समासः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच समासान्तः । अर्धतृतीयानि रूप्यकार्णात्यत्र कः समासः ? बहुव्रीहिः । अर्धं तृतीयमेषामिति विग्रहः । अत्र बहुवचन-मेव । सार्धं रूप्यकद्वयमित्यर्थः । त्रयाणां पूरणं तृतीयम् । 'असिद्वितीयोऽनु-ससार पाण्डवम्' इत्यत्र तु द्वितीयशब्दः सहायवाची रूढः । असिर्द्वितीयः सहायः अस्येति विग्रहः ।

---

# अथैकशेषप्रकरणम्

## ६५६. सरूपाणामेकशेष एकविभक्तौ

पूर्वं व्याख्यातम् । रामश्च रामश्च रामौ । रामाः । द्वन्द्वापवादः ।

### विरूपाणामपि समानार्थानाम् (वा)

अन्यतरस्य शेषः । वक्रश्च कुटिलश्च वक्रौ । कुटिलौ ॥

## ६५७. पुमान् स्त्रिया १-२-६७

'वृद्धो यूना तल्लक्षणश्चेदेवविशेषः' इत्यत 'स्तल्लक्षणश्चेदेव विशेषः' इत्यनुवर्तते । लक्षणशब्दो निमित्तपर्यायः । स्त्रिया सहोक्तौ पुमान् शिष्यते, स्त्रीत्वपुंस्त्वनिमित्तकमेव यदि तयोर्वैरूप्यम् । हंसी च हंसश्च हंसौ । विद्यार्थी च विद्यार्थिनी च विद्यार्थिनौ । तल्लक्षणश्चेदेव विशेष इति किम् ? कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ । एवकारः किमर्थः ? इन्द्रेन्द्राण्यौ । अत्र नैकशेषः । पुंयोगकृतविशेषस्यापि सद्भावात् । इन्द्रस्य स्त्री इन्द्राणीति विग्रहात् ॥

## ६५८. भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १-२-६८

यथासंख्यं भ्रातृ पुत्रशब्दौ शिष्येते स्वसृदुहितृभ्यां सहोक्तौ । भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । स्वरूपतोऽपि वैरूप्यादप्राप्तौ वचनम् । पुत्रश्च तनया चेति विग्रहे कथम् ? पुत्रतनये, इत्येव, यद्यभिधानम् ।

## ६५९. पिता मात्रा १-२-७०

'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्यतः 'अन्यतरस्याम्' इत्यनुवर्तते । मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । 'जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ' । मातापितरौ । मातरपितरौ ॥

## ६६०. श्वशुरः श्वश्र्वा १-२-७१

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते । श्वश्रूश्च श्वशुरश्च श्वशुरौ । पक्षे द्वन्द्वः । श्वश्रूश्वशुरौ ॥

## ६६१. त्यदादीनि सर्वैर्नित्यम् १-२-७२

त्यदादिभिरितरैश्च सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते । स च देवदत्तश्च तौ । त्वं च चैत्रश्च युवाम् । अहं च रामश्च सीता च वयम् ॥

### त्यदादितः शेषे पुंनपुंसकतोलिङ्गवचनानि (वा)

षष्ठ्यर्थे तसिः । त्यदादीनां स्त्रीवाचकस्य शेषे, सहविवक्षितेषु यः पुमान् यच्च नपुंसकं तद्वशेन त्यदादीनि लिङ्गप्रातिपदकानि भवन्ति । यथा-सा च देवदत्तश्च तौ । सा च नेत्रे च तानि । पुंनपुंसकयोस्तु शब्दपरविप्रतिषेधा-न्नपुंसकं भवति । तच्च देवदत्तश्च ते ॥

(सूत्राणि ६६१)

इत्येकशेषप्रकरणम्

---

## अथ प्रकीर्णकम्

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । कृत्-पाचकः, तद्धितः-दाशरथिः, समासः-पीताम्बरः, एकशेषः-वृक्षौ, सनाद्यन्तधातुःचिकीर्ष, बोभूय, पुत्रीय ॥ परार्थाभिधानं वृत्तिः । अवयवपदार्थेभ्यो यः परः अन्यः स्वार्थ-विशिष्टसमुदायार्थः तत्प्रतिपादकत्वं वृत्तिरित्यर्थः । वृत्त्याश्रयत्वात् कृदन्तादीनां वृत्तिरिति प्राचां व्यवहारः । वृत्त्यर्थबोधकं वाक्यं विग्रहः । यथा-पचतीति पाचकः । दशरथस्यापत्यं पुमान् दाशरथिः । पीतमम्बरं यस्य सः पीताम्बरः इत्यादि । स च द्विधा । लौकिकोऽलौकिकश्च । व्याकरणसंस्कृतत्वात् प्रयोगार्हः साधुर्लौकिकः । यथा-राज्ञः पुरुषः । प्रक्रियामात्रोपयोगी प्रयोगा-नर्होऽलौकिकः । यथा-राजन् अस् पुरुष सु इति । अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा । यथा वृक्षस्य समीपमुपवृक्षम् । अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वश्चेति समासश्चतुर्धेति प्रायोवादः । एतदधिकारबहिर्भूतानां भूत-

पूर्व इत्यादिसुप्समासानामसंग्रहात् । पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थ-प्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्व इति प्राचां प्रवादोऽपि प्रायोवादः । सूपप्रति, उन्मत्तगङ्गमित्याद्यव्ययीभावे, अतिमालादौ तत्पुरुषे, द्वित्राः इत्यादिबहुव्रीहौ, दन्तोष्ठमित्यादिद्वन्द्वे चाभावात् । तत्पुरुष-विशेषः कर्मधारयः । कर्मधारयविशेषो द्विगुः ।

इति प्रकीर्णकम्

---

## अथ समासान्तप्रकरणम्

### ६६२. ऋक्पूरब्धूः पथामानक्षे ५-४-७४

अ अनक्षे इति च्छेदः । 'समासान्ताः' इत्यधिकृतम् । तदेकदेशः समासः ऋगादिभिर्विशेष्यते । तदन्तविधिः । ऋक्, पुर्, अप्, धुर्, पथिन् इत्येतदन्तस्य समासस्य अ प्रत्ययोऽन्तावयवः स्यात्, अक्षे या धूः तदन्तस्य तु न । अनक्षे इति धूर्शब्देनैव संबध्यते, अन्यैरसंभवात् । ऋचोऽर्धमर्धर्चः । अर्धर्चाः पुंसि च (२-४-३१) इति पुंस्त्वम् । अनृचबह्वृचावध्येतर्येव । अनृचो माणवकः । ऋग्भिन्नशाखाध्येतेत्यर्थः । बह्वृचो ब्राह्मणः । नेह । अनृक् साम । बह्वृक् सूक्तम् ॥ विष्णोः पूः विष्णुपुरम् । क्लीबत्वं लोकात् । विमलापं सरः ॥

### ६६३. द्व्यन्तरुपसर्गेभ्योऽप ईत् ६-३-९७

द्व्यादिभ्यः परस्य अप ईत् स्यात् । 'आदेः परस्य' । द्विर्गता आपो यस्मिन्निति द्वीपम् । अन्तर्गता आपो यस्मिन्निति अन्तरीपम् । प्रतिकूला आपः यस्मिन्निति प्रतीपम् । समीपम् । रूढशब्दानां कथञ्चिद् व्युत्पत्तिः । राज्ञो धूः राजधुरा । अप्रत्यये टाप् । अक्षो रथावयवदण्डविशेषः । अक्षधूः । दृढधूरक्षः । अत्र समासान्तो न ॥

## ६६४. अच् प्रत्यन्ववपूर्वात् सामलोम्नः ५-४-७५

प्रत्यादिपूर्वात् सामलोमान्तात् समासादच् स्यात् । 'नस्तद्धिते' इति टिलोपः । प्रतिसामम् । अनुसामम् । अवकृष्टं साम अवसामम् । प्रतिलोमम् अनुलोमम् । अवलोमम् ।। सर्वत्राव्ययीभावः प्रादिसमासो बहुव्रीहिर्वा ।।

### कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते (वा)

कृष्णा भूमिर्यस्य सः कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः प्रासादः । अयमच् बहुव्रीहौ । नेह । कृष्णा भूमिः कृष्णभूमिः । अच इति योगविभागादन्यत्रापि । पद्मं नाभौ यस्य सः पद्मनाभः । ऊर्णनाभः । दीर्घा रात्रिः दीर्घरात्रः । 'रात्राह्नाहाः पुंसि' ।।

## ६६५. अचतुर, विचतुर, सुचतुर, स्त्रीपुंस, धेन्वनडुह, र्क्साम, वाङ्मनसा, क्षिभ्रुव, दारगवो, र्वष्ठीव, पदष्ठीव, नक्तन्दिव, रात्रिन्दिवा, हर्दिव, सरजस, निःश्रेयस, पुरुषायुष, द्व्यायुष, त्र्यायुष, र्ग्यजुष, जातोक्ष, महोक्ष, वृद्धोक्षो, पशुन, गोष्ठश्वाः ५-४-७७

एते पञ्चविंशतिरच्प्रत्ययान्ताः निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । न विद्यन्ते चत्वारि यस्य सः अचतुरः । विचतुरः । सुचतुरः । तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । 'स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया' (कुमा. २-७) । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । कथं शरीर-वाङ्मनोभिरिति ? शब्दान्तरेण सह युगपत् द्वन्द्वे नायं समासान्तः । शरीरञ्च वाक् च मनश्चेति विग्रहः । युगपदिति किम् ? वाक् च मनश्च वाङ्मनसे । शरीरञ्च वाङ्मनसे च शरीरवाङ्मनसानि । अक्षिभ्रुवम् । प्राण्यङ्गत्वा-देकवद्भावः । दाराणां गवाञ्च समाहारः-दारगवम् । ऊरू सक्थिनी । अष्ठीवन्तौ जानुनी । एषां समाहारः ऊर्वष्ठीवम् । निपातनात् टिलोपः । पादौ चाष्ठीवन्तौ च-पदष्ठीवम् । पादस्य पद्भावो निपातनात् । नक्तं च दिवा च नक्तन्दिवम् । अधिकरणार्थवृत्त्योरव्यययोर्द्वन्द्वः । अधिकरणशक्तेः प्रातिपदिकेनाभि-हितत्वान्न सप्तमी । किन्तु साधुत्वार्थं प्रथमैकवचनम् । सामान्ये नपुंसकम् ।।

रात्रौ च दिवा च-रात्रिन्दिवम् । अहनि च दिवा च अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । सरजसमपनयति । साकल्येनेत्यर्थः । बहुव्रीहौ तु सरजः पङ्कजम् । 'सरजसमकरन्दनिर्भरासु' इति माघप्रयोगस्तु चिन्त्यः । ततः कर्मधारयः । निश्चितं श्रेयो-निःश्रेयसम् । बहुव्रीहौ तु निःश्रेयस्कः । पुरुषस्यायुः- पुरुषायुषम् । षष्ठीतत्पुरुषः ॥ 'पुरुषायुषजीविन्यो निरातङ्का निरीतयः' (रघु. १–६३) । नेह । पुरुषश्च आयुश्च पुरुषायुषी । ततो द्विगुः । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातश्चासौ उक्षा च जातोक्षः । दम्यभावमुक्रान्तस्तरुणोवृषेत्यर्थः । महोक्षः । वृद्धोक्षः । 'विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति' (कुमा. ५–७०) । शुनः समीपमुपशुनमित्यव्ययीभावः । टिलोपाभावः संप्रसारणञ्च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ॥

### त्र्युपाभ्यां चतुरोऽजिष्यते (वा)

त्रयो वा चत्वारो वा त्रिचतुराः । 'संख्याव्यय . . .' इति बहुव्रीहिः । अच् । 'बहुव्रीहौ संख्येये . . .' इति डचि तु टिलोपः स्यात् ! चतुर्णां समीपे ये सन्ति ते उपचतुराः । त्रयः पञ्च वेत्यर्थः ॥

### ६६६. ब्रह्महस्तिभ्यां वर्चसः ५–४–७८

अच् स्यात् । ब्रह्मणो वर्चः ब्रह्मवर्चसम् । 'तस्य हेतुस्त्वद्ब्रह्मवर्चसम्' (रघु. १–६३) । हस्तिवर्चसम् ।

### पल्यराजभ्याञ्चेति वक्तव्यम् (वा)

पल्यवर्चसम् । पल्योमांसभोजी । राजवर्चसम् ॥

### ६६७. अवसमन्धेभ्यस्तमसः ५–४–७९

अवादिभ्यः परो यस्तमःशब्दः तदन्तात् समासादच् स्यात् समासान्तः । अवहीनं तमः अवतमसम् । संततं तमः सन्तमसम् । अन्धयतीत्यन्धः 'अन्ध-दृष्ट्युपघाते । पचाद्यच् । कर्मधारयः । अन्धतमसम् । ध्वान्ते गाढेऽन्धतमसं

क्षीणेऽन्धतमसं तमः । विष्वक् सन्तमसम् इत्यमरः ।

## ६६८. श्वसो वसीयः श्रेयसः ५-४-८०

श्वसः परौ यौ वसीयः श्रेयः शब्दौ तदन्तात् समासादच् स्यात् । वसुशब्दः प्रशस्तवाची । अतिशयेन वसुर्वसीयः । ईयसुन् । स्वभावादिह श्वःशब्दः उत्तरपदार्थस्य प्रशंसामाचष्टे । मयूरव्यंसकादित्वात् समासः । श्वोवसीयसं ते भूयात् । श्वःश्रेयसं ते भूयात् । शुभं भूयादित्यर्थः । अनयोः प्रायेणाशिषि प्रयोगः ॥

## ६६९. न पूजनात् ५-४-६९

पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । सुगौः । अतिराजा पूज्यो राजेत्यर्थः । अतिगौः सुसखा । सुपन्थाः ॥ स्वतिभ्यामेव । नेह । परमराजः । परमसखः । राजाहःसखिभ्यष्टच् । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (५-४-११३) इत्यतः प्रागेवायं निषेधः । नेह । सुसक्थो रथः । स्वक्षः पुरुषः । सुधर्मा । सुजानिः । सुपात् । सुनदीको देशः । सुमातृकः ॥

## ६७०. किमः क्षेपे ५-४-७०

निन्दायां यः किंशब्दस्ततः परं यत् तदन्तात् समासान्ता न स्युः । कुत्सितो राजा किंराजा । किंसखा । 'स किंसखा साधु न शास्ति योऽधिपम्' (किरा. १-५) । किंगौः ॥

## ६७१ नञस्तत्पुरुषात् ५-४-७१

नञः परो यःशब्दस्तदन्तात् तत्पुरुषात् समासान्ता न स्युः । अराजा । असखा । अगौः । तत्पुरुषात् किम् ? अधुरं-शकटम् ॥

## ६७२. पथोविभाषा ५-४-७२

नञः परो यः पथिशब्दस्तदन्तात् तत्पुरुषात् समासान्तो वा स्यात् । न पन्थाः अपथम् । 'पथः संख्याव्ययादेः' (वा.) इति क्लीबता । 'अपथे पदमर्पयन्ति ये श्रुतवन्तोऽपि रजोनिमीलिताः' (रघु. ९-७४) । अपन्थाः । 'अपन्थानं तु गच्छन्तं तु सोदरोऽपि विमुञ्चति' । तत्पुरुषाद् किम् ?

अपथो देशः । अपथं वर्तते । अर्थाभावेऽव्ययीभावः ।

(सूत्राणि ६७२)

इति समासान्तप्रकरणम्

---

## अथालुक्समासप्रकरणम्

### ६७३. अलुगुत्तरपदे ६-३-१

अयमधिकारः । अलुगधिकारः 'आनङ्ऋतोद्वन्द्वे' (७-३-२५) इत्यतः प्राक् । उत्तरपदाधिकारस्त्वापादसमाप्तेः । उत्तरपदशब्दः समासस्य चरमावयवे रूढः ।

### ६७४. पञ्चम्याः स्तोकादिभ्यः ६-३-२

स्तोकादिभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । दूरात्प्रेषितः । 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासः । उत्तरपदे किम् ? निष्क्रान्तः स्तोकान्निस्तोकः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः ।

### ६७५. ओजः सहोऽम्भस्तमसस्तृतीयायाः ६-३-३

एभ्यस्तृतीयाया अलुगुत्तरपदे । ओजसाकृतम् । 'कर्तृकरणे कृता बहुलम्' इति समासः । सहसापठितम् । अम्भसागतम् । तमसाकृतम् । कथं तमोविकृतम् ? षष्ठी समासः ।

### अञ्जस उपसंख्यानम् (वा)

अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः ।

### पुंसानुजो जनुषान्ध इति च (वा)

पुंसा अग्रजेन हेतुना अनुजः पुंसानुजः । यस्याग्रजः पुमान् स इत्यर्थः । जनुषान्धो जात्यन्धः ॥

## ६७६. आत्मनश्च ६-३-६

'पूरण इति वक्तव्यम्' आत्मनस्तृतीयाया अलुक् पूरणप्रत्ययान्ते उत्तरपदे । आत्मनापञ्चमः । हेतौ तृतीया । सुप्सुपेति समासः । तृतीयेति योगविभागाद्वा ; आत्मना षष्ठः । कथं 'जनार्दनस्त्वात्मचतुर्थ एव' ? आत्मा चतुर्थो यस्येति बहुव्रीहिः । एकस्यापि जनार्दनस्य औपाधिकभेदेनान्यपदार्थता ॥

## ६७७. वैयाकरणाख्यायां चतुर्थ्याः ६-३-७

आख्या संज्ञा । वैयाकरणानां संज्ञायामात्मनश्चतुर्थ्या अलुक् । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात् समासः ॥

## ६७८. हलदन्तात् सप्तम्याः संज्ञायाम् ६-३-९

हलन्ताददन्ताच्च सप्तम्या अलुक् संज्ञायामुत्तरपदे । त्वचिसारः । 'वंशे त्वक्सार कर्मारत्वचिसारतृणध्वजाः' इत्यमरः । कथमत्रैवं त्वक्सार इति । केवल यौगिकोऽयम् । अथवा त्वगेव सारः बलांशो यस्येति समानाधिकरण बहुव्रीहिः । अरण्येतिलकाः । वनेकिंशुकाः । कूपेपिशाचकाः ॥ 'संज्ञायाम्' इति समासः ।

## ६७९. गवियुधिभ्यां स्थिरः ८-३-९५

षत्वप्रकरणस्थमिदम् । आभ्यां स्थिरस्य सस्य षः स्यात् । सात्पदाद्योरिति निषेधे प्राप्तेऽनेन षत्वम् । गविष्ठिरः । गवीति वचनादेवालुक् । युधिष्ठिरः । हलन्तत्वादलुक् ॥ हृद्द्युभ्याञ्च सप्तम्या अलुक् । असंज्ञार्थमिदम् । हृदयं स्पृशतीति हृदिस्पृक 'पद्दन्नोमास्...' इति ङौ हृदादेशः । दिवं स्पृशतीति दिविस्पृक् । अत एव ज्ञापकादुभयत्र कर्मणि सप्तमी ॥

## ६८०. मध्याद्गुरौ ६-३-११

सप्तम्या अलुक । मध्येगुरुः ।

### अन्ताच्च (वा)

अन्तेगुरुः ।

### ६८१. अमूर्धमस्तकात् स्वाङ्गादकामे ६–३–१२

मूर्धमस्तकशब्दवर्जितात् स्वाङ्गवाचकात् सप्तम्या अलुक्, न तु कामशब्दे उत्तरपदे। कण्ठेकालः। उरसिलोमा। उदरेमणिः। अमूर्धमस्तकात् किम्? मूर्धशिखः। मस्तकशिखः। अकामे किम्? मुखे कामोऽस्य मुखकामः।

### ६८२. तत्पुरुषे कृति बहुलम् ६–३–१४

तत्पुरुषे सप्तम्या बहुलमलुक्स्यादुत्तरपदे कृदन्ते। स्तम्बे रमते इति स्तम्बेरमो हस्ती। कर्णेजपः पिशुनः। 'स्तम्बकर्णयो रमिजपोः' इत्यच्। दिवि सीदतीति दिविषत्। क्विप्। 'सुषामादिषु च' इति षत्वम्। बहुलग्रहणात् क्वचिन्न। कुरुचरः। क्वचिद्विकल्पः। द्युसत्॥ खेचरः खचरः। 'चरेष्टः' इति टः॥

### ६८३. प्रावृट्शरत्कालदिवां जे ६–३–१५

प्रावृडादिभ्यः सप्तम्या अलुक् स्यादुत्तरपदे जे। प्रावृषिजः। शरदिजः। कालेजः। दिविजः॥

#### अन्यत्रापि दृश्यते (वा)

इति वार्तिकाज्जनेर्डः। डित्वादभस्यापिटेर्लोपः॥

### ६८४. षष्ठ्या आक्रोशे ६–३–२१

आक्रोशे गम्यमाने षष्ठ्या अलुगुत्तरपदे परे। चोरस्यकुलम्। दास्याःकुलम्। आक्रोशे किम्? रघुकुलम्।

#### षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु (वा)

यथासंख्यम्। वाचोयुक्तिः। वाग्रचनेत्यर्थः। दिशोदण्डः। पश्यतोहरः। पश्यन्तमनादृत्य अपहरन्पुरुषः एवमुच्यते। 'षष्ठी चानादरे' इति षष्ठी।

#### देवानांप्रिय इति च मूर्खे (वा)

देवानांप्रियो मूर्खः। षष्ठ्या अलुक। दीव्यन्ति क्रीडन्तीति देवाः।

देवशब्दो मूर्खवाची । मूर्खाणाञ्च प्रिया मूर्खा एव भवन्ती 'ति अजेर्व्यघञपोरिति मूले कैयटः । अथवा ब्रह्मज्ञानरहिताः संसारिणो मूर्खाः । ते हि यागादिकरणात् देवानां प्रिया भवन्ति । अथवा पशुकरणकयागेषु पशवो देवानां प्रियाः । अतः पशुसदृशा मूर्खा अपि तादृशाः इति यावत् । अन्यत्र देवप्रियः ।

**शेपपुच्छलाङ्गूलेषु शुनः (वा)**

षष्ठ्या अलुक् संज्ञायाम् । शुनःशेपः । अकारान्तोऽयमृषिविशेषस्य संज्ञा । शुनःपुच्छः । शुनो लाङ्गूलः ।।

**दिवश्च दासे (वा)**

दिवोदासः । कश्चिद्राजर्षिः ।।

### ६८५. पुत्रेऽन्यतरस्याम् ६-३-२२

षष्ठ्याः पुत्रे परेऽलुग् वा निन्दायाम् । दास्याःपुत्रः । दासीपुत्रः । चोरस्यपुत्रः ।। चोरपुत्रः ।। निन्दायां किम् ? सुभगापुत्रः ।। समासे स्वरे विशेषः ।

### ६८६. ऋतो विद्यायोनिसंबन्धेभ्यः ६-३-२३

विद्यासंबन्धवाचिभ्यो योनिसंबन्धवाचिभ्यश्च परस्याः षष्ठ्या अलुगुत्तरपदे । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । प्रख्यातस्य पितुरनुरूपः पुत्र इत्यर्थः । उत्तरपदस्यापि विद्यायोनिसंबन्धवाचिन एवेह ग्रहणम् । नेह । होतृधनम् । पितृगृहम् ।।

### ६८७. विभाषा स्वसृपत्योः ६-३-२४

ऋत इत्यनुवर्तते । ऋदन्तात् षष्ठ्या अलुग् वा स्यात् स्वसृपत्योः परयोः । मातुःस्वसा । पितुःस्वसा । अलुक्पक्षे च ।

### ६८८. मातुःपितुर्भ्यामन्यतरस्याम् ८-३-८५

षत्वप्रकरणस्थमिदम् । 'मातृपितृभ्यां स्वसा' इति पूर्वसूत्रात् स्वसेत्यनुवर्तते । 'समासेऽङ्गुलेः सङ्गः' इति सूत्रात् समास इति च । मातुःपितुरिति श्रूयमाणषष्ठ्यन्ताभ्यां परस्य स्वसुः सस्य षो वा स्यात् समासे । मातुःष्वसा । पितुःष्वसा । समासाभावे मातुःस्वसा । पितुःस्वसा । पाक्षिके लुकि तु–

### ६८९. मातृपितृभ्यां स्वसा ८-३-८४

आभ्यां परस्य स्वसुः सस्य षः स्यात् समासे । मातृष्वसा । पितृष्वसा ॥ एवञ्च मातृस्वसेत्यत्र सत्वमसाधु ॥

(सूत्राणि ६८९)

इत्यलुक्समासप्रकरणम्

---

## अथ समासाश्रयविधिप्रकरणम्

### ६९०. घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ६-३-४३

'स्त्रियाः पुंवद् . . .' इति सूत्रात् भाषितपुंस्कादिति वर्तते। 'उत्तरपदे' इत्यधिकृतम् । घरूपकल्पपः प्रत्ययाः । घशब्देन तरप् तमपौ। 'तरप् तमपौ घः (१-१-२) इति संज्ञाकरणात् । 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ति'। तस्मादेषां 'उत्तरपदे' इति न संबन्धः । प्रत्ययानां पदत्वासंभवात् । भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप् प्रत्ययेषु चेलडादिषु चोत्तरपदेषु ॥ अतिशयेन तरुणी तरुणितरा । तरुणितमा। प्रशस्ता ब्राह्मणी ब्राह्मणिरूपा । 'प्रशंसायां रूपप्' (५-५-६६)। कुमारिकल्पा । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (५-३-६७) । अत्र पुंवद्भावो न शक्यः । 'जातेश्च' इति निषेधात् । ब्राह्मणिचेली । 'चेलट्' इति पचादौ पठितम् । टित्वान्ङीप् । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि । तैः 'कुत्सितानि कुत्सनैः' इति समासः । एवं ब्राह्मणिमता । ब्राह्मणिहता । ङ्यः किम् ? दत्ततरा। भाषितपुंस्कात् किम् ? कुवलीतरा ॥

## ६९१. नद्याः शेषस्यान्यतरस्याम् ६-३-४४

कश्च शेषः ? अङ्यन्तं ङ्यन्तं च यदेकाच् । अङ्यन्तनद्याः ङ्यन्त-स्यैकाचश्च घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा । बन्धूतरा । भाषित-पुंस्कादिति नेह संबध्यते । वधुरूपा । वधूरूपा । स्त्रितरा । तां प्रत्यगान्न स्त्रितमां कुबेरः ( नै. १०-१३) ।

### कृन्नद्या न (वा)

लक्ष्मीतरा ।

## ६९२. उगितश्च ६-३-४५

उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा ह्रस्वाभावपक्षे 'तसिलादिष्वि'ति पुंवत् । विद्वत्तरा । महतितरा । "अमहति-तरास्तादकूतारा:' (नै. ९१-४) । महत्तरा । पचन्तीरूपा । पचद्रूपा ॥

## ६९३. हृदयस्य हृल्लेखयदण्लासेषु ६-३-५०

हृदयस्य हृदादेशः स्याल्लेखादिषु परेषु । हृदयं लिखतीति हृल्लेखः । 'कर्मण्यण्' । हृदयस्येदं हार्दम् । 'तस्येदम्' इत्यण् । हृल्लासः । लेख इत्यणन्तस्य ग्रहणम् । घञि तु हृदयलेखः । लेखग्रहणं ज्ञापकम् 'उत्तरपदाधिकारे तदन्तविधिर्नास्ति' इति । तत्फलं घरूपादिषु तदन्तग्रहणाभावः ।

## ६९४. वा शोकष्यञ्रोगेषु ६-३-५०

शोकादिषु परेषु हृदयस्य हृदादेशो वा । हृच्छोकः । हृदयशोकः । सौहार्द्यम् । ब्राह्मणादित्वात् भावेष्यञि 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभय-पदवृद्धिः । पक्षे सौहृदय्यम् । 'यस्येति च' इत्यकारलोपः । हृद्रोगः-हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम् ॥

## ६९५. पादस्य पदाज्यातिगोपहतेषु ६-३-५२

आजि, आति, ग, उप, हत-एषु परेषु पादस्य 'पद' इत्यादेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । औणादिक इण् प्रत्ययः । पदगः । पादेनोपहतः पदोपहतः ॥

## ६९६. पद्यत्यदर्थे ६-३-५३

पद् यति अतदर्थे इति च्छेदः । पादस्य पत् स्यात् अतदर्थे यति परे । पादौ विध्यन्ति पद्याः शर्कराः । 'विध्यन्यधनुषा' इति यत् । पद्याः कण्टकाः । अतदर्थे किम् ? पादार्थमुदकं पाद्यम् । 'पादार्घाभ्याञ्च' इति तादर्थ्ये यत् ।

### इके चरतावुपसंख्यानम् (वा)

पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् ॥

## ६९७. हिमकाषिहतिषु च ६-३-५४

एषु परेषु पादस्य पत् । पादस्य हिमं पद्धिमम् । पादौ कषति हिनस्तीति पत्काषी । हन्यते इति हतिः । कर्मणिक्तिन् । पादाभ्यां हतिः पद्धतिः । अधिकरणे वा क्तिन् । पादयोर्हतिरिति विग्रहः ॥

## ६९८. उदकस्योदः संज्ञायाम् ६-३-५७

उदकशब्दस्य 'उद' इत्ययमादेशः स्यात् संज्ञायाम् । उदमेघः । कस्यचित् संज्ञा ।

### उत्तरपदस्य चेति वक्तव्यम् (वा)

क्षीरोदः । क्षीरमुदकस्थानीयं यस्येत्यर्थः । लवणोदः ॥ एते संज्ञाशब्दाः । 'प्रसन्नोदं सरः' इत्यसाधु । असंज्ञात्वात् ।

## ६९९. पेषंवासवाहनधिषु च ६-३-५८

पेषमिति णमुलन्तमव्ययम् । एषु परेषु उदकस्योदादेशः स्यात् । उदपेषं पिनष्टि । 'स्नेहने पिषः' इति णमुल् । उदकेन पिनष्टीत्यर्थः । उदके वासः उदवासः । उदवाहनः । उदकस्य वाहक इत्यर्थः । करणे ल्युट् । उदकं धीयतेऽस्मिन् उदधिर्घटः । 'करणाधिकरणयोश्च' इत्यधिकरणे किः । समुद्रे तु पूर्वेणैव सिद्धम् ॥ उदकशब्दपर्यायः उदन् शब्दोऽप्यस्ति । तेन सिद्धे 'उदकपेषम्' इत्यादिरूपवारणार्थं सूत्रद्वयम् । किञ्चोदन्शब्दस्य क्वचिदेव प्रयोगः इति 'पद्दनोमास् ...' इत्यादिसूत्रेण ज्ञापितम् । तथाच

उदमन्थः-उदकमन्थः' इत्यादयः शब्दाः सिद्धाः । 'उदकेन मन्थः' इति तृतीयान्तेन विग्रहः । उदकस्य कन्या उदकन्या=लक्ष्मीः । उदपात्रम्-उदकपात्रम् । उदपानः=अल्पः कूपः । उदश्वित् । उदवीवधः । 'इह हि समये मन्देहेषु व्रजन्त्युदवज्रताम्' (नै. १९-४१) । 'चिरेण नाभिं प्रथमोदबिन्दवः.' (कुमा. ५-२४) ।

### ७००. ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् ६-३-६३

'इको ह्रस्वोऽङ्यो गालवस्य' इति सूत्रात् ह्रस्व इति वर्तते । ङ्यन्तस्याबन्तस्य च संज्ञा छन्दसोर्बहुलं ह्रस्वः स्यात् । रेवतिपुत्रः । रोहिणिपुत्रः । कालिदासः । शिलप्रस्थम् । शिलवहम् ॥ एते संज्ञाशब्दाः । छन्दसि अजक्षीरम् ॥

### ७०१. इष्टकेषीकामालानां चिततूलभारिषु ६-३-६५

अत्र 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया इष्टकाद्यन्तानामपि ग्रहणम् । इष्टकादीनां तदन्तानाञ्च क्रमात् चितादिषूत्तरपदेषु ह्रस्वः स्यात् । इष्टकाभिश्चितमिष्टकचितम् । पक्वेष्टकचितम् । इषीकायास्तूलमिषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ॥

### ७०२. कारे सत्यागदस्य ६-३-७०

'अरुर्द्विषदजन्तस्य मुम्' इत्यतो मुमित्यनुवर्तते । सत्यस्य अगदस्य चकारे परे मुम् आगमः स्यात् । सत्यङ्कारः । सत्यं करोतीति, सत्यस्य कारः इति वा विग्रहः । शपथकर्ता शपथकरणं वा । एवमगदङ्कारः ।

### अस्तोश्चेति वक्तव्यम् (वा)

'अस्तु' इति विभक्तिप्रतिरूपकमव्ययम् । अस्तुङ्कारः । अभ्युपगमोऽभ्युपगमकर्ता वा ।

### धेनोर्भव्यायाम् (वा)

धेनुम्भव्या । भविष्यन्ती धेनुरित्यर्थः ।

### लोकस्य पृणे (वा)

लोकम्पृणः । पृण प्रीणने । मूलविभुजादित्वात् कः । 'लोकम्पृणैः परिमलैः परिपूरितस्य' (भामिनी. १–७१) ।

### इत्येऽनभ्याशस्य (वा)

अनभ्याशमित्यः दूरतः परिहर्तव्य इत्यर्थः ।

### गिलेऽगिलस्य (वा)

तिमिङ्गिलः । अगिलस्य किम् ? गिलगिलः ।

### उष्णभद्रयोः करणे (वा)

उष्णस्य करणमुष्णङ्करणम् । भद्रङ्करणम् । भद्राकरणमन्यत् तत्तु 'भद्राच्चेति वक्तव्यम्' इति डाचि मुण्डनार्थकम् ॥

### ७०३. रात्रेः कृति विभाषा ६–३–७२

रात्रेः कृदन्ते परे मुम् वा स्यात् । रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः ॥ उत्तरपदाधिकारस्थत्वेऽपि कृत्प्रत्ययेन तदन्तग्रहणम् । रात्रेः कृत्प्रत्ययपरकत्वासंभवात् ॥

### ७०४. ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ६–३–८५

'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' इत्यतः समानस्येति 'सदस्यसः संज्ञायाम्' इत्यतः 'सः' इति चानुवर्तते । समानस्य स इत्यादेशः स्यात् ज्योतिरादिषूत्तरपदेषु । समानं ज्योतिर्यस्य सज्योतिः । सजनपदः । सरात्रिः । समानो नाभिः मूलपुरुषोऽस्य सनाभिः । 'सपिण्डास्तुसनाभयः' इत्यमरः । सनामा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः । कथं सपक्षः, साधर्म्यं, सजातीयमित्यादि ? उच्यते । सहशब्दः सदृशवचनोऽप्यस्ति । सदृशः सख्या ससखीति यथा । तेनास्वपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्य सपक्षः । 'वोपसर्जनस्य' इति सहस्य सः । समानशब्देन समासे तु समानपक्षः समानधर्मा इत्यादि । समाननामा, समानरूपः

इत्यादसाध्वेव । सादेशस्य नित्यत्वात् ।

७०५. चरणे ब्रह्मचारिणि ६-३-८६

ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म । ब्रह्म चरतीति ब्रह्मचारी । 'व्रते' इति णिनिः । समानः सः सब्रह्मचारी । चरणः शाखा । समानत्वं चरणे विवक्षितम् । 'समाने ब्रह्मणि व्रतचारी' ति भाष्यात् ॥

७०६. तीर्थे ये ६-३-८७

तीर्थे उत्तरपदे यत्प्रत्यये विवक्षिते समानस्य सः स्यात् । यदाकः प्रकृत एव संभवतीति यप्रत्यय इति व्याख्यातम् । समाने तीर्थे वासी सतीर्थ्यः । 'समानतीर्थे वासी' (४-४-१०७) इति यत् । सतीर्थ्यः=एकगुरुकः । समानशब्द एकपर्यायः ॥

७०७. विभाषोदरे ६-३-८८

उदरशब्दे उत्तरपदे यत्प्रत्यये विवक्षिते समानस्य सः स्यात् । सोदर्यः । समानोदर्यः । 'समानोदरे शयित ओ चोदात्तः' (४-४-१०८) इति यत् । सोदर इति तु समानमुदरं यस्येत्यर्थे सहशब्देन समासे बोध्यम् । 'वोपसर्जनस्ये' ति सः । पक्षे सहोदरोऽपि ।

७०८. दृग्दृशवतुषु ६-३-८९

एषूत्तरपदेषु समानस्य सः । समानो दृश्यत इत्यर्थे सदृक् । सदृशः । वतुग्रहणमुत्तरार्थम् ।

दृक्षे चेति वक्तव्यम् (वा)

सदृक्षः ॥

७०९. इदंकिमोरीश्की ६-३-९०

इदम् किम् इत्येतयोर्यथासंख्यं ईश् की इत्यादेशौ स्तो दृग्दृशवतुषु ।

दृक्षे च (वा)

ईदृक् । ईदृशः । ईदृक्षः । कीदृक् । कीदृशः । कीदृक्षः ।

## ७१०. आ सर्वनाम्नः ६-३-९१

दृग्दृशवतुषु ।

दृक्षे च (वा)

तादृक् । तादृशः । तादृक्षः । तावान् । यादृक् । यावान् । मादृक् । अस्मादृक् । त्वादृशः । युष्मादृशः । एतादृशः । एतावान् ॥ अदस् शब्दस्य मत्वोत्वे । अमूदृक् । अमूदृशः । अमूदृक्षः ॥

## ७११. समासेऽङ्गुलेः सङ्गः ८-३-८०

षत्वप्रकरणस्थमिदम् । अङ्गुलि शब्दात् सङ्गस्य मूर्धन्यः स्यात् समासे । अङ्गुलिषङ्गः । समासे किम् ? अङ्गुलेः सङ्गः ॥

## ७१२. भीरोः स्थानम् ८-३-८१

भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात् समासे । भीरुष्ठानम् । समासे किम् ? भीरोः स्थानम् ॥

## ७१३. ज्योतिरायुषः स्तोमः ८-३-८२

आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात् समासे । ज्योतिष्टोमः । आयुष्टोमः । समासे किम् ? ज्योतिषः स्तोमः ॥ अत्र इण्कोरिति नानुवर्तते । तेन 'ज्योतिषष्टोमः' इत्यत्र 'षष्ठ्याआक्रोशे' इत्यलुक्समासे षत्वसिद्धिः ॥

## ७१४. सुषामादिषु च ८-३-९८

एषु सकारस्य मूर्धन्यादेशः । शोभनं साम यस्यासौ सुषामा । दुःषामा । निःषामा । सुषन्धिः । सुष्ठु । दुष्ठु । हरिषेणः ॥

## ७१५. अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्था-स्थितोत्सुकोति कारकरागच्छेषु ६-३-९९

अषष्ठीस्थस्य अतृतीयास्थस्य च अन्यशब्दस्य दुगागमःस्यात् , आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ-इत्येतेषु परेषु ॥ षष्ठ्यां विभक्तौ परतो यो न तिष्ठति सः अषष्ठीस्थः । एवमतृतीयास्थः । दुकि ककार इत् । उकार उच्चारणार्थः । कित्वादन्त्यावयवः । अन्या

आशीः अन्यदाशीः । अन्याशब्दस्य 'स्त्रियाः पुंवदि'ति, सर्वनाम्नो वृत्तिमात्र पुंवद्भाव इति वा पुंवद्भावः । अन्यदाशा । अन्यदास्था । अन्यमास्थितः अन्यदास्थितः । अन्यस्मिन् उत्सुकः अन्यदुत्सुकः । अन्या ऊतिः अन्यदूतिः । ऊतिर्वयनम् । अन्यः कारकः अन्यत्कारकः । अन्यः अन्यस्मिन् वा रागः । अन्यद्रागः । छः प्रत्ययः । अन्यस्मिन् भवः अन्यदीयः । अषष्ठीत्यादि किम् ? अन्यस्य आशीः अन्याशीः । अन्येन आस्थितः अन्यास्थितः । कारके छे च नायं निषेधः । अन्यस्य कारकः अन्यत्कारकः । अन्यस्यायमन्यदीयः ॥

### ७१६. अर्थे विभाषा ६–३–१००

अर्थशब्दे उत्तरपदे अन्यस्य दुग्वा । अन्यदर्थः । अन्यार्थः ॥

### ७१७. कोः कत्तत्पुरुषेऽचि ६–३–१०१

कु इत्येतस्य कत् इत्यादेशः स्यात् तत्पुरुषसमासेऽजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । 'कुगतिप्रादयः' इति समासः । कदुष्ट्रः । कदन्नम् । तत्पुरुषे किम् ? कूष्ट्रो राजा । बहुव्रीहिः । अचि किम् ? कुपुरुषः ।

### त्रौ च (वा)

त्रिशब्दे परे कोः कत् तत्पुरुषे । कुत्सितास्त्रयः कत्त्रयः ॥

### ७१८. रथवदयोश्च ६–३–१०२

रथवदयोरुत्तरपदयोः कोः कत् । कद्रथः । कुत्सितो वदः । कद्वदः । वदतीति वदः । अजादित्वाभावात् अप्राप्तौ वचनम् ॥

### ७१९. तृणे च जातौ ६–३–१०३

कोः कत् स्यात् तृणे परे जातौ । कत्तृणम् । तृणजातिभेदः ॥ जातौ किम् । कुत्सितं तृणं कुतृणम् ।

### ७२०. का पथ्यक्षयोः ६–३–१०४

कोः का इत्यादेशः स्यात् पथ्यक्षयोः ॥ कुत्सितः पन्थाः कापथम् । 'ऋक्पूरि'ति समासान्तः । 'पथः संख्याव्ययादेः' इति क्लीबता । कुत्सितमक्षि यस्य सः काक्षः । बहुव्रीहौ ष्च् समासान्तः । कुत्सितमक्ष-

मिन्द्रियमिति कर्मधारयो वा ।

### ७२१. ईषदर्थे ६-३-१०५

ईषदर्थे वर्तमानस्य कोः का इत्यादेशः स्यादुत्तरपदे । ईषज्जलं काजलम् । कालवणम् ॥ अजादावपि परत्वात् कादेशः । काम्लम् ॥

### ७२२. विभाषा पुरुषे ६-३-१०६

पुरुषशब्दे उत्तरपदे कोः का इत्ययमादेशो वा स्यात् । कापुरुषः कुपुरुषः ॥

### ७२३. कवं चोष्णे ६-३-१०७

उष्णशब्दे उत्तरपदे कोः कवं का च वा स्यात् । कवोष्णम् । कोष्णम् । कदुष्णम् । मन्दोष्णमित्यर्थः ।

### ७२४. पृषोदरादीनि यथोपदिष्टम् ६-३-१०९

आदिशब्दः प्रकारे । उपदिष्टमुच्चारितम् । कर्मणि क्तः । सौत्रमेकवचनम् । शिष्टैरित्याध्याहारः । शिष्टाश्च शब्दतत्वसाक्षात्कारवन्तो योगिनः । पृषोदरप्रकाराणि—सदृशानि शब्दस्वरूपाणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः ॥ शास्त्रेण अविहिता अपि लोपागमवर्णविकाराः शिष्टप्रयोगानुसारेणानुगन्तव्याः । पृषत् जलबिन्दुरुदरे यस्य पृषोदरो वायुः । पृषतो मृगविशेषस्य उदरं पृषोदरमिति वा । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य वः उत्तरपदादेश्च लत्वम् । जीवनस्य मूतो जीमूतः । शवानां शयनं श्मशानम् । पिशिताशः पिशाचः । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । मह्यां रौतीति मयूरः । एवमश्वत्थकपित्थपुराणप्रभृतयो यथायोगमनुगन्तव्याः । 'भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम्' ॥ इत्यभियुक्तोक्तिः । हन्ति गच्छतीति हंसः गमनस्य धात्वर्थस्य अतिशयितत्वं विवक्षितम् । हंसस्य गमनोपमानत्वात् 'हंसगमना' इति । हिनस्तीति सिंहः । गूढः आत्मा गूढोत्मा । आकृतिगणोऽयम् ।

### ७२५. नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६-३-११६

'ढ्रलोपे पूर्वस्यदीर्घोऽणः' इत्यतो दीर्घइति वर्तते। क्विबन्तेषु नह्यादिषु उत्तरपदेषु परतः पूर्वस्य दीर्घः स्यात्। उपानत्। नीवृत्। प्रावृट्। मर्मावित्। ०'लक्ष्ये समाधिं न दधे मृगावित्' इति भट्टिः (२-७)। निरोचते इति नीरुक्। ऋतीषट् समर्थः। परितनोतीति परीतत्॥

### ७२६. वले ६-३-११८

वलप्रत्यये परे पूर्वस्य दीर्घः स्यात्। कृषीवलः। दन्तावलो हस्ती। मतुबर्थे तद्धितो वलच्। 'वनगिर्योः संज्ञायां' इत्यतः संज्ञायामित्यनुवृत्तेः पुत्रवलः इत्यादौ नदीर्घः।

### ७२७. मतौ बह्वचोऽनजिरादीनाम् ६-३-११९

मतुप्प्रत्यये परे बह्वचो दीर्घः स्यात् संज्ञायां, नत्वजिरादीनाम्। अमरावती। पुष्करावती। बह्वचः किम्? व्रीहिमती। अनजिरादीनां किम्? अजिरवती। खदिरवती।

### ७२८. शरादीनाञ्च ६-३-१२०

शरादीनां मतौ दीर्घः स्यात् संज्ञायाम्। शरावती। हनूमान्॥

### ७२९. उपसर्गस्य घञ्यमनुष्ये बहुलम् ६-३-१२२

उपसर्गस्य बहुलं दीर्घः स्याद् घञन्ते परे न तु मनुष्येऽभिधेये। परीपाकः-परिपाकः। प्रतीवेशः-प्रतिवेशः। प्रतीरोधः-प्रतिरोधः। प्रतिकारः-प्रतीकारः। अमनुष्ये किम्? निषादो मनुष्यः। बहुलग्रहणात् प्रसारः। प्रहारः।

### ७३०. इकः काशे ६-३-१२३

इगन्तस्योपसर्गस्य दीर्घः स्यात् काशे। वीकाशः। नीकाशः। इकः किम्? प्रकाशः।

### ७३१. नरे संज्ञायाम् ६-३-१२९

विश्वस्य वसुराटोः इति पूर्वसूत्रात् विश्वस्येति वर्तते। विश्वस्य दीर्घः स्यात् नरे परे संज्ञायाम्। विश्वानरः।

Funding: IKS/Tattva Heritage. Digitization: Sarayu Trust/eGangotri



## ७३२. मित्रे चर्षौ ६–३–१३०

मित्रशब्दे उत्तरपदे नरस्य दीर्घः स्यात् ऋषावभिधेये । विश्वामित्रः । ऋषौ किम्? विश्वमित्रो माणवकः ।

## ७३३. पानं देशे ८–४–९

णत्वप्रकरणस्थमिदम् । 'पूर्वपदात् संज्ञायामगः' इत्यतः 'पूर्वपदात्' इत्यनुवर्तते । पूर्वपदस्थान्निमित्तात् परस्य पानस्य नस्य णत्वं स्यात् देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । पीयते इति पानं कर्मणि ल्युट् ।

## ७३४. वा भावकरणयोः ७–४–१०

भावे करणे च यः पानशब्दः तदीयस्य नस्य णोवास्यात् पूर्वपदस्थान्निमित्तात् परस्य । क्षीरपाणम्-क्षीरपानम् । कषायपाणम्-कषायपानम् । सुरापाणम्-सुरापानम् । करणे तु क्षीरपाणः कंसः । क्षीरपानो वा ।

## ७३५. प्रातिपदिकान्तनुम्विभक्तिषु च ८–४–११

प्रातिपदिकान्ते नुमि विभक्तौ च यो नकारस्तस्य पूर्वपदस्थान्निमित्तात्परस्य वा णः स्यात् । 'अट्कुप्वाङ्नुम्व्यवायेऽपि' । प्रातिपदिकान्ते, माषवापिणौ-माषवापिनौ । नुमि, व्रीहिवापाणि-व्रीहिवापानि । विभक्तौ, व्रीहिवापेण-व्रीहिवापेन ।।

## ७३६. एकाजुत्तरपदे णः ८–४–१२

यद्युत्तरपदमेकाच्कं तर्हि 'प्रातिपदिकान्तेत्या'दिपूर्वसूत्रविहितविकल्पं बाधित्वा नस्य नित्यं णः । व्याख्यातपूर्वमिदं सूत्रम् । वृत्रहणौ । क्षीरपाणि । क्षीरपेण ।।

## ७३७. कुमति च ८–४–१३

कवर्गवत्युत्तरपदे प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णः स्यात् । वस्त्रयुगिणौ । स्वर्गकामिणौ । चन्द्रगामिणौ । नुमि, वस्त्रयुगाणि । स्वरयुगाणि । विभक्तौ, वस्त्रयुगेण । हरिकामेण ।।

## ७३८. पदान्तस्य ८-४-३७

णत्वनिषेधकमिदं सूत्रं पूर्वं व्याख्यातम् । अत्र हि 'न भाभूपू इत्यादि सूत्रात् नेति वर्तते । वृक्षान् । प्लक्षान् । गिरीन् । अरीन् ॥

## ७३९. पदव्यवायेऽपि ८-४-३८

पदव्यवायः पदेन व्यवधानम् । रेफषकारयोर्णकारस्य च पदेन व्यवधानेऽपि णत्वं न स्यात् ॥ माषकुम्भवापेन । चतुरङ्गयोगेन ।

### अतद्धित इति वाच्यम् (वा)

अतद्धिते परे यत्पदं तेन व्यवायेऽयं निषेधः । तद्धितपरकत्वे तु नास्ति निषेधः । आर्द्रगोमयेण । शुष्कगोमयेण । 'गोश्च पुरीषे' इति षष्ठ्यन्तान्मयट् । अन्तर्वर्तिनीं विभक्तिमाश्रित्य गोशब्दः पदम् । तेन व्यवायेऽपि णत्वम् ।

### युवादेर्न (वा)

रम्ययूना । परिपक्वानि ॥

## ७४०. कुस्तुम्बुरूणि जातिः ६-१-१४३

'सुट् कात् पूर्वः' (६-१-१३५) इति सुट्प्रकरणस्थमिदम् । कुस्तुम्बुरूणीति सुण्निपात्यते जातिश्चेद्भवति । कुस्तुम्बुरुर्धान्याकमोषधिजातिः । तत्फलानि कुस्तुम्बुरूणि । सूत्रे लिङ्गवचने अविवक्षिते । जातिः किम् ? कुत्सितानि तुम्बुरूणि तिन्दुकीफलानि कुतुम्बुरूणि ॥

## ७४१. अपरस्पराः क्रियासातत्ये ६-१-१४४

अत्र सुण् निपात्यते । अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियासातत्ये किम् ? अपरपरा गच्छन्ति । अपरे च परे च सकृद् गच्छन्तीत्यर्थः । परस्पराक्षिसादृश्यम्, परस्परं नमन्तीत्यादौ तु कर्मव्यतिहारे परशब्दस्य द्विर्भावः । पूर्वपदस्थविभक्तेः सुः । कस्कादित्वात् सत्वमिति बोध्यम् ॥

## ७४२. गोष्पदं सेवितासेवितप्रमाणेषु ६-१-१४५

सेविते, असेविते, प्रमाणे च विषये गोष्पदमित्यत्र सुट् तस्य षत्वञ्च निपात्यते । गावः पद्यन्ते अस्मिन् देशे गोष्पदो देशः=गोभिः सेवितः ।

असेविते-अगोष्पदमरण्यम् । यत्र गवां संचारसंभावनापि नास्ति । प्रमाणे, गोष्पदमात्रं क्षेत्रम् । गोष्पदपूरं वृष्टो देवः । अल्पप्रमाणत्वमनेन बोध्यते । सेवितेत्यादि किम् ? गोः पदं गोपदम् ॥

७४३. आस्पदं प्रतिष्ठायाम् ६-१-१४६

शरीररक्षणाद्यर्थं स्थानं प्रतिष्ठा । तस्यामास्पदमिति निपात्यते । आस्पदम् । प्रतिष्ठायामिति किम् ? आ पदात् आपदम् । अव्ययीभावः ।

७४४. आश्चर्यमनित्ये ६-१-१४७

अद्भुते सुट् । अनित्यशब्देन अद्भुतं लक्ष्यते । आश्चर्यं यदि स भुञ्जीत । अनित्ये किम् ? आचर्यं कर्म शोभनम् ॥

७४५. वर्चस्केऽवस्करः ६-१-१४८

वर्चस्कंपुरीषम् । तस्मिन् अवस्करमिति सुण् निपात्यते । तत्संबन्धात् पुरीषस्थानमप्यवस्करः ॥ वर्चस्के किम् ? अवकरः । अवकीर्यमाणं चूर्णादि ॥

७४६. अपस्करो रथाङ्गम् ६-१-१४९

अपस्करो रथावयवश्चक्रम् । अन्यत्र अपकरः ॥

७४७. विष्किरः शकुनिर्विकिरो वा ६-१-१५०

शकुनिः पक्षी । सुड्विकल्पः । विष्किरो विकिरो वा पक्षी । सुडभावे विकिरस्यार्थान्तरमपि । 'विकिरं वैश्वदेविक' मिति प्रयोगात् ॥

७४८. प्रतिष्कशश्च कशेः ६-१-१५२

कशं गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुण् निपात्यते षत्वञ्च । वार्तापुरुषः सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते । कशेरिति किम् ? प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव कशाशब्दो निष्पन्नः तथापि कशेरितिधातोर्ग्रहणं स्वस्यैवोपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन प्रतिकशोऽश्व इत्यत्र प्रतिर्गतेवोपसर्ग नकारोः इति न सुट् ॥

७४९. प्रस्कण्वहरिश्चन्द्रावृषी ६-१-१५३

प्रस्कण्व इति हरिश्चन्द्र इति च ऋषौ वाच्ये निपात्येते । प्रस्कण्वऋषिः

हरिश्चन्द्रो राजर्षिः ॥

**७५०. मस्करमस्करिणौ वेणुपरिव्राजकयोः ६–१–१५४**

मस्कर, मस्करिन् इत्येतौ वेणौ परिव्राजके च यथासंख्यं निपात्येते । मस्करो वेणुः । वेणुग्रहणं प्रदर्शनार्थम् । मस्करो दण्ड इत्यपि भवति । मस्करी परिव्राजकः । अन्यत्र मकरो ग्राहः । मकरी समुद्रः । अव्युत्पन्नो मकरशब्दः, तस्य सुडिनिश्च निपातनात् । अथवा 'मा कुरुत कर्माणि शान्तिर्वः श्रेयसीति'य आह स मस्करी । माङ्युपपदात् कृञ इनिर्माङो ह्रस्वः सुट् च निपातनात् ॥

**७५१. पारस्करप्रभृतीनि च संज्ञायाम् ६–१–१५७**

पारस्करप्रभृतीनि शब्दस्वरूपाणि निपात्यन्ते संज्ञायां विषये ॥ पारस्करो देशः । कारस्करो वृक्षः । किष्कुः प्रमाणम् । किष्किन्धा गुहा ॥

**तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च (ग)**

गणसूत्रमिदम् । तलोप इत्यत्र तकारात् पूर्वं चर्त्वेन दकारोऽपि निर्दिष्टः । तद्बृहतोः दकारतकारौ लुप्येते करपत्योस्तु सुट् । तस्करश्चोरः । तत् करोतीति विग्रहः । दलोपः । बृहस्पतिर्देवता । बृहतो वाक्समूहस्य पतिरिति विग्रहः । अत्र तलोपः ।

**प्रायस्य चित्ति चित्तयोः (ग)**

गणसूत्रमिदम् । प्रायस्य सुट् स्यात् चित्तिचित्तयोः प्रायश्चित्तम् । प्रायश्चित्तिः ॥ 'प्रायः पापं विजानीयात् चित्तं तस्यविशोधनम्' इति स्मृतिः ।

**प्रात्तुम्पतौ गवि कर्तरि (ग)**

इदमपि गणसूत्रम् । तुम्प हिंसायां भ्वादिः । प्रशब्दात् तुम्पतौ परे सुट् स्यात् गवि कर्तरि । तस्मादित्युत्तरस्येति तुम्पतेः सुट् । प्रस्तुम्पति गौः । अड्भ्यासव्यवायेऽपि । प्रातुम्पत् । प्रस्तुस्तुम्प । गविकर्तरीति किम् ? प्रतुम्पत्यजः ॥ पारस्करादिराकृतिगणः । तेन वनस्पतिः, परःशतम्, परःसहस्रम् इत्यादि सिद्धम् ॥ (सूत्राणि ७५१)

इति समासाश्रयविधिकरणम्

———

# अथ क्रियापद प्रकरणम् (दशगणी)

तत्रादौ दश लकाराः प्रदर्श्यन्ते । लट्, लिट्, लुट्, लृट्, लेट्, लोट्; लङ्, लिङ्, लुङ्, लृङ् । एषु पञ्चमो लेट् छन्दोमात्रगोचरः । लिङ् तु विधिलिङ् आशीर्लिङ् इति द्विविधः ।

## ७५२. धातोः ३-१-९१

आतृतीयाध्यायपरिसमाप्तेरधिकारोऽयम् ।

## ७५३. वर्तमाने लट् ३-२-१२३

वर्तमान[1]कालक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । 'प्रत्ययः' 'परश्च' इति सूत्राभ्यां प्रत्ययसंज्ञकोऽयं धातोः परः ।

## ७५४. लः कर्मणि च भावे चाकर्मकेभ्यः ३-४-६९

'कर्तरि कृत्' इत्यतः कर्तरीत्यनुवर्तते । लकाराः सकर्मके[2]भ्यो धातुभ्यः कर्तरि कर्मणि च स्युः, अकर्मके[3]भ्यो भावे कर्तरि च ।

## ७५५. लस्य ३-४-७७

अधिकारोऽयम् ।

## ७५६. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथां ध्वमिड्वहिमहिङ् ३-४-७८

तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् इति च्छेदः । एतेऽष्टादश लादेशाः स्युः ।

---

1. वर्तमानत्वं प्रारब्धापरिसमाप्तक्रियाश्रयत्वं कालगतं बोध्यम् ।
2. फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् ।
3. फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । सूत्रे 'भावे चाकर्मकेभ्यः' इति विशेषविधानेन पूर्ववाक्ये 'सकर्मकेभ्यः' इति लभ्यते ॥

## ७५७. लः परस्मैपदम् १-४-९९

आदेशा इत्यध्याहारेण तदपेक्षया 'लः' इति षष्ठी। लादेशाः परस्मैपदसंज्ञाः स्युः।

## ७५८. तङानावात्मनेपदम् १-४-१००

लस्येत्यनुवर्तते। तङ् प्रत्याहारः 'त' प्रभृतीनां 'महिङ्पर्यन्तानां नवानाम्। आनशब्देन शानच् कानचोर्ग्रहणम्। लादेशास्तङ्शानच्कानचश्चात्मनेपदसंज्ञाः स्युः। परस्मैपदसंज्ञापवादः। तङ्-मोदते, शानच-मोदमानः, कानच् तु छन्दस्येव-'चक्राणा वृष्णि'। ताच्छील्यादिषु विधीयमानश्चानश् तु नात्मनेपदसंज्ञकः। तस्य लादेशत्वाभावात्। तेन परस्मैपदिभ्योऽपि चानश् भवति। पठमानः, निघ्नानः। परिशेषात् तिबादयो नव शतृक्वसू च परस्मैपदसंज्ञकाः।

## ७५९. अनुदात्तङित आत्मनेपदम् १-३-१२

अनुदात्तश्च ङ्च अनुदात्तङौ। तौ इतौ यस्य सः अनुदात्तङित्। 'उपदेशेऽजनुनासिक' इत्यतः उपदेशग्रहणमनुवर्तते। अनुदात्तेतः, उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात्। मोदते। शेते। तदन्तादिति किम्? बोभूयते। अत्र यङन्तो बोभूयधातुर्ङिदन्तो न तु ङिदित्यात्मनेपदं न स्यात्।

## ७६०. स्वरितञितः कर्त्रभिप्राये क्रियाफले १-३-७२

कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम्। कर्मण्यण्। स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्। कर्तृगामिनि क्रियाफले। क्रियाफलञ्च नात्र धात्वर्थफलम्। किन्तु श्रुत्या लोकतो वा यदुद्देशेन क्रियाप्रवृत्तिरवगता तत्। तच्च यज्यादौ स्वर्गादि। पच्यादौ भोजनादि। पचति-पचते, करोति-कुरुते।

## ७६१. शेषात् कर्तरि परस्मैपदम् १-३-७८

आत्मनेपदनिमित्तको धातुरुक्तः। तस्मादन्यः शेषः। आत्मनेपदनिमित्तहीनाद्धातोर्लस्य स्थाने कर्तरि परस्मैपदं स्यात्। भवति।

13

### ७६२. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १-४-१०१

त्रीणि त्रीणि = त्रयस्त्रिकाः। तिङोऽष्टादशप्रत्यया: नव परस्मैपदसंज्ञकाः, नव आत्मनेपदसंज्ञकाः। उभयेष्वपि त्रयस्त्रिकाः क्रमात् प्रथममध्यमोत्तमसंज्ञकाः स्युः। तदित्थम्—

#### परस्मैपदेषु

तिप्, तस्, झि = प्रथमपुरुषः। सिप्, थस्, थ = मध्यमपुरुषः। मिप्, वस्, मस् = उत्तमपुरुषः।

#### आत्मनेपदेषु

त, आताम्, झ = प्रथमपुरुषः। थास्, आथाम्, ध्वम् = मध्यमपुरुषः। इट्, वहि, महिङ् = उत्तमपुरुषः।

### ७६३. तान्येकवचनद्विवचनबहुवचनान्येकशः १-४-१०२

तानि = लब्धप्रथमादिसंज्ञानि। एकशः = प्रत्येकम्। लब्धप्रथमादिसंज्ञानि तिङां त्रीणि त्रीणि प्रत्ययरूपाणि क्रमात् एकवचनद्विवचनबहुवचनसंज्ञानि स्युः। एकैकस्य त्रिकस्य प्रत्ययाः क्रमादेकवचनादिसंज्ञकाः। तिबित्येकवचनम्। तसिति द्विवचनम्। झीति बहुवचनम्। एवं सर्वत्र॥

### ७६४. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १-४-१०५

समीपोच्चारितपदमुपपदम्। समानाधिकरणम् = एकार्थबोधकम्। तच्चेह प्रत्यासत्त्या लकारेण। यस्मिन्नप्रयुज्यमानेऽपि तदर्थावगतिः स स्थानी। लेन समानाधिकरणे युष्मद्युपपदे इत्यन्वयः। लेन एकार्थवाचकत्वञ्च प्रकृते लवाच्यकारकवाचकत्वमेव। लवाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात्। त्वं पचसि। लवाच्यः कर्ता, स एव युष्मत्पदार्थ इति सामानाधिकरण्यम्। त्वं दृश्यसे। लवाच्यं कर्म, तदेव युष्मत्पदार्थः। स्थानिन्यपीति किम्? क्व गच्छसि? अप्रयुज्यमानेऽपि युष्मत्पदे त्वमित्यवगम्यते॥

७६५. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च १-४-१०६

मध्यमोत्तमयोर्व्यत्यासार्थमिदं सूत्रम् । प्रहासः परिहासः । मन्येति दैवादिकस्य 'मन ज्ञाने' इत्यस्य ग्रहणम् । सूत्रे वाक्यद्वयम् । 'प्रहासे च मन्योपपदे' इति प्रथमं वाक्यम् । अत्र मध्यम इत्यनुवर्तते । उत्तरसूत्रात् 'अस्मदि' इत्यस्य अपकर्षः । मन्यधातुरुपपदं यस्य धातोः सः मन्योपपदः । मन्यतेरुत्तम एकवच्चेति द्वितीयं वाक्यम् । अत्र युष्मद्युपपदे इति पूर्वसूत्रादनुवर्तते तथाच–परिहासे गम्यमाने मन्यधातुरुपपदं यस्य तस्माद्धातोर्मध्यमः स्यादस्मद्युपपदे, मन्यतेस्तु उत्तमःस्याद्युष्मद्युपपदे, स चोत्तमः एकवत् स्यात् । द्वित्वबहुत्वयोरप्येकवचनं लभत इत्यर्थः । मध्यमस्य विपर्ययेणोत्तमः, उत्तमस्य विपर्ययेण मध्यमः, मन्यतेस्तु संख्यात्रयेऽप्येकवचनमिति फलितोऽर्थः । एहि, मन्ये ओदनं भोक्ष्यस इति भुक्तः सोऽतिथिभिः । जामातरंप्रति श्यालकादेः परिहासवचनमिदम् । 'अहमोदनं भोक्ष्ये इति त्वं मन्यसे' इत्यर्थः । एवं 'मन्ये ओदनं भोक्ष्येथे इति' इत्यस्य 'मन्येथे ओदनं भोक्ष्यावहे इति' इत्यर्थः । 'मन्ये ओदनं भोक्ष्यध्वे इति' इत्यस्य 'मन्यध्वे ओदनं भोक्ष्यामहे इति' इत्यर्थः ॥

७६६. अस्मद्युत्तमः १-४-१०७

लवाच्यकारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने चोत्तमः स्यात् । अहं पठामि । पृच्छामि तावत् ।

७६७. शेषे प्रथमः १-४-१०८

युष्मदस्मत्सामानाधिकरण्याभावे धातोः प्रथमः स्यात् । सः पठति । भवान् पठति । अत्र भवद्योगे न मध्यमः । युष्मत्पदाभावात् । इदन्तु बोध्यम् । अहञ्च त्वञ्च गच्छाव इत्यत्रोत्तम एव । अस्मद्युत्तम इति सूत्रस्य परत्वात् । त्वञ्च देवदत्तश्च गच्छथः, अहञ्च देवदत्तश्च गच्छाव इत्यत्र मध्यमोत्तमावेव न तु प्रथमः । युष्मदस्मद्भ्यां सामानाधिकरण्यस्य सत्त्वेन शेषत्वाभावात् ।

७६८. तिङ् शित् सार्वधातुकम् ३-४-११३

धातोरित्यधिकृतम् । तिङः शितश्च धात्वधिकारोक्ताः सार्वधातुकसंज्ञाः

\3*

स्युः । धातोरिति किम् ? द्वौ द्वौ ददाति द्विशः । शासः सार्वधातुकत्वे सार्वधातुकमपित् इति ङित्वात् घ्क्ङितीति गुणप्रसङ्गः । भू सत्तायाम् । वर्तते इति शेषः । सत्तेह आत्मधारणम् । तच्च स्वस्वरूपधृत्यनुकूलो व्यापारः । स्वरूपधृतिर्नाम स्वरूपनिष्ठकालसंबन्धः । फलव्यापारयोरेकनिष्ठत्वादकर्मको धातुः । परस्मैपदी ।

## ७६९. कर्तरि शप् ३-१-६८

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । शपावितौ । तिङि परे धातोर्विहितानां शबादिप्रत्ययानां विकरणसंज्ञा प्राचाम् । भू अति इति स्थिते ।

## ७७०. इकोगुणवृद्धी १-१-३

इयं परिभाषा स्थानिनियमार्थं प्रवृत्ता । 'इकः' इति षष्ठ्यन्तानुकरणं स्वरूपपरम् । तच्च नपुंसकं प्रथमैकवचनान्तम् । सोर्लुकालुप्तत्वेन 'अत्वसन्तस्ये'ति दीर्घो न । 'इकः' इति पदमित्यर्थः । उपतिष्ठते इति शेषः । 'वृद्धिरादैच्' 'अदेङ्गुणः' इति सूत्राभ्यामनुवृत्तौ गुणवृद्धिशब्दौ स्वरूपपरौ । गुणो वृद्धिरिति ये गुणवृद्धी इति योजना । गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते । 'सार्वधातुकार्धधातुकयोः' सिचिवृद्धिः परस्मैपदेषु' इत्यादौ परिभाषेयं प्रवर्तते । भवति, नयति; अकार्षीत्, अचैषीत्-इत्यादीत्युदाहरणानि । 'सार्वधातुकार्धधातुकयोः' इत्यादौ इक इत्युपस्थित्या यास्यति वास्यतीत्यादावाकारस्य, ग्लायति म्लायतीत्यदावैकारस्य, लपिष्यति गमिष्यतीत्यादौ पकारमकारयोर्गुणो न भवति । अन्यथा 'अलोऽन्त्यस्य' इत्याकारादीनां गुणस्य प्रसङ्गः । गुणवृद्धिशब्दाभ्यामिति किम् ? द्यौः । 'दिव औत्' इत्यौकारो वृद्धिर्विधीयते । इक इत्युपस्थितौ उपधाया इकारस्य औकारादेशप्रसङ्गः । वृद्धिशब्दमुच्चार्य औकारस्याविधानात् इक इत्यनुपस्थितौ 'अलोऽन्त्यस्ये'ति वकारस्यादेशः । एवं 'पथिमथ्यृभुक्षामात्' 'त्यदादीनामः' इत्यादौ परिभाषानुपस्थितेः 'पन्थाः, इमम्' इत्यादावन्त्यस्यैव तत्तदादेश इति बोध्यम् । 'अचोञ्णिति' इत्यादौ तु नेयं परिभाषोपतिष्ठते । अच इति स्थानिनो निर्देशात् ॥

## ७७१. सार्वधातुकार्धधातुकयोः ७-३-८४

अङ्गस्येत्यधिकृतम् । इक इत्युपतिष्ठते । तदन्तविधिः । इगन्ताङ्गस्य गुणः स्यात् सार्वधातुकार्धधातुकयोः परयोः । भो अति इति जाते अवादेशः । भवति । भवतः ।

## ७७२. झोऽन्तः ७-१-३

झ इति षष्ठ्यन्तम् । 'आयनेयीनी ...' इति सूत्रात् प्रत्ययग्रहणमनुवर्तते । प्रत्ययावयवस्य झस्य अन्तादेशः स्यात् । चरमोऽकार उच्चारणार्थः । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ । प्रत्ययेति किम् ? उज्झिता ।

## ७७३. अतो दीर्घो यञि ७-३-१०१

'तुरुस्तु ...' इति सूत्रात् सार्वधातुक इति वर्तते । अदन्ताङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ।

## ७७४. परोक्षे लिट् ३-२-११५

धातोः, भूते इति चाधिकृतम् । अनद्यतने लङ् इत्यतोऽनद्यतन इत्यनुवर्तते । भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः । वर्तमानध्वंसप्रतियोगिक्रियाश्रयत्वं भूतत्वम् । अतीतरात्रेरन्त्ययामेन आगामिन्याः पूर्वयामेन च सहितः कालोऽद्यतनः । तद्भिन्नोऽनद्यतनः । प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वम् ।

## ७७५. लिट् च ३-४-११५

लिडिति लुप्तषष्ठीकम् । तिङ् आर्धधातुकमितिचानुवर्तते । लङः शाकटायनस्यैवेत्यतः एवग्रहणञ्च । लिडादेशस्तिङ् आर्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः । सार्वधातुकसंज्ञाभावेन लिटि परे शवादयो न ।

**७७६. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३-४-८२**

णल् , अतुस् , उस् , थल् , अथुस् , अ, णल् , व, म-इति च्छेदः। परस्मैपदानां लिडादेशानां तिबादीनां नवानां स्थाने णलादयो नव स्युः ' यथासंख्यमनुदेशः समानाम् '। भू अ इति स्थिते।

**७७७. भुवो वुग् लुङ्लिटोः ६-४-८८**

' अचि श्नु धातु ... ' इत्यतः अचीत्यनुवर्तते। भुवो वुगागमः स्यादजादौ लुङि लिटि च। नित्यत्वात् वुग् गुणवृद्धी बाधते। कृताकृतप्रसङ्गि नित्यम्। कित्वादन्त्यावयवः। भू व् अ इति जाते।

**७७८. एकाचो द्वे प्रथमस्य ६-१-१**

एकः अच् यस्य सः। तस्य। अधिकारोऽयम्।

**७७९. अजादेर्द्वितीयस्य ६-१-२**

अच्चासावादिश्च अजादिः। तस्मात् परस्य द्वितीयस्यैकाचः। अयमप्यधिकारः।

**७८०. लिटि धातोरनभ्यासस्य ६-१-८**

न विद्यते अभ्यासो यस्य सः। तस्य धातोः। लिटि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः, आदिभूतादचः परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते। अजादेस्तु ' अटिटिषति ' इत्यादि सनादौ।

**७८१. पूर्वोऽभ्यासः ६-१-४**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात्। पूर्वस्य भू इत्यस्याभ्याससंज्ञा।

**७८२. हलादिः शेषः ७-४-६०**

शिष्यत इति शेषः। कर्मणि घञ्। इतरनिवृत्तिपूर्वकावस्थानं धात्वर्थः। निवृत्तिश्च सजतीयानां हलामेव। अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। इति वलोपः।

७८३. ह्रस्वः ७-४-५९

'अचश्च' इत्युपतिष्ठते। 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येत्यनुवर्तते। अभ्यासस्याचो ह्रस्वः स्यात्। भु भूव् अ इति जाते।

७८४. भवतेरः ७-४-७३

भवतेरिति श्तिपा निर्देशः। भवतेरभ्यासस्य अकारः स्याल्लिटि। भ भूव् अ। अभ्यासस्य ह्रस्वविधानन्तु हलादिःत्याद्यर्थं न्याय्यत्वादिहापि भवति।

७८५. अभ्यासे चर्च ८-४-५४

झलां जश् झशीत्यतः झलामिति जश् इति चानुवर्तते। अभ्यासे झलां चरः स्युर्जशश्च। तत्र झशां जशः, खयां चरः, आन्तरतम्यात्। तत्रापि तत्तद्धर्माणां तत्तद्धर्म्या एवादेशाः स्थानसाम्यात्। बभूव। बभूवतुः। बभूवुः।

७८६. असिद्धवदत्राभात् ६-४-२२

उत्तरत्र 'भस्य' (६-४-१२९) इत्यधिकारसूत्रं पठिष्यते। तदधिकारश्चापादपरिसमाप्तेः। आभादित्यभिविधावाङ्। भाधिकारमभिव्याप्येत्यर्थः। तत्राधिकारसूत्रं 'श्नान्नलोपः' इत्यादौ प्रतिसूत्रमुपतिष्ठते। तेन तत्तदाभीये कार्ये कर्तव्ये इति लभ्यते। अत्रेति निमित्तसप्तम्यन्तम्। अत्र एतन्निमित्तके। असिद्धीभवतः कार्यस्य यन्निमित्तं तन्निमित्तके कार्ये इत्यर्थः। समानाश्रये इति यावत्। समानाश्रये आभीये कार्ये कर्तव्ये समानाश्रयमाभीयमसिद्धवत्। एधि शाधि। घ्वसोरेद्धावभ्यासलोपश्चेति अस्तेरेत्वं, शा हाविति शास्तेः शाभावश्च। तयोरसिद्धत्वेन धात्वोर्झलन्तत्वात् हुझल्भ्यो हेर्धिरिति हेर्धिः। समाननिमित्तक इति किम्? पपुषः। पा धातोः क्वसुः। ततो द्वितीयाबहुवचनं शस्। पपा वस् अस् इति स्थिते शस्निमित्तकं वसोः संप्रसारणम्। पपा उस् अस् इति जाते आतो लोप इटि चे'त्यालोपः। तस्मिन् कर्तव्ये संप्रसारणं सिद्धमेव, नासिद्धम्। आल्लोपः क्सौ, संप्रसारणन्तु शसीति भिन्ननिमित्तकत्वात्। आभीये कार्ये इति किम्? अभाजि। रागः। अत्र भञ्जेश्चिणि रञ्जेर्घञि च कृते रञ्जेश्च (६-४-२६) घञि च भावकरणयोः (६-४-२७) इति नलोपः। तस्य आभीयत्वेऽपि अत

उपधायाः (७-२-११६) इति वृद्धौ कर्तव्यायां नासिद्धत्वम्। वृद्धेरनाभीयत्वात्। प्रकृते च बभूवेत्यादौ वुकोऽसिद्धत्वात् उवङि प्राप्ते ॥

**वुग्युटौ उवङ्यणोः सिद्धौ वक्तव्यौ (वा)**

वुकः सिद्धत्वान्नोवङ्। तथा युटः सिद्धत्वान्न यण्। दिदीये।

**७८७. आर्धधातुकस्येड्वलादेः ३-१-३३**

वलादेरार्धधातुकस्येडागमः स्यात्। बभूविथ। आर्धधातुकस्येति किम्? जुगुप्सते। अत्र सनो नार्धधातुकत्वम्। धातोरित्यधिकृत्यविहितत्वाभावात्। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

**७८८. अनद्यतने लुट् ३-३-१५**

'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवर्तते। भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात्। विद्यमानप्रागभावप्रतियोगिक्रियाश्रयत्वं भविष्यत्त्वम्।

**७८९. स्यतासी लृलुटोः ३-१-३३**

धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः। लृ इति लृङ्लृटोर्ग्रहणम्। शबाद्यपवादः।

**७९०. आर्धधातुकं शेषः ३-४-११४**

तिङ्शिद्भ्योऽन्यः शेषः। धातोरित्यधिकृतं विहितविशेषणमाश्रीयते। तिङ्शिद्भ्योऽन्यः धातोरित्युच्चार्य विहितः प्रत्ययः आर्धधातुकसंज्ञः स्यात्। स्यतासी आर्धधातुकौ। जुगुप्सत इत्यत्र सन् तु नार्धधातुकः धातोरिति विहितत्वाभावादित्युक्तम्। पिपठिषतीत्यादौ तु सन्नार्धधातुक एव, धातोरिति विहितत्वादिति बोध्यम्। तासेरिकार उच्चारणार्थः। तास आर्धधातुकत्वादिट्।

**७९१. लुटः प्रथमस्य डारौरसः २-४-८५**

लुडादेशस्य प्रथमपुरुषस्य डा रौ रस् एते क्रमात् स्युः। अनेकाल्त्वात् सर्वादेशः। आदेशे सति स्थानिवद्भावेन डा इत्यस्य प्रत्ययत्वात् चुटू इति डकारस्येत्त्वम्। डित्वसामर्थ्यादभस्यापि टेर्लोपः। धातोर्गुणः। अवादेशः। भविता।

### ७९२. पुगन्तलघूपधस्य च. ७-३-८६

पुक् अन्तः यस्य तत् पुगन्तम् । लघ्वी उपधा यस्य तत् लघूपधम् । तयोः समाहारद्वन्द्वः । अङ्गस्येत्यधिकृतम् । मिदेर्गुणः इत्यतो गुण इत्यनुवर्तते । गुणश्रुत्या इक इत्युपतिष्ठते । पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात् सार्वधातुकार्धधातुकयोः । ह्रेपयति । मोदते । अव्यवहितपूर्वत्वाभावेनेकः कथं गुण इति चेत् । 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' । येन वर्णेन व्यवधानमवर्जनीयं तेन व्यवधानेऽपि कार्यं प्रवर्तते, पुगन्तलघूपधस्य चेति वचनस्यैव प्रमाणत्वात् । यदि व्यवधानं न सह्यते तर्हि क्वाप्युदाहरणासंभवेन सूत्रस्य निर्विषयत्वप्रसङ्गः । तच्च व्यवधानमेकेनैव वर्णेन । तेन शिक्षते इत्यादावनेकव्यवधाने गुणो न । प्रकृते भवितेत्यत्रेको गुणे प्राप्ते ।

### ७९३. दीधीवेवीटाम् १-१-६

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः । इति गुणो न । दीधीवेवी छान्दसौ ।

### ७९४. तासस्त्योर्लोपः ७-४-५०

'सः स्यार्धधातुके' इत्यतः 'सि' इति वर्तते । अङ्गाधिकारात् प्रत्ययस्याक्षेपः । तदादिविधिः । तासेरस्तेश्च लोपः स्यात् सादौ प्रत्यये परे ।

### ७९५. रि च ७-४-५१

रादौ प्रत्ययेऽपि प्राग्वत् । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्मः । अस्तेस्तु-असि । कर्मव्यतिहारे तङ् व्यतिसे ।

### ७९६. लृट् शेषे च ३-३-१३

भविष्यति गम्यादयः इति सूत्रात् भविष्यतीति वर्तते । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति पूर्वसूत्रे क्रियार्थायां क्रियायामित्यर्थनिर्देशः स्थितः । चशब्दात् तस्मिन्नर्थे इति शेषशब्दात् तस्मिन्नर्थेऽसत्यपीति च लभ्यते । भविष्यदर्थात् धातोर्लृट् स्यात् क्रियार्थायां क्रियायमसत्यां सत्याञ्च । क्रियार्थायां क्रियायामसत्यां, सः पठिष्यति । सत्यां, पठिष्यामीति व्रजति । पठनक्रियार्थो

व्रजनक्रिया । पक्षे पटितुं व्रजति । तुमुना लटो बाधो मा भूदिति 'शेषे चे'त्युक्तम् । भूधातोर्लृट् । स्यतासी लृलुटोः । स्यस्येट् । षत्वम् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ।

## ७९७. लोट् च ३-३-१६२

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति सूत्रं लिङ्पदवर्ज मनुवर्तते । विध्यादिष्वर्थेषु धातोर्लोट् स्यात् । विध्यादिशब्दा अनुपद व्याख्यास्यन्ते ।

## ७९८. आशिषि लिङ्लोटौ ३-१-१७३

आशासनमाशीः । इष्टप्राप्तीच्छा । आशिष्यपि लिङ्लोटौ स्तः ।

## ७९९. एरुः ३-४-८६

लोटो लङ्वत् इत्यतो लोट इत्यनुवर्तते । एः=इकारस्य । लोट इकारस्य उः स्यात् । लोटस्तिप् । तिप इकारस्य उः । शपि गुणे अवादेशे च भवतु ।

## ८००. तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७-१-३५

तुश्च हिश्च तुही । तयोः । आशिषि तुह्योस्तातङ् वा स्यात् । तातङि ङकार इत् । अकार उच्चारणार्थः । अयञ्च तातङ् ङित्वात् किमन्त्यादेशः उतानेकाल्त्वात् सर्वादेश इति शङ्कायामपवादत्वादन्त्यादेश इति प्राप्तम् । अत्र विचारः । यदि तातङन्त्यादेशः स्यात् प्रयोजनान्तरं ङित्वस्य न संभवति । प्रत्ययान्तस्यादेशेन प्रत्ययस्याङित्वात् । सर्वादेशे तु प्रत्ययस्यैव ङित्वेन द्विष्टात् इत्यादौ गुणनिषेधः, स्तुतात् इत्यादौ वृद्धिनिषेधः, उष्टात् (वश-कान्तौ) इत्यत्र संप्रसारणम्, ब्रूतात् इत्यत्र ईडभावश्चेति बहूनि प्रयोजनानि संभवन्ति । अनङ्ङादौ इत्यादौ प्रयोजनान्तराभावेन अन्त्यादेशो भवतीति ङिच्चेति चरितार्थम् । चरितार्थस्य तस्य निरवकाशत्वाभावेन प्रकृते अपवादत्वं नास्तीति । एवञ्चोभयोस्तुल्यबलत्वात् विप्रतिषेधः । विप्रतिषेधेपरं कार्यमिति सर्वादेशः । भवतात् ।

### ८०१. लोटो लङ्वत् ३-४-८५

लङ इव लङ्वत् । 'तत्र तस्येवे 'ति षष्ठ्यन्ताद्वतिः । लोटो लङ इव कार्यं स्यात् । लङि परेऽङ्गस्य विहितोऽडागमस्तु लोटि न भवति । लङो विहितत्वाभावात् । किन्तु तामादयः सलोपश्च लोटो भवन्ति । तथाहि ।

### ८०२. तस्थस्थमिपां तान्तन्तामः ३-४-१०१

तस्, थस्, थ मिपामिति ताम्, तम्, त, अमः इति च च्छेदः । नित्यं ङितः इत्यतो ङित इत्यनुवर्तते । ङितो लकारस्यादेशानां तसादीनां तामादयः स्स्युः ।

### ८०३. नित्यं ङितः ३-४-९९

'स उत्तमस्ये 'ति सूत्रमनुवर्तते । स इति षष्ठ्यन्तम् । 'इतश्च लोपः परस्मैपदेषु' इति सूत्रात् लोप इति वर्तते । ङितो लकरस्य य आदेशः उत्तमपुरुषः, तस्य सकारान्तस्य लोपः स्यात् । अलोन्त्यस्येति वसमसोः सस्य लोपः । भवताम् । भवन्तु ।

### ८०४. सेर्ह्यपिच्च ३-४-८७

लोटः सेर्हिः स्यात् सोऽपिच्च । हिरयमपित्त्वात् ङिद्भवति । 'सार्वधातुकमपित्' इति वक्ष्यमाणसूत्रात् । तेन स्तुहि इत्यादौ गुणो न । भव हि इति स्थिते ।

### ८०५. अतो हेः ६-४-१०५

'चिणो लुक्' इत्यतो लुगित्यनुवर्तते । अतः परस्य हेर्लुक् स्यात् । भव । आशिषि पक्षे हेस्तातङ् । लुगपेक्षया परत्वात् । भवतम् । भवत ।

### ८०६. मेर्निः ३-४-८९

लोटो मेर्निः स्यात् ।

### ८०७. आडुत्तमस्य पिच्च ३-४-९२

लोडुत्तमस्याडागमः स्यात् स उत्तमः पिच्च । परस्मैपदे द्विवचनबहुवचनयोः विधानार्थमिदम् । एकवचनस्य स्वतः पित्वात् । तेन स्तवाव स्तवामेत्यादौ गुणः सिध्यति । आत्मनेपदेत्वेकवचनार्थमपि । स्तवै । ष्टुञ् स्तुतौ । पित्वादत्र

गुणः । भवानि । हिन्योरह्रस्वं न । इकारोच्चारणसामर्थ्यात् । सलोपः । भवाव । भवाम । यद्यप्यत्र 'अतो दीर्घो यञि' इति दीर्घे रूपमिष्टं सिद्धं, तथापि अदानि अदाव अदामेत्येदर्थमाडागमो विहितो न्याय्यत्वादिहापि भवति ।

### ८०८. अनद्यतने लङ् ३-२-१११

'भूते' इत्यधिकृतम् । अनद्यतनभूतार्थवृत्ते र्धातोर्लङ् स्यात् ।

### ८०९. लुङ्लङ्लृङ्क्ष्वडुदात्तः ६-४-७१

एषु परेषु अङ्गस्याडागमः स्यात् सचोदात्तः ।

### ८१०. इतश्च ३-४-१००

'इतश्च लोपः परस्मैपदेषु' इत्यतो 'लोपः परस्मैपदेषु' इति 'नित्यं ङितः' इत्यतो ङित इति चानुवर्तते । ङितो लस्य परस्मैपदमिकारान्तं यत् तस्यान्त्यस्य लोपः स्यात् । अभवत् । तामादेशः । अभवताम् । इकारलोपे संयोगान्तस्य लोपः । अभवन् । इलोपे ससजुषो रुः । रोर्विसर्गः । अभवः । तन्तावादेशौ । अभवतम् । अभवत । अमादेशः । 'अतो गुणे' । अभवम् । सलोपः । अभवाव । अभवाम ।

### ८११. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ३-३-१६१

विध्यादिष्वर्थेषु धातोर्लिङ् स्यात् । अयं विधिलिङ् इति सार्वधातुकलिङ् इति च व्यह्रियते । आशिषि विधीयमानस्तु आशीर्लिङ् इति आर्धधातुकलिङ् इति च व्यवह्रियते । रूपेष्वनयोर्महान् भेद इति बोध्यम् । विध्यादिष्वर्थेषु लोडपि विहितः । आशिषि लोटस्तु पाक्षिकं तातङादेशं विना नास्ति भेदः । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । इयमेवाज्ञा । वस्त्राणि क्षालयेः । निमन्त्रणं नियोगकरणं आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । दौहित्रं प्रति-श्राद्धे भवान् भुञ्जीत । आमन्त्रणं कामचारानुज्ञा । यथेष्टं कुर्याः । अधीष्टः सत्कारपूर्वको व्यापारः । मित्र प्रति-उपविशेः । इदं कार्यं न वेति विचारणा-संप्रश्नः । किं भो व्याकरणमधीयीय ? । प्रार्थनं याञ्चा । भिक्षां दद्याः । लोटि तु क्षालय, भुङ्क्ताम्-इत्यादि । लिङस्तिबादयः ।

### ८१२. यासुट् परस्मैपदेषूदात्तो ङिच्च ३-४-१०३

'लिङः सीयुट्' इत्यतो लिङ इत्यनुवर्तते। लिङः परस्मैपदानां यासुडागमः स्यात् सचोदात्तोङिच्च। टित्त्वादाद्यवयवः। ङित्त्वमागमे यासुटि प्रयोजनाभावादागमिनि तिबादौ विश्राम्यति। ङित्त्वस्य फलं स्तुयात् इत्यादौ गुणाभावः। यासुडयं सीयुटोऽपवादः। भू यास् ति इति स्थिते।

### ८१३. सुट् तिथोः ३-४-१०७

तिशब्दे इकार उच्चारणार्थः। लिङस्तकारथकारयोः सुडागमः स्यात्। सुटा यासुट् न बाध्यते। लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात्। भूयास् स् ति इति जाते।

### ८१४. लिङः सलोपोऽनन्त्यस्य ७-२-७९

'रुदादिभ्यः सर्वधातुके' इत्यतः सार्वधातुक इत्यनुवर्तते। सार्वधातुक-लिङोऽनन्त्यस्य सस्य लोपः स्यात्। सकारद्वयस्यापि निवृत्तिः। यासुटः सस्य श्रवणं भूयास्तामित्यादावाशीर्लिङि, सुटस्तु मोदिषीष्टेत्यादावात्मनेपदे। तिप इकारस्य लोपः। शप्। गुणः। अवादेशः। भव यात् इति स्थिते।

### ८१५. अतो येयः ७-२-८०

या इति लुप्तषष्ठ्यन्तम्। इय इत्यत्र अकार उच्चारणार्थः। रुदादिभ्य इत्यतः सार्वधातुक इत्यनुवर्तते। अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात्। 'आद्गुणः'। 'लोपो व्यो र्वलि'। भवेत्। सार्वधातुक इति किम्? आशीर्लिङि चिकीर्ष्यादित्यत्र 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन अतो लोपं बाधित्वा इयादेशः स्यात्। भवेदित्यादौ तु परत्वात् दीर्घः स्यात्। सार्वधातुक इत्युक्ते तु दीर्घापवाद इयादेशः। भवेताम्।

### ८१६. झेर्जुस् ३-४-१०८

'लिङः सीयुट्' इत्यतो लिङ इत्यनुवर्तते। लिङो झेर्जुस् स्यात्। अनेकाल्त्वात् सर्वादेशः। ज इत्। अतो येयः। भवेयुः। अत्र शङ्का—

## ८१७. उस्यपदान्तात् ६-१-९६

'आद्गुणः' इत्यस्मादादिति, 'एङि पररूपम्' इत्यस्मात् पररूपमिति चानुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । अवर्णादुसि परे पररूपमेकादेशः स्यात् । शक्नुयुः । कुर्युः । भवेयुरित्यत्र इयादेशात् प्राक् अनेन पररूपे भवयुरिति प्राप्नोतीति । समाधानन्तु वार्णादाङ्गं बलीयः । इत्यादेशः पररूपं बाधते । भवेः । भवेतम् । भवेत ॥ भवेयम् । भवेव । भवेम ॥

## ८१८. लिङाशिषि ३-४-११६

लिङिति लुप्तषष्ठीकम् । 'तिङ्शित् सार्वधातुकम्' इत्यतस्तिङित्यनुवर्तते । लिङादेशस्तिङार्धधातुकसंज्ञः स्यात् । तेन शबादयो न ।

## ८१९. किदाशिषि ३-४-१०४

आशिषि लिङो यासुट् कित् स्यात् । ङित्त्वस्यापवादः । यद्यपि ङित्वेऽपि भूयादित्यादौ गुणनिषेधः सिध्यति, तथापि उच्यात् इत्यादौ वचिस्वपियजादीनां कितीति संप्रसारणार्थं कित्त्वमावश्यकम् ।

## ८२०. ग्क्ङिति च १-१-५

इह ककारात् प्राक् गकारश्चर्त्वेन निर्दिष्टः । ग् क् ङ् इत् यस्येति विग्रहः । इच्छब्दः प्रत्येकमन्वेति । तेन गिति किति ङिति चेति लभ्यते । निमित्तसप्तम्येषा । इको गुणवृद्धी इत्यनुवर्तते । न धातुलोप आर्धधातुके इत्यतो नेति वर्तते । चकार इत्यर्थे । स च इक इत्यत्रान्वेति । ग्क्ङिति सति तन्निमित्ते इक इति विहिते गुणवृद्धी न स्तः । कृतः । कृतवान् । छिन्नम् । भिन्नम् । यदि ग्क्ङिति परे इति व्याख्यायेत तर्हि छिन्नमित्यादौ व्यवधाने निषेधो न स्यात् । इक इति विहिते इत्यस्य इक् परिभाषयोपस्थितस्य इको विहिते इत्यर्थः । तेन लैगवायन इत्यादौ न दोषः । लिगोरपत्यं लैगवायनः । नडादित्वात् फक् । ओर्गुणः । 'तद्धितेष्वचामादेरि'त्यादिवृद्धिः । अत्र इक्परिभाषा नोपतिष्ठत इति गुणवृद्धिनिषेधो नास्ति गकारप्रश्लेषस्य प्रयोजनन्तु जिष्णुः । 'ग्लाजिस्थश्च ग्स्नुः' । भूयात् । भूयास्ताम् । भूयासुः ॥ भूयाः । भूयास्तम् । भूयास्त ।

भूयासम् । भूयास्व । भूयास्म ॥

### ८२१. लुङ् ३-२-११०

धातोरिति भूते इति चाधिकृतम् । भूतार्थवृत्तेर्धातोर्लुङ् स्यात् ।

### ८२२. च्लि लुङि ३-१-४३

लुङि परे धातोः च्लिप्रत्ययः स्यात् । शबाद्यपवादः ।

### ८२३. च्लेः सिच् ३-१-४४

च्लेः सिच् इत्यादेशः स्यात् । इचावितौ । अडागमः । अभ् स् त् इति स्थिते ।

### ८२४. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २-४-७७

'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः, इत्यतो लुगिति वर्तते । गापाविहेणादेशपिवती गृह्येते ' घुशब्देन दाधाघ्वदाप् इति घुसंज्ञकाः । एभ्यः परस्य सिचो लुक् । 'इणो गा लुङि '। अगात् । अस्थात् । अदात् । अधात् । पा पाने । अपात् । अभूत् । इणादेशपिवती इति किम् ? गाङ् गतौ, अगास्त । इङ् अध्ययने, अध्यगीष्ट । पा रक्षणे, अपासीत् । अभूदित्यत्र सार्वधातुकार्धधातुकयोरिति भुवो गुणे प्राप्ते ।

### ८२५. भूसुवोस्तिङि ७-३-८८

'मिदेर्गुणः ' इत्यतो गुण इति, 'नाभ्यस्तस्या चि पिति सार्वधातुके ' इत्यतो नेति सार्वधातुके इतिचानुवर्तते । भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् । इति गुणनिषेधः । षूङ् प्राणिगर्भविमोचने लुग्विकरणः । लोट् । सुवै । अत्र सुवतिसूयत्योर्न ग्रहणम् । विकरणेन व्यवधानात् । सार्वधातुक इति किम् ? आशीर्लिङि सोषीष्ट । सविषीष्ट । तिङि किम् ? शपि-भवति । भवतः ।

### ८२६. अस्तिसिचोऽपृक्ते ७-३-९६

सिच् च अस् च अनयोः समाहारः सिचस् । सौत्रं भत्वम् । तेन 'चोः कुः ' इति चस्य कुत्वं न । अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः

सौत्रो लुक् । भुव ईट् इत्यतः ईडिति वर्तते । 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीत्यनुवर्तते । विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः स्यात् । आसीत् । अकार्षीत् । विद्यमानादित्यस्य श्रूयमाणादित्यर्थः । तेन अभूदित्यत्र सिचः स्थानिवद्भावेऽपि नेट् । सिचोऽश्रूयमाणत्वात् । हलः किम् ? ऐधिषि । अपृक्तस्येति किम् ? ऐधिष्ट । अभूताम् ।

## ८२७. सिजभ्यस्तविदिभ्यश्च ३-४-१०९

'झेर्जुस्' इति सूत्रमनुवर्तते । 'नित्यं ङितः' इत्यतो ङित इति च । सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात् । अदुः । अकार्षुः । अददुः । विद ज्ञाने । अविदुः । सिचः प्रत्ययलक्षणेन 'अदुः' इत्यत्र यथा तथा भुवो झेर्जुसि प्राप्ते ।

## ८२८. आतः ३-४-११०

आतः सिज्लुगन्तादिति वक्तव्यम् । पूर्वेण सिद्धे नियमार्थमिदम् । सिज्लुकि आदन्तादेव झेर्जुस् स्यात् । अदुः । अपुः । भुव आदन्तत्वाभावान्न जुस् । 'इतश्च' । 'संयोगान्तस्यलोपः' । वुक् । अभूवन् ॥ अभूः । अभूतम् । अभूत ॥ अभूवम् । अभूव । अभूम ॥

## ८२९. माङि लुङ् ३-३-१७५

माङि प्रत्युज्यमाने धातोर्लुङ् स्यात् । सर्वलकारापवादः ।

## ८३०. स्मोत्तरे लङ् च ३-३-१७६

स्मोत्तरे माङि लङ् स्याल्लुङ् च । अयमप्यन्यलकारापवादः ।

## ८३१. न माङ्योगे ६-४-७४

माङ्योगे अडाटौ न स्तः । मा भवान् भूत् । मा स्म आलस्यं भवत् भद्रा । माङ्शब्दोऽयं निषेधार्थकः प्रायोऽस्य योगे लिङ्लोटोरर्थे लुङ् । क्वचिदन्यत्रापि । 'मा रुदन् माङ्गलिक्यः' इति भट्टिः (१-२६) न रुदितवत्य इत्यर्थः । कथं मास्तु ? माशब्दोऽयं निषेधार्थकोऽन्य एव न ङित् इति केचित् । असाधुरेवायं प्रयोग इत्यन्ये ।

## ८३२. लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३-३-१३९

'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषुलिङ्लोटौ' इत्यादि लिङ्निमित्तं लकारार्थ-प्रक्रियायां स्पष्टीभविष्यति। क्रियाया अनिष्पत्तिः क्रियातिपत्तिः। 'भविष्यति मर्यादावचनेऽवरस्मिन्' इत्यतो भविष्यतीति वर्तते। हेतुहेतुमद्भावादौ लिङ्निमित्ते गम्ये भविष्यत्यर्थः लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्।

## ८३३. भूते च ३-३-१४०

पूर्वस्मिन् विषये भूतेऽपि धातोर्लृङ् स्यात्। सुवृष्टिश्चेदभविष्यत् धान्यमवाप्स्य। यदि सम्यगपठिष्यः परीक्षामुदतरिष्यः। पूर्वस्मिन् वत्सरे आगामिनि वा। सुवृष्टिभवनं धान्यवाप्ते हेतुः। सम्यक्पठनं परीक्षोत्तरणे हेतुः। हेतुहेतुमद्भावस्य उभयनिष्ठत्वेन धातुद्वयादपि लृङ्। भुवो लृङ्। तिप्। इतश्चेतीकारलोपः। स्यतासीलृलुटोः इति स्यः। वलादिलक्षण इट्। अड्स्याडागमः। गुणावादेशौ। णत्वम्। अभविष्यत्। तसस्ताम्। अभविष्यताम्। 'इतश्च'। 'संयोगान्तस्य लोपः'। अभविष्यन्॥ अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम॥ इति दश लकाराः।

## ८३४. ते प्राग्धातोः १-४-८०

उपसर्गाः क्रियायोगे', 'गतिश्च'ति प्रकृतम्। ते गत्युपसर्गसंज्ञकाः धातोः प्रागेव प्रयोक्तव्याः। प्रभवति। संभवति।

## ८३५. आनि लोट् ८-४-१६

णत्वप्रकरणस्थमिदम्। 'रषाभ्यां णो नः' इत्यनुवर्तते। उपसर्गादसमासेऽपीत्यतः उपसर्गादिति च। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्य आनीत्यस्य नस्य णः स्यात्। असमानपदत्वार्थ आरम्भः। प्रभवाणि। प्रपिबाणि। निर्याणि। अट्कुप्वाङ्नुम्व्यवायेऽपीत्येव। इह न णत्वम्। निर्गच्छानि॥

**दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः (वा)**

दुःस्थितिः। अत्र उपसर्गात् सुनोतीति षत्वं न। दुरः किम्? निष्ठा। दुर्भवानि।

अन्तःशब्दस्य अङ् कि विधिणत्वेषूपसर्गत्वं वाच्यम् (वा)

अन्तर्धा । 'आतश्चोपसर्गे' इत्यङ् । टाप् । अन्तर्धिः । उपसर्गे घोः किः । अन्तर्भवाणि । अन्तर्याणि ॥ इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तं हरिणा—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ इति ॥

धातुपाठे-भू सत्तायामित्याद्यर्थनिर्देशश्चोपलक्षणम् । यागात् स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । समभिव्याहृतपदशक्त्युद्बोधकत्वं द्योतकत्वम् । अत एव प्रभवति । पराभवति । संभवति । अनुभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्थावगतिः । उक्तञ्च हरिणा—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥ इति ॥

एध वृद्धौ । अनुदात्तेत् । आत्मनेपदी । अकर्मकः । सेट् ।

वृद्धिक्षयभयजीवितमरणं लज्जासत्तास्थितिजागरणम् ।
शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥

एध धातोर्लट् । तङादेशः ।

### ८३६. टित आत्मनेपदानां टेरे ३-४-७९

टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । आत्मनेपदशब्देनात्र प्रकृतास्तङ एव गृह्यन्ते । तेन एधमानः इत्यादावेत्वं न । एधते ।

### ८३७. सार्वधातुकमपित् १-२-४

'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यतो ङिदित्यनुवर्तते । अपित्सार्वधातुकं ङिद्वत् स्यात् । वित्तः । विदन्ति । सार्वधातुकमिति किम् ? कर्ता । कर्तुम् । अपिदिति किम् ? वेत्ति । वेत्सि । वेद्मि ।

### ८३८. आतो ङितः ७-२-८१

'अतो येयः' इत्यतोऽत इति इय इति चानुवर्तते । अतः परस्य

हितामाकारस्य इय् स्यात् । 'लोपो व्योर्वलि' । एधेते । 'झोऽन्तः' । 'अतो गुणे' । एधन्ते ।

८३९. थासः से ३-४-८०

टितो लस्य थासः से स्यात् । एधसे । 'से' इत्यादेशे एकारोच्चारणं ज्ञापकं 'तङादेशानां टित आत्मने . . .' इत्यनेन टेरेत्वं नेति । तेन डारौरसां न । एधिता । एधितारौ । एधितारः । एधेथे । एधध्वे । एध ए इति स्थिते अतो गुणे इति पररूपम् । एधे । एधावहे । एधामहे ॥ लिटि विशेषः । तथाहि—

८४०. इजादेश्च गुरुमतोऽनृच्छः ३-१-३६

'कास्प्रत्ययादाममन्त्रे लिटि' इत्यतः आम्, लिटि इति चानुवर्तते । इजादिर्यो धातुः गुरुमान् ऋच्छत्यन्यस्तत आम् स्याल्लिटि । आमो मकारस्य नेत्वम् । आस्कासोराम्विधानाज्ज्ञापकात् । मकारस्येत्संज्ञकत्वेहि 'मिदचोऽन्त्यात् परः' इति आकारात्परमाकारान्तरं स्यात् । तयोः सवर्णदीर्घे आस् कास् इत्येव भवतीति तयोराम्विधानं व्यर्थं स्यात् । प्रत्ययाधिकारस्थोऽयमाम् प्रत्ययः परश्च । एध् आम् लिट् इति स्थिते ।

८४१. आमः २-४-८१

'मन्त्रे घसह्वर . . .' इत्यतो लेरिति 'ण्यक्षत्रियार्ष' इत्यतो लुगिति चानुवर्तते । आमः परस्य लेर्लुक् स्यात् । इति लिटो लुक् ।

८४२. कृञ्चानुप्रयुज्यते लिटि ३-१-४०

कृञिति प्रत्याहारः 'कृभ्वस्तियोगे . . .' इत्यतः 'कृञो द्वितीया . . .' इति ञकारेण । तस्मात् कृञ्शब्देन कृभ्वस्तयो गृह्यन्ते । लिटि परे यः कृञ् इत्यन्वयः । आमन्तल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । कृभ्वस्तीनां लिडन्त रूपाणि आमन्तादनुप्रयोक्तव्यानीति फलति । अव्यवहितपरः प्रयोगः अनुप्रयोगः । 'तं पातयां प्रथममास पपात पश्चात्' इत्यादयः प्रयोगाः प्रामादिका एव । इदानीं कृञो लिटि रूपं निष्पाद्यते । 'डुकृञ् करणे' इति धातोः ञित्त्वात् क्रियाफले परगामिनि परस्मैपदे प्राप्ते ।

## ८४३. आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य १-३-६३

अत्र कृञ् न प्रत्याहारः। आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानबहुव्रीहिणा आम्प्रकृतिराम्प्रत्ययशब्देनाभिधीयते। अनुप्रयुज्यत इत्यनुप्रयोगः। कर्मणि घञ्। 'अनुदात्तङित ...' इति सूत्रादात्मनेपदमित्यनुवर्तते। 'पूर्ववत्सनः' इति सूत्रात् पूर्ववदिति च। आम्प्रकृतेर्भवितुं योग्यं यदात्मनेपदं तदनुप्रयुज्यमानात् कृञोऽपि स्यात्। तच्च पूर्ववदेव न तु तद्विपरीतम्। तथाच आम्प्रकृतिर्धातुर्य-द्यात्मनेपदी तर्हि कृञोऽप्यात्मनेपदमेव। यदि परस्मैपदी तर्हि कृञः परस्मैपदमेव। यद्युभयपदी तर्हि कर्तृगामिनि क्रियाफले कृञोऽप्यात्मनेपदम्। परगामिनि तु परस्मैपदमिति विवेकः।

## ८४४. लिटस्तझयोरेशिरेच् ३-४-८१

लिडादेशयोस्तझयोः 'एश्' 'इरेच्' एतौ स्तः। शित्त्वात् सर्वादेशः कृ ए इति स्थिते।

## ८४५. असंयोगाल्लिट् कित् १-२-५

'सार्वधातुकमपित्' इत्यतोऽपिदित्यनुवर्तते। असंयोगात्परोऽपिल्लिट् कित् स्यात्। 'क्ङिति च' इति निषेधात् सार्वधातुकार्धधातुकयोरिति गुणो न। असंयोगादिति किम्? दध्वंसे। ध्वंसु गतौ। अनिदितामिति नलोपो मा भूत्। अपिदिति किम्। चकर्थ। गुणो न स्यात्। इति द्वित्वात् परत्वाद्यणि प्राप्ते।

## ८४६. द्विर्वचनेऽचि १-१-५९

द्विरुच्यते अनेन निमित्तेनेति द्विर्वचनम्। द्वित्वनिमित्तमिति यावत्। द्विर्वचन-मित्यावर्तते। आवृत्तस्य द्वित्वमित्यर्थः। 'स्थानिवदादेशः ...' इत्यतः स्थानिव-दिति, 'अचः परस्मिन् ...' इत्यतः अच इति, 'न पदान्त ...' इत्यतः नेति चानुवर्तते। द्वित्वनिमित्तेऽचि परे अच आदेशो न स्यात् द्वित्वे कर्तव्ये। इति यण् न। द्वित्वे कर्तव्ये इत्युक्तेः कृते द्वित्वे यणाद्यादेशो भवत्येव। कृ क्रे इति स्थिते।

## ८४७. उरत् ७-४-६६

ऋकारस्य षष्ठ्यन्तं 'उः' इति। अङ्गाधिकारात् प्रत्यये इति लभ्यते।

अभ्यासऋवर्णस्यात् स्यात् प्रत्यये परे। रंपरत्वम्। 'हलादिः शेषः'। प्रत्यये परे इति तु अकारस्य परनिमित्तकत्वसंपादनार्थम्। तेन 'वव्रश्च' इत्यत्र अभ्यासाकास्य 'अचः परस्मिन्' इति स्थानिवद्भावात् संप्रसारणत्वेन वस्य संप्रसारणं न। 'न संप्रसारणे संप्रसारणम्' इति निषेधात्। संप्रसारणन्तु 'लिट्यभ्या-सस्योभयेषाम्' इति प्राप्नोति।

### ८४८. कुहोश्चुः ७-४-६२

अभ्यासकवर्गहकारयोश्चवर्ग आदेशः स्यात्। चक्रे। अनुप्रयोगे च एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे।

### ८४९. एकाच उपदेशेऽनुदात्तात् ७-२-१०

मध्यमणिन्यायेन उपदेशे इत्युभयान्वयि। 'नेड्वशिकृति' इत्यतो नेडिति वर्तते। उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येट् न स्यात्। वलादेरार्धधातुकस्येत्यर्थाल्लब्धम्। तस्यैव उत्सर्गतः इड्विधानात्। उपदेशे एकाचः इति किम्? चकृषे। द्वित्वे कृते अनेकाच्त्वात् इण्निषेधो न स्यात्। उपदेशे अनुदात्तादिति किम्। कर्तुम्। तुमुनि 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वात्। 'हनो वध लिङि' इति विहितस्य वधेर्हन्त्युपदेशे एकाच्त्वेऽपि न निषेधः। आदेशोपदेशे अनेकाच्त्वात्। वधिषीष्ट। एधाञ्चकृषे। एधाञ्चक्राथे।

### ८५०. इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८-३-७८

'अपदान्तस्य मूर्धन्य इत्यधिकृतम्। इणन्तादङ्गात् परेषां षीध्वं लुङ्लिटां धस्य मूर्धन्यः स्यात्। घोषसंवारनादमहाप्राणसाम्यात् धस्य मूर्धन्यो ढः। एधाञ्चकृढ्वे। अत्रेदं बोध्यम्। षीध्वंलुङ्लिटामिति सर्वत्र आत्मनेपदे मध्यम-पुरुषबहुवचनस्य ग्रहणम्। तत्रैव धस्य संभवात्। षीध्वमित्याशीर्लिङो ग्रहणम्। विधिलिङि 'लिङः सलोपोऽनन्त्यस्ये'ति सस्य लोपात्। सीध्वमिति तु नोक्तम्। भुवीध्वमिति विधिलिङि एकदेशविकृतन्यायेन सीध्वमः सत्वात् ढो मा भूदिति। षीध्वम्। कृषीढ्वम्। लुङ्। अकृढ्वम्। इणन्तादिति किम्? पक्षीध्वम्। शक्षीध्वम्। अङ्गादिति किम्? वेविषीध्वम्। विप्लृ व्याप्तौ जुहोत्यादिः।

एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । अत्र 'आम्प्रत्ययवत् ...' इत्यात्मनेपदं स्यादिति न शंक्यम् । कृञ् धातोरेव सूत्रे ग्रहणात् । एधाम्बभूवतुः इत्यादि । अस्तेरनुप्रयोगे भूभावो न । अनुप्रयोगविधानसामर्थ्यात् । अस्तेर्लिटि द्वित्वम् । 'हलादिः शेषः' । अ अस् अ इति स्थिते ।

८५१. अत आदेः ७-४-७०

'व्यथो लिटि दीर्घः' इत्यतो दीर्घ इत्यनुवर्तते । अभ्यस्यादेरतोदीर्घः स्यात् । पररूपापवादः । आदिग्रहणं तदन्तविधिना अकारन्ताभ्यसस्येत्यर्थो मा भूदिति । पपाच । एधामास । एधामासतुरित्यादि । लुट् । एधिता तङादेशानां टेरेत्वं नेत्युक्तम् । एधितारौ । एधितारः । एधितासे । एधितासाथे । एधितास् ध्वे इति स्थिते ।

८५२. धि च ८-२-२५

सः स्यार्धधातुके इत्यतः सस्येति वर्तते । 'तासस्त्योरित्यतो लोप इति । अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते । तदादिविधिः । धादौ प्रत्यये परे सलोपः स्यात् । एधिताध्वे । प्रत्यये इति किम् ? मनो धावति ।

८५३. ह एति ७-४-५२

'सः स्यार्धधातुके' इत्यतः सस्येति 'तासस्त्योर्लोप' इत्यतस्तासस्त्योरिति चानुवर्तते । तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । अस्तेस्तु कर्मव्यतिहारे तङि व्यतिहे । एधितास्वहे । एधितास्महे ॥ एधिष्यते । एधिष्येते । एधिष्यन्ते ॥ एधिष्यसे । एधिष्येथे । एधिष्यध्वे ॥ एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥ लोटि 'टित आत्मनेपदानां टेरे' इति एत्वे एधते इति स्थिते ।

८५४. आमेतः ३-४-९०

'लोटो लङ्वत्' इत्यतो लोट इति वर्तते । लोट एकारस्य आम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥

## ८५५. सवाभ्यां वामौ ३-४-९१

'व' 'अम्' इति च्छेदः। सवाभ्यां परस्य लोडेतः क्रमात् 'व' 'अम्' एतौ स्तः। पूर्वसूत्रापवादः। एधस्व। एधेथाम्। एधध्वम्॥

## ८५६. एत ऐ ३-४-९३

'आडुत्तमस्य पिच्च' इत्यतः उत्तमस्येत्यनुवर्तते। लोडुत्तमस्य एत ऐ स्यात्। आमोऽपवादः। एधै। एधावहै। एधामहै॥

## ८५७. आडजादीनाम् ६-४-७२

अजादीनामाट् स्याल्लुङ्लङ्लृङ्षु। अटोऽपवादः। 'आटश्च' इति वृद्धिः। ऐधत। ऐधेताम्। ऐधन्त॥ ऐधथाः। ऐधेथाम्। ऐधध्वम्॥ ऐधे। ऐधावहि। ऐधामहि॥

## ८५८. लिङः सीयुट् ३-४-१०२

परस्मैपदे लिङो यासुड्विधानात् आत्मनेपदविषयमिदम्। लिङात्मनेपदस्य सीयुडागमः स्यात्। एध सीय् त इति स्थिते 'लिङः सलोपोनन्त्यस्ये'ति सलोपः। लोपो व्योर्वलीति यलोपः। एधेत। एधेयाताम्।

## ८५९. झस्य रन् ३-४-१०५

लिङो झस्य रन् स्यात्। 'न विभक्तौ तुस्माः' इति नकारस्य नेत्त्वम्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्।

## ८६०. इटोऽत् ३-४-१०६

लिङादेशस्येटोऽत् स्यात्। तकार उच्चारणार्थः इत्संज्ञया निवर्तते। उच्चारणमात्रफलके 'न विभक्तौ तुस्माः' इत्यस्याप्रवृत्तेः। एधेय। एधेवहि। एधेमहि॥ आशीर्लिङि आर्धधातुकत्वात् लिङः सलोपो न। इडागमः। 'सुट् तिथोः'। सीयुट्सुटोः प्रत्ययावयवत्वात् षत्वम्। एधिषीष्ट। अत्र प्रत्ययतकारस्य षयोगे ष्टुत्वम्। एधिषीयास्ताम्। एधिषीरन्॥ एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्॥ एधिषीय। एधिषीवहि। एधिषीमहि॥ लुङि च्लेः सिच्। इडागमः। षत्वम्। ष्टुत्वम्। ऐधिष्ट। ऐधिषाताम्।

## ८६१. आत्मनेपदेष्वनतः ७-१-५

'झोन्तः' इत्यतो झ इति वर्तते। अदभ्यस्तात् इत्यतः अत् इति च। न अत् अनत्। तस्मादिति विग्रहः। अनकारात् परस्यात्मनेपदावयवस्य झस्य 'अत्' इत्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिस् ध्वम् इति स्थिते 'धि च' इति सलोपः। 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्'। ऐधिढ्वम्। अत्रेडागमः सिचो विहितो न तु ध्वमः। तस्मात् इकारान्तस्य ध्वम् निरूपिताङ्गत्वमस्तीति बोध्यम्॥ यद्यप्येधधातुरनुदात्तेत् तथाप्यनुदात्तस्येतो लोपे परिशिष्टो धातुरुदात्त एव। तस्माद्वलादेरिट्। प्रसङ्गादनुदात्ता धातवः संगृह्यन्ते। एते अनिटः। अजन्तेषु तावत्—

ऊदॄदन्तैर्यौति रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रिभिः।
वृङ्वृञ्भ्याञ्च विनैकाचोऽजन्तेषु निहताः स्मृताः॥

अजन्तेषु धातुषु ऊदन्तैः ॠदन्तैश्च धातुभिर्विना यु रु क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि-एतैश्च धातुभिर्विना वृङ् वृञ्–आभ्याञ्च विना अन्ये एकाचः अजन्ताः धातवः निहताः अनुदात्ताः स्मृताः पाणिन्याचार्येणेत्यर्थः। तेन चि, जि, श्रु इत्यादयोऽनुदात्ता अनिटश्च। अथ हलन्तेषु—कान्तेषु शक्ऌ इत्येकः। चान्तेषु पच् मुच् रिच् वच् विच् सिच् इति षट्। अत्र डुपचष् इत्यस्यैव ग्रहणं प्रसिद्धत्वात्। छान्तेषु प्रच्छ् एकः। जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् रुज् रञ्ज् विज् स्वञ्ज् सञ्ज् सृज् इति पञ्चदश। अत्र सृजिर्दिवादिस्तुदादिश्च। दान्तेषु अद् क्षुद् खिद् छिद् तुद् नुद् पद् भिद् विद् शद् सद् स्विद् स्कन्द् हद् इति चतुर्दश। अत्र पदिर्दिवादिः। विदिर्दिवादी-रुधादिस्तुदादिश्च। स्विदिर्दिवादिः। धान्तेषु क्रुध् क्षुध् बुध् बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध् इत्येकादश। अत्र बुधिसिधी दिवादी। नान्तेषु मन् हन् इति द्वौ। अत्र प्रथमो दिवादिः। पान्तेषु आप् क्षिप् छुप् तप् तिप् तृप् दृप् लिप् लुप् वप् शप् स्वप् सृप् इति त्रयोदश। छुप् तुदादिः। अत्र तृपिदृपी दिवादी। शपिर्भ्वादिर्दिवादिश्च। भान्तेषु यभ् रभ् लभ् इति त्रयः।

मान्तेषु गम् नम् यम् रम् इति चत्वारः। शान्तेषु क्रुश् दंश् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृश् इति दश। षान्तेषु कृष् त्विष् तुष् द्विष् दुष् पुष् पिष् विष् शिष् शुष् श्लिष् इत्येकादश। पुषिर्दिवादिः। श्लिषिरपि दिवादिरेव। सान्तेषु घस् वस् इति द्वौ। वसिर्भ्वादिः हान्तेषु दह् दिह् दुह् नह् मिह् रुह् लिह् वह् इत्यष्टौ। अथान्ये आत्मनेपदिनः। स्पर्ध संघर्षे। संघर्षः पराभिभवेच्छा। धात्वर्थेन कर्मणः संग्रहादकर्मकः। चैत्रो मैत्रेण सह स्पर्धते। क्वचिदस्य अभिभवपूर्वकंाह्वानमर्थः। तदा सकर्मकः। कृष्णश्चाणूरं स्पर्धते। लिटि द्वित्वे स्पर्ध् स्पर्ध ए इति स्थिते।

### ८६२. शर्पूर्वाः खयः ७-४-६१

'हलादिः शेषः' इत्यतः शेष इत्यनुवर्तते। अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते। 'हलादिः शेषः' इत्यस्यापवादः। तेन अभ्यासे पकारः शिष्यते। अन्ये हलो लुप्यन्ते। पस्पर्धे। खयः किम्? शिश्रिये। स्पर्धिता। स्पर्धिष्यते। स्पर्धताम्। अस्पर्धत। स्पर्धेत। स्पर्धिषीष्ट। अस्पर्धिष्ट। अस्पर्धिष्यत॥ बाधृ लोडने। लोडनं पीडनम्। बाधते। बबाधे। बाधिता। बाधिष्यते। बाधताम्। अबाधत। बाधेत। बाधिषीष्ट। अबाधिष्ट। अबाधिष्यत। नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु।

### आशिषि नाथ इति वाच्यम् (वा)

अनुदात्तेत्वादात्मनेपदे सिद्धे नियमार्थं वार्तिकम्। अस्याशिष्येवात्मनेपदं स्यात्। आशीराशासनम्। नाथते। अन्यत्र नाथति। 'नाथन्तः सर्वकामानां नास्तिकाभिन्नचेतसः' (म. भा. वन. १८३-७६)। नाधते। दध धारणे। दधते। दधेते। दधन्ते।

### ८६३. अत एकहल्मध्ये अनादेशादेर्लिटि ६-४-१२०

एकौ असंयुक्तौ हलौ एकहलौ। तयोर्मध्ये एकहल्मध्ये। आदेशः आदिः यस्येति बहुव्रीहिः। ततो नञ्समासः कर्मधारयः। लिटीत्यावर्तते। एकं लिटित्येतत् समासैकदेशस्यादेशपदार्थेऽन्वेति। 'घ्वसोरेद्धौ . . .' इत्यतः

एदिति अभ्यासलोप इति ुवर्तते । 'गमहने . . .'त्यतः कितीत्यनुवर्तते । न तु ङितीति । लिडादेशानां ङित्वासंभवात् । अङ्गस्येत्यधिकृतम् । लिण्निमित्ता- देशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्या- सलोपश्च किति लिटि ।

## ८६४. थलि च सेटि ६-४-१२३

प्रागुक्तं स्यात् । थलः कित्वाभावात् पूर्वसूत्रेणाप्राप्तौ वचनम् । अत्र आदेशशब्देन स्थान्यपेक्षया विरूप एवादेशो गृह्यते । तेन स्थानिसरूपादेशे एत्वाभ्यासलोपौ स्त एव । दध् दध् ए इति स्थिते 'असंयोगाल्लिट् कित्' इति कित्वात् अभ्यासलोपः अकारस्यैत्वञ्च । देधे । देधाते । देधिरे । देधिषे ॥ अतः किम् ? दिदिवतुः । तपरः किम् ? ररासे । 'एक . . .' इत्यादि किम् ? ररक्षतुः । अनादेशादेः किम् ? जहसतुः । लिण्निमित्तेति किम् ? नेमिथ । सेहे । अत्र 'णोनः' 'धात्वादेः षः सः' इत्यादेशौ न लिण्निमित्तकौ । लिटीति किम् ? पापच्यते । तदभावे ङितीत्यप्यनुवर्तेत । किति लिटीति किम् ? पपाय । विरूपादेश एव गृह्यत इति किम् ? पेचतुः । 'अभ्यासे चर्च' इति पस्य पादेशः । देधे इत्यत्राप्येवमेव पर्जन्यवल्लक्षणप्रवृत्तेः । दधिता । दधिष्यते । दधताम् । अदधत । दधेत । दधिषीष्ट । अदधिष्यत ॥ **वदि** अभिवादनस्तुत्योः ।

## ८६५. इदितो नुम् धातोः ७-१-५८

इच्चासौ इत् । इदित् । इत्संज्ञक इकार इत्यर्थः । धातोरित्यस्य विशेषणम् । तदन्तविधिः । इत्संज्ञकेदन्तस्य धातोर्नुम् स्यात् । वन्दते । इदन्त- स्येत्युक्तेः चक्षिङ्, दृशिर् इत्यादौ न दोषः । तपरकरणात् मदी हर्षे इत्यादौ न नुम् । ववन्दे । वन्दिता । वन्दिष्यते । **स्पदि** किञ्चिच्चलने । स्पन्दते । पस्पन्दे । स्पन्दिता । **मुद** हर्षे । मोदते । मुमुदे । मोदिष्यते । **दद** दाने । ददते ।

## ८६६. न शसददवादिगुणानाम् ६-४-१२६

अत्र गुणशब्दो लक्षणया गुणशब्दविहित इत्यर्थे वर्तते । शसेर्ददेर्वकारादि-

धातूनां. गुणशब्देन विहितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ नस्तः। ददद। शसु हिंसायाम्। शशसुः। डु वम उदिरणे। ववमुः। दॄ विदारणे। ददरुः। गुणशब्देनविहितस्येति व्याख्यानात् पेचे इत्यादौ न दोषः। ददिता। ददिष्यते। ष्वद आस्वादने। आस्वादनमनुभवो रुचिश्च। अनुभवे सकर्मकः। रुचावकर्मकः।

## ८६७. धात्वादेः षः सः ६–१–६४

धातोरादेः षस्य सः स्यात्। स्वदते। चैत्रो मोदकं स्वदते। चैत्राय स्वदते मोदकम्। 'रुच्यार्थानां प्रीयमाणः' इति संप्रदानसंज्ञया चतुर्थी। अनुस्वदते। आदेशत्वेऽपि नात्र षत्वम्। सात्पदाद्योरिति निषेधात्। षोपदेश-फलन्तु असिष्वदत् इत्यत्र 'आदेशप्रत्यययोः' इति षत्वम्। एवमन्येषामपि षोपदेशः सस्यादेशत्वसंपादनेन षत्वार्थः। सस्वदे। स्वदिता। स्वदेत। स्वदिषीष्ट। षूद क्षरणे। क्षरणं प्रस्रवणम्। सूदते। सुसूदे। ह्राद अव्यक्ते शब्दे। ह्रादते। जह्रादे। ह्लादी सुखे च। चादव्यक्ते शब्दे। ह्लादते। आह्लादते। जह्लादे। स्वाद आस्वादने। स्वादते। सस्वादे। पर्द कुत्सिते शब्दे। गुदरवे इत्यर्थः। पर्दते। यती प्रयत्ने। यतते। येते। यतिता। यतिष्यते। यतताम्। अयतत। यतेत। यतिषीष्ट। अयतिष्ट। अयतिष्यत। कत्थ श्लाघायाम्। कत्थते। चकत्थे॥ अथ परस्मैपदिनः। अत सातत्यगमने। अतति। 'अत आदेः'। आत। आततुः। आतुः। आतिथ॥ लुङि आतिस् ईत् इति स्थिते।

## ८६८. इट ईटि ८–२–२८

'रात्सस्ये'त्यतः सस्येति 'संयोगान्तस्यलोपः' इत्यतो लोप इति चानुवर्तते। इटः परस्य सस्य लोपः स्यादीटि परे। इति सलोपः। तस्या-सिद्धत्वात् सवर्णदीर्घस्याप्राप्तौ।

### सिज्लोप एकादेशे सिद्धो वाच्यः (वा)

आतीत्। आतिष्टाम्। आतिषुः। आतीः। आडागमेन सर्वत्राकारः श्रूयते। तदभावे मा भवान् अतीत्।

एदिति अभ्यासलोप इति नुवर्तते । 'गमहने . . .'त्यतः क्कितीत्यनुवर्तते । न तु ङितीति । लिडादेशानां ङित्वासंभवात् । अङ्गस्येत्यधिकृतम् । लिण्निमित्ता-देशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्या-सलोपश्च किति लिटि ।

## ८६४. थलि च सेटि ६–४–१२३

प्रागुक्तं स्यात् । थलः कित्वाभावात् पूर्वसूत्रेणाप्राप्तौ वचनम् । अत्र आदेशशब्देन स्थान्यपेक्षया विरूप एवादेशो गृह्यते । तेन स्थानिसरूपादेशे एत्वाभ्यासलोपौ स्त एव । दध् दध् ए इति स्थिते 'असंयोगाल्लिट् कित्' इति कित्वात् अभ्यासलोपः अकारस्यैत्वञ्च । देधे । देधाते । देधिरे । देधिषे ॥ अतः किम् ? दिदिवतुः । तपरः किम् ? ररासे । 'एक . . .' इत्यादि किम् ? ररक्षतुः । अनादेशादेः किम् ? जहसतुः । लिण्निमित्तेति किम् ? नेमिथ । सेहे । अत्र 'णोनः' 'धात्वादेः षः सः' इत्यादेशौ न लिण्निमित्तकौ । लिटीति किम् ? पापच्यते । तदभावे ङितीत्यप्यनुवर्तेत । किति लिटीति किम् ? पपाय । विरूपादेश एव गृह्यत इति किम् ? पेचतुः । 'अभ्यासे चर्च' इति पस्य पादेशः । देधे इत्यत्राप्येवमेव पर्जन्यवल्लक्षणप्रवृत्तेः । दधिता । दधिष्यते । दधताम् । अदधत । दधेत । दधिषीष्ट । अदधिष्यत ॥ **वदि** अभिवादनस्तुत्योः ।

## ८६५. इदितो नुम् धातोः ७–१–५८

इच्चासौ इत् । इदित् । इत्संज्ञक इकार इत्यर्थः । धातोरित्यस्य विशेषणम् । तदन्तविधिः । इत्संज्ञकेदन्तस्य धातोर्नुम् स्यात् । वन्दते । इदन्त-स्येत्युक्तेः चक्षिङ्, दृशिर् इत्यादौ न दोषः । तपरकरणात् मदी हर्षे इत्यादौ न नुम् । ववन्दे । वन्दिता । वन्दिष्यते । **स्पदि** किञ्चिच्चलने । स्पन्दते । पस्पन्दे । स्पन्दिता । **मुद** हर्षे । मोदते । मुमुदे । मोदिष्यते । **दद** दाने । ददते ।

## ८६६. न शसददवादिगुणानाम् ६–४–१२६

अत्र गुणशब्दो लक्षणया गुणशब्दविहित इत्यर्थे वर्तते । शसेर्ददेर्वकारादि-

धातूनां. गुणशब्देन विहितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ नस्तः । ददद्दे । शसु हिंसायाम् । शशसुः । टु वम उदिरणे । ववमुः । दॄ विदारणे । ददरुः । गुणशब्देनविहितस्येति व्याख्यानात् पेचे इत्यादौ न दोषः । ददिता । ददिष्यते । ष्वद आस्वादने । आस्वादनमनुभवो रुचिश्च । अनुभवे सकर्मकः । रुचावकर्मकः ।

### ८६७. धात्वादेः षः सः ६-१-६४

धातोरादेः षस्य सः स्यात् । स्वदते । चैत्रो मोदकं स्वदते । चैत्राय स्वदते मोदकम् । 'रुच्यार्थानां प्रीयमाणः' इति संप्रदानसंज्ञया चतुर्थी । अनुस्वदते । आदेशत्वेऽपि नात्र षत्वम् । सात्पदाद्योरिति निषेधात् । षोपदेश-फलन्तु असिष्वदत् इत्यत्र 'आदेशप्रत्यययोः' इति षत्वम् । एवमन्येषामपि षोपदेशः सस्यादेशत्वसंपादनेन षत्वार्थः । सस्वदे । स्वदिता । स्वदेत । स्वदिषीष्ट । षूद क्षरणे । क्षरणं प्रस्रवणम् । सूदते । सुषूदे । ह्राद अव्यक्ते शब्दे । ह्रादते । जह्रादे । ह्लादी सुखे च । चादव्यक्ते शब्दे । ह्लादते । आह्लादते । जह्लादे । स्वाद आस्वादने । स्वादते । सस्वादे । पर्द कुत्सिते शब्दे । गुदरवे इत्यर्थः । पर्दते । यती प्रयत्ने । यतते । येते । यतिता । यतिष्यते । यतताम् । अयतत । यतेत । यतिषीष्ट । अयतिष्ट । अयतिष्यत । कत्थ श्लाघायाम् । कत्थते । चकत्थे ॥ अथ परस्मैपदिनः । अत सातत्यगमने । अतति । 'अत आदेः' । आत । आततुः । आतुः । आतिथ ॥ लुङि आतिस् ईत् इति स्थिते ।

### ८६८. इट ईटि ८-२-२८

'रात्सस्ये'त्यतः सस्येति 'संयोगान्तस्यलोपः' इत्यतो लोप इति चानुवर्तते । इटः परस्य सस्य लोपः स्यादीटि परे । इति सलोपः । तस्या-सिद्धत्वात् सवर्णदीर्घस्याप्राप्तौ ।

### सिज्लोप एकादेशे सिद्धो वाच्यः (वा)

आतीत् । आतिष्टाम् । आतिषुः । आतीः । आडागमेन सर्वत्राकारः श्रूयते । तदभावे मा भवान् अतीत् ।

## ८६९. वदव्रजहलन्तस्याचः ७-२-३

'सिचिवृद्धिः परस्मैपदेषु' इत्यनुवर्तते। वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदेषु। अवादीत्। अव्राजीत्। अपाक्षीत्। हलन्तत्वादेव सिद्धे वदव्रजग्रहणं 'अतो हलादेर्लघोः' इति वृद्धिविकल्पबाधनार्थम्। अनेन 'मा भवान् अतीत्' इत्यत्र वृद्धौ प्राप्तायाम्।

## ८७०. नेटि ७-२-४

इडादौ सिचि प्रागुक्तं न स्यात्। इति वृद्धिनिषेधः। **चिती** संज्ञाने। चेतति। चिचेत। सिचि वृद्धेर्नेटीति निषेधः। अचेतीत्। अचेतिष्टाम्। अचेतिषुः। **च्युतिर्** आसेचने। आसेचनमार्द्रीकरणम्। च्योतति। 'इदितो नुम् धातोः' इति तु न। इदिदन्तत्वाभावात्। चुच्योत। अच्योतत्। लुङि च्लेः सिचि प्राप्ते।

## ८७१. इरितो वा ३-१-५७

'अस्यतिवक्ति...' इत्यतोऽङिति, 'पुषादिद्युतादि...' इत्यतः परस्मैपदेष्विति चानुवर्तते। इरितो धातोरङ् वा स्यात् परस्मैपदे परे। अङि सति ङित्वान्न गुणः। अच्युतत्। अच्युतताम्। अच्युतन्। सिचि तु अच्योतीत्। अच्योतिष्टाम्। अच्योतिषुः। परस्मैपदे इत्युक्तेरिरितामात्मनेपदे च्लेरङ् न। **रुधिर्** आवरणे। उभयपदी। अरुद्ध। अरुत्साताम्। परस्मैपदे तु अङि अरुधत्। अङभावे सिचि अरौत्सीत्॥ च्योतिता। च्योतिष्यति। **श्चुतिर्** क्षरणे। श्च्योतति। यकाररहितोऽप्ययम्। श्चोतति। चुश्चोत। अश्चोतत् इति लङि। अश्चुतत्-अश्चोतीत् इति लुङि। **मन्थ** विलोडने। विलोडनं क्षोभणम्। मन्थति। मथ्नातीति क्र्यादौ। ममन्थ। ममन्थिथ। मन्थिष्यति। मन्थेत्। आशीर्लिङि 'किदाशिषि' इति यासुटः कित्वात् 'अनिदितां...' इति नलोपः। मथ्यात्। **षिधु** गत्याम्। सेधति। आदेशसकारत्वात् षत्वम्। सिषेध। असेधत्। असेधीत्। सेधिष्यति। धातोरुगित्वन्तु 'उदितो वा' इति क्त्वाप्रत्ययस्येड्विकल्पार्थम्। निषेधति

प्रतिषेधतीत्यत्र ' सात्पदाद्योः ' इति षत्वनिषेधे प्राप्ते ।

## ८७२. उपसर्गात् सुनोति सुवति स्यति स्तौति स्तोभति स्थासेनयसेध सिचसञ्जस्वञ्जाम् ८-३-६५

उपसर्गशब्दः उपसर्गस्थे लाक्षणिकः । ' इण्कोः ' इत्यधिकारः । कोरिति न संबध्यते असंभवात् । उपसर्गस्थादिण इत्यर्थः । ' सहेः साडः सः ' इत्यतः सस्येति वर्तते । अपदान्तस्य मूर्धन्य इत्यतो मूर्धन्य इति च । सस्य मूर्धन्यः षएव आन्तरतम्यात् । उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् । इति षत्वम् । एवमभिषुणोतीत्यादीनि षत्वोदाहरणानि । प्रसङ्गात् षत्वविधायकानि सूत्रान्तराणि व्याख्यायन्ते ।

## ८७३. सदिरप्रतेः ८-३-६६

प्रतिभिन्नादुपसर्गात् सस्य षः स्यात् । षद्लृ विशरणगत्यवसादनेषु । निषीदति । विषीदति । प्रतेस्तु प्रतिसीदति ।

## ८७४. स्तन्भेः ८-३-६७

अयं गत्यर्थकः सौत्रो धातुः । अप्रतेरिति नानुवर्तते । उपसर्गस्थान्निमित्तात् स्तन्भेः सस्य षः स्यात् । विष्टम्भः । ' बाहुप्रतिष्टम्भविवृद्धमन्युः ' (रघु. २-३२)

## ८७५. अवाच्चालम्बनाविदूर्ययोः ८-३-६८

इणः परत्वाभावादपूर्वविधिरयम् । अवात् स्तन्भेरेतयोरर्थयोः सस्य षः स्यात् । यष्टिमवष्टभ्य तिष्ठति । आविदूर्यं सामीप्यम् । अवष्टब्धा गौः । निरुद्धा सती समीपे वर्तत इत्यर्थः ।

## ८७६. वेश्च स्वनो भोजने ८-३-६९

व्यवाभ्यां सस्य षः स्याद्भोजने । स्वन शब्दे भ्वादिः । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । षत्वे कृते ' अट्कुप्वाङ् . . . ' इति नस्य णत्वम् ।

८७७. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ८-३-७०

परिनिविभ्यः परेषामेषां सस्य षः स्यात् । परिषेवते । निषेवते । षिञ् बन्धने क्तः । विषितः । अस्यैव 'एरच्' । सयः । विषयः । निषीव्यति । परिषहते । सुडागमः । परिष्करोति । विष्टौति । परिष्वजते ।

८७८. प्राक्सितादड्व्यवायेऽपि ८-३-६३

'परिनिविभ्यः सेवसित...' इत्यत्र यः सितशब्दः तस्मात् प्राक् ये सुनोत्यादयस्तेषामडागमव्यवधानेऽपि षत्वं स्यात् । अकारेण व्यवहितत्वादप्राप्तौ वचनम् । अभ्यषुणोत् । न्यषेधत् । प्रत्यषेधत् । न्यषिञ्चत् । व्यषीदत् । अवाष्वणत् । न्यषेवत ।

८७९. स्थादिष्वभ्यासेन चाभ्यासस्य ८-३-६४

प्राक्सितात् स्थादिषु अभ्यासेन व्यवधानेऽपि षत्वं स्यात् अभ्यासस्य सकारस्य च । अभ्यासग्रहणं नियमार्थम् । अभ्यासस्य षत्वमेषामेव न तु सुनोत्यादीनाम् । निषिषेध । प्रतिषिषेध । परिषिषेच । प्रतितस्थौ । विषसाद । परिषस्वजे इत्यादौ धातुसकारस्य न षत्वम् । इणः परत्वाभावात् । अभ्यासस्य षत्वमेषामेवेति किम् ? अभिसुषाव ।

८८०. सिवादीनां वाड्व्यवायेऽपि ८-३-७१

परिनिविभ्यः परेषां सिवुसहसुट्स्तुस्वञ्जां सस्य षो वा स्यादड्व्यवायेऽपि । न्यषीवत् । न्यसीवत् । पर्यषहत । पर्यसहत । पर्यष्करोत् । पर्यस्करोत् । व्यष्टौत् । व्यस्तौत् । पर्यष्वजत । पर्यस्वजत । उपसर्गात् सुनोतीति सूत्रे गृहीतयोरपि स्तौतिस्वञ्जोरड्व्यवाये षत्वविकल्पार्थं 'परिनिविभ्य...' इति सूत्रे पुनरुपादानम् । परिनिविभ्योऽन्यत्र तु प्राकसितादित्यनेननित्यं षत्वम् । अभ्यष्टौत् । प्रत्यष्वजत । खादृ भक्षणे । ऋकार इत् 'नाग्लोपिशास्वृदिताम्' इत्येतदर्थम् । खादति । चखाद । चखादतुः । खादिष्यति । गद व्यक्तायां वाचि । गदति । लिटिणलि ।

### ८८१. अत उपधायाः ७-२-११६

'मृजेर्वृद्धि' रित्यतो वृद्धिरिति 'अचोञ्ञ्णिति' इत्यतो ञ्णितीति च वर्तते। उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। जगाद। जगदतुः। जगदुः। जगदिथ।

### ८८२. णलुत्तमो वा ७-१-९१

'गोतो णित्' इत्यतो णिदित्यनुवर्तते। उत्तमो णल् वा णित् स्यात्। जगाद-जगद। जगदिव। जगदिम। गदिता। गदिष्यति। अगदत्। गदेत्। गद्यात्। सिचि वदव्रजेति प्राप्ताया वृद्धेः नेटीति निषेधे प्राप्ते।

### ८८३. अतो हलादेर्लघोः ७-२-७

हलादेर्धातोर्लघोरकारस्य इडादौ परस्मैपदे परे सिचिवृद्धिर्वा स्यात्। अत्र 'ऊर्णोतेर्विभाषा' इत्यतो विभाषेत्यनुवृत्तम्। अगादीत्-अगदीत्। अगादिष्टाम्-अगदिष्टाम्। लघोरिति किम्? अरक्षीत्।

### ८८४. नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्साति वपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ८-४-१७

'उपसर्गादसमासेऽपी'त्यतः उपसर्गादिति वर्तते। उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वं स्यात् गदादिषु परेषु। प्रणिगदति। प्रणिजगाद। प्रणिपतति। प्रणिधानम्। प्रणिघातः। रद विलेखने। विलेखनं भेदनम्। रराद। रेदतुः। णद अव्यक्ते शब्दे।

### ८८५. णोनः ६-१-६५

धात्वादेर्णस्य नः स्यात्। नदति। ननाद। नेदतुः। नेदुः।

### ८८६. उपसर्गादसमासेऽपि णोपदेशस्य ८-४-१४

उपसर्गस्थान्निमित्तात् परस्य णोपदेशस्य धातोर्नस्य णः स्यात् समासेऽसमासेऽपि। णोपदेशास्त्वनर्द्नाटिनाथ्नाध् नन्दनक्कनॄनृतः। नर्दादिभ्योऽष्टभ्योऽन्ये नकारादित्वेन दृश्यमाना धातवः णोपदेशाः प्रत्येतव्या इत्यर्थः। प्रणदति। प्रणादः। प्रणमति। प्रणामः। नेर्गदेतिणत्वम्। प्रणिनदति।

नर्द शब्दे । ननर्द । णोपदेशत्वाभावान्न णत्वम् । प्रनर्दति । कर्द कुत्सिते शब्दे । कुत्सिते कौक्षे । चकर्द । णिदि कुत्सायाम् । इदित्वान्नुम् । निन्दति । निनिन्द । निन्दिता । निन्दिष्यति । निन्दतु । अनिन्दत् । निन्देत् । इदित्वादुपधालोपो न भवति । निन्द्यात् । अनिन्दीत् । अनिन्दिष्टाम् । अनिन्दिष्यत् । प्रणिन्दति । प्रणिनिन्द । टु नदि समृद्धौ ।

## ८८७. आदिर्ञिटुडवः १-३-५

'उपदेशेऽजनुनासिक इत्' इत्यतः उपदेशे इति इत् इति चानुवर्तते। उपदेशे आदिभूताः एते इतः स्युः । इतीत्संज्ञया टुशब्दस्य लोपः। 'ट्वितोऽथुच्' इत्येतदर्थं ट्वित्करणम् । नन्दति । ननन्द । इदित्वान्नलोपो न। नन्द्यात् । नन्द्यास्तां । नन्द्यासुः । क्रदि आह्वाने रोदने च ॥ क्रन्दति। चक्रन्द ॥ अथात्मनेपदिनः । लोकृ दर्शने । लोकते । आलोकते। लुलोके । लुलोकाते । लोकिष्यते । लोकेत । लोकिषीष्ट । शकि शङ्कायाम् । शङ्कते । शशङ्के । अशङ्कत । अशङ्किष्ट । टीकृ गतौ। टीकते । टिटीके । लघि गतौ भोजननिवृत्तौ च । लङ्घते । ललङ्घे। समुद्रं लङ्घते । एकादश्यां लङ्घते । द्राघृ आयामे आयामो दैर्घ्यम् । ल्रा द्राघते । दद्राघे । श्लाघृ कत्थने । श्लाघते । शश्लाघे लोचृ दर्शने । आलोचते ॥ अथ परस्मैपदिनः । बुक्क भषणे । भषणं श्वरवः । बुक्कति । बुबुक्क । बुक्किष्यति । अबुक्कत् । अबुक्कीत् । कख हसने । कखति । घघ हसने । घघति । जघाघ ॥ अथात्मनेपदिनः। भृजी भर्जने । ईदित्वं 'श्वीदितो निष्ठायाम्' इतीण्निषेधार्थम् । भृष्टायवाः। भर्जते चणकान् । बभृजे । अभर्जत । अभर्जिष्ट । एजृ भ्राजृ दीप्तौ। एजते । प्रेजते । अत्र 'एङि पररूपम्' । एजाञ्चक्रे । एजिष्यते। भ्राजते । बभ्राजे । अभ्राजिष्ट ॥ अथ परस्मैपदिनः । शुच शोके। शोचति । शुशोच । शुशुचतुः । अशोचत् । अशोचीत् । शोचेत्। शुच्यात् । लुञ्च अपनयने । लुञ्चति केशान् । लुलुञ्च । लुञ्चेत्।

अनिदितामिति नलोपः । लुच्यात् । अञ्चु गतिपूजनयोः । अञ्चति । अञ्चेत् । आशिषि गत्यर्थे अच्यात् । पूजायान्तु 'नाञ्चेः पूजायाम्' इति नलोपनिषेधः । अञ्च्यात् । षस्ज गतौ । सस्य श्चुत्वेन शः । जश्त्वेन जः । सज्जति । ससज्ज । 'यदभिप्रायेषु सज्जन्ते' इति भाष्यप्रयोगादय-मात्मनेपद्यपि । सज्जते । ससज्जे । गुजि अव्यक्ते शब्दे । गुञ्जति । जुगुञ्ज । अगुञ्जत् । अगुञ्जीत् । गुञ्जेत् । गुञ्ज्यात् । अर्च पूजायाम् । अर्चति । लिटि 'अत आदेः' इत्यभ्यासदीर्घे आ अर्च् अ इति स्थिते ।

## ८८८. तस्मान्नुड्द्विहलः ७-४-७१

तच्छब्देन 'अत आदेः' इत्यनेन कृतदीर्घः परामृश्यते । द्विहलो धातोदीर्घीभूतादभ्यासाकारात् परस्य नुट् स्यात् । आनर्च । आनर्चतुः । अर्चिष्यति । आर्चत् । आर्चीत् । आर्चिष्यत् । म्लेच्छ अव्यक्तेऽशब्दे । अशब्दे इति च्छेदः । अपशब्दे चेत्यर्थः । म्लेच्छति । मिम्लेच्छ । मिम्लेच्छतुः । वाछि इच्छायाम् । वाञ्छति । ववाञ्छ । ववाञ्छतुः । मुर्छा मोहसमुच्छ्राययोः ।

## ८८९. उपधायाञ्च ८-२-७८

'सिपि धातो . . .' इत्यतो धातोरिति, 'वोरुपधाया . . .' इत्यतो वोरिक इति; 'हलि च' त्यतो हलीति चानुवर्तते । उपधयोरित्यर्थे उपधाया-मित्यार्षम् । हलि परे धातोरुपधाभूतौ यौ रेफवकारौ तयोः परत इको दीर्घः स्यात् । इत्युकारस्य दीर्घः । आकारानुबन्धः 'आदितश्च' इति निष्ठाया इण्निषेधार्थः । मूर्तः । मूर्छति । श्वा मूर्छति । मुह्यतीत्यर्थः । 'मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु' (अभि. शा. ५-१८) समुच्छ्रिता इत्यर्थः । मुमूर्छ । मूर्छिष्यति । कूज अव्यक्ते शब्दे । कूजति पिकः । चुकूज । अर्ज अर्जने । अर्जति धनम् । 'तस्मान्नुड्द्विहलः' । आनर्ज । गर्ज शब्दे । गर्जति सिंहः । जगर्ज । तर्ज भर्त्सने । तर्जति । ततर्ज । ततर्जतुः । खज मन्थे । खजति दधि । चखाज । चखाजतुः । चखाज-चखज । 'अतो हलादेर्लघोः' ।

अखाजीत् । अखजीत् । खजि गतिवैकल्ये । खञ्जति । चखञ्ज । टु ओस्फूर्जा वज्रनिर्घोषे । 'ट्वितोऽथुच्' । स्फूर्जथुः । 'ओदितश्च' इति निष्ठानत्वम् । 'आदितश्च' इतीण्निषेधः । स्फूर्णः । स्फूर्णवान् । स्फूर्जति । 'स्फूर्जत्येव स एष संप्रति मम न्यक्कारभिन्नस्थितेः' (महावीर चरिते ३-४०) पुस्फूर्ज । क्षि क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । नश्यति नाशयतीति वा । चिक्षाय । इयङ् । चिक्षियतुः । चिक्षियुः । थलि 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे प्राप्ते भारद्वाजनियमात् वेट् । चिक्षियिथ । चिक्षेथ । तथाहि ।

## ८९०. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७-२-१३

'नेड्वशि कृति' इत्यतो नेडित्यनुवर्तते । एभ्यो लिट इण् न स्यात् । 'एकाच उपदेशेऽनुदात्तात्' इत्यनेन 'श्र्युकः किति' इत्यनेन चेण्निषेधे सिद्धे सूत्रमिदं नियमार्थम् । यावानिडागमनिषेधः स लिटि भवति चेत् क्रादिभ्य एव नान्येभ्य इति । तथाच क्राद्यन्येभ्यो लिटि इडागम इति प्राप्ते, तत्र विशेषः ।

## ८९१. अचस्तास्वत्थल्यनिटो नित्यम् ७-२-६१

'उपदेशेऽत्वतः' इत्युत्तरसूत्रादुपदेश इत्यपकृष्यते । अधातोःथलभावाद् धातोरिति लभ्यते । अच इति धातोर्विशेषणम् । एवञ्च 'उपदेशे अजन्तो यो धातुः' इत्यंशो लब्धः । 'तासि च क्लृपः' इत्यतो तासीति 'गमेरिट्...' इत्यत इडिति, 'न वृद्भ्यः...' इत्यतो नेति चानुवर्तते । तासि नित्यमनिट् इत्यन्वयः । तासीव तास्वत् । सप्तम्यन्ताद्वतिः । उपदेशेऽजन्तो यो धातुः तासौ नित्यानिट् ततः परस्य थल इण् न स्यात् तास्वत् । यथा तासि नेट् तथा थल्यपीत्यर्थः । क्षिधातुर्लुटि तासिनित्यानिट् । तस्मात् थलो नेट् । चिक्षेथ । क्रादिनियमेन सर्वत्र लिटि इडागमे प्राप्ते अनेन थलि तन्निषेधः । अजन्तात् किम् ? बिभेदिथ । उपदेश इति किम् ? जहर्थ । इह गुणे रपरत्वे अजन्तत्वाभावादिण्निषेधो न स्यात् । नित्यग्रहणं किम् ? दुधविथ । 'स्वरतिसूतिसूयतिधूञूदितो वा' इति तासौ वेडयम् । तासौ किम् ? लुलविथ । 'श्र्युकः किति'

इति निष्ठायां नित्यानिट् । लूत्वा । थलः किम् ? पपिव । पपिम ।

### ८९२. उपदेशेऽत्वतः ७-२-६२

उपदेशे ह्रस्वाकारवतस्तासौ नित्यानिटो धातोः परस्य थल इण् न स्यात् । शशकथ । पपक्थ । अत्र क्रादिनियमप्राप्त इण् न भवति । उपदेशे किम् ? कृष विलेखने, चकर्षिथ । ह्रस्वाकार इति किम् ? राध संसिद्धौ । रराधिथ ।

### ८९३. ऋतो भारद्वाजस्य ७-२-६३

तासौ नित्यमनिट इति थलीति नेडिति चानुवर्तते । अचस्तास्वदित्येव सिद्धे नियमार्थमिदम् । तासौ नित्यानिटऋदन्तादेव परस्य थलो नेड् भारद्वाजस्य मतेन । तेन ऋदन्तभिन्नात् परस्य थल इट् स्यादेव भारद्वाजस्य मतेन । मतान्तरे तु अचस्तास्वदिति उपदशेत्वतः इति च थलो नेडिति विकल्पः फलति । तद्यथा पपिथ । पपाथ । शेकिथ । शशकथ । एवञ्च चिक्षयिथ चिक्षेथेति रूपद्वयम् । अयमत्र संग्रहः ।

अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

अयञ्च निर्गलितोऽर्थः—

१. क्राद्यष्टभ्यः परस्य लिटः सर्वत्र नेट् । चकर्थ । चकृव ।

२. क्रादिभिन्नेभ्यः सर्वेभ्योऽपि परस्य लिटो नित्यमिट् । पपिव । पेचिव । पेचिम । थलि तु ।

३. तासौ नित्यानिटो धातोः ऋदन्तात् परस्य थलो नित्यं नेट् । ससर्थ ।

४. उपदेशेऽजन्तः (ऋदन्तभिन्नः) ह्रस्वाकारवान् वा यो धातुः तासौ नित्यानिट् तस्मात् परस्य थलो वेट् इति । पपाथ । पपिथ । शशकथ । शेकिथ । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयेत् । आर्धधातुकेलिङि ।

### ८९४. अकृत्सार्वधातुकयोर्दीर्घः ७-४-२५

'अयङ् यि क्ङिति' इत्यतो यि इति वर्तते । दीर्घश्रुत्या अच इत्युपस्थितमङ्गविशेषणम् । तदन्तविधिः । अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये

परे, न तु कृत्सार्वधातुकयोः । क्षीयात् । अकृत्सार्वधातुकयोः किम् ? प्रकृत्य । तुकं बाधित्वा परत्वात् दीर्घः स्यात् । चिनुयात् ।

## ८९५. सिचि वृद्धिः परस्मैपदेषु ७–२–१

वृद्धिश्रुत्या इक इत्युपतिष्ठते । इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदपरे सिचि । अक्षैषीत् । व्रज गतौ । व्रजति । वव्राज । उत्तमे णलि वव्राज । वव्रज । व्रजिष्यति । वदव्रजेति वृद्धिः । अव्राजीत् ॥ अथात्मनेपदिनः । वेष्ट वेष्टने । वेष्टते । विवेष्टे । अवेष्टत । अवेष्टिष्ट । चेष्ट चेष्टायाम् । चेष्टते । चिचेष्टे । अचेष्टिष्ट । स्फुट विकसने । स्फोटते । पुस्फुटे । कठि शोके । शोक इहाध्यानम् । प्रायेणोत्पूर्वः । उत्कण्ठते । 'उत्कण्ठमानो भरतो गुरूणाम्' इति भट्टिः (३–२५) । भडि परिभाषणे । परिहासः सनिन्दोपालम्भश्च परिभाषणम् । भण्डते । बभण्डे । चडि कोपे । चण्डते । अथ परस्मैपदिनः । अट गतौ । अटति । आट । अटिष्यति । रट परिभाषणे । रटति । 'काक त्वं रट कस्तवापराधः' । नट नृत्तौ । नटति । ननाट । लुटि स्तेये । लुण्टति । लुलुण्ट । स्फुटिर् विशरणे । स्फोटति । अस्फोटत् । इरित्वादङ् वा । अस्फुटत् । अस्फोटीत् । अस्फोटिष्यत् । पठ व्यक्तायां वाचि । पठति । पपाठ । पेठतुः । पेठिथ । 'अतो हलादेर्लघो'रिति वा वृद्धिः । अपाठीत् । अपठीत् । अपठिष्यत् । क्रीडृ विहारे । क्रीडति । चिक्रीड । क्रीडिष्यति । लड विलासे । लडति । लडयोर्डलयोश्चैकत्वस्मरणात् ललतीत्यपि ॥ अथात्मनेपदिनः । टुवेपृ कम्पने । वेपते । विवेपे । वेपिष्यते । त्रपूष् लज्जायाम् । षित्वं षिद्भिदादिभ्योऽङ् इत्येतदर्थम् । त्रपते ।

## ८९६. तॄफलभजत्रपश्च ६–४–१२२

एषामत एकारोऽभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । एकहल्मध्यस्थत्वाभावात् आदेशादित्वात् गुणशब्दभावितत्वाच्च यथायथमप्राप्तौ वचनम् । त्रेपे । त्रेपाते । त्रेपिषे ।

### ८९७. स्वरति सूति सूयति धूञूदितो वा ७–२–४४

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात्। त्रपिता। त्रप्ता। त्रपिष्यते। त्रप्स्यते। त्रपताम्। अत्रपत। त्रेपे। त्रपिषीष्ट। त्रप्सीष्ट। अत्रपिष्ट। इडभावे—

### ८९८. झलो झलि ८–२–२६

'संयोगान्तस्य लोपः' इत्यतो लोप इति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते। झलः परस्य सस्य लोपः स्यात् झलि। अत्रप्त। अत्रप्साताम्। अत्रप्सत। अत्रप्थाः। अत्रप्साथाम्। अत्रब्ध्वम्। अत्रप्सि। अत्रप्स्वहि। अत्रप्स्महि॥ अत्रपिष्यत। अत्रप्स्यत। कपि चलने। कम्पते। चकम्पे। कम्पिष्यते। लबि अवस्रंसने। लम्बते। 'चन्द्रबिम्बं ललम्बे'। लम्बिता। ष्टभि प्रतिबन्धे। स्तम्भते। उत्तम्भते। उदः स्थास्तम्भोरिति पूर्वसवर्णः। स्तन्भेरिति षत्वन्तु सौत्रस्यैव। प्रतिस्तम्भते। तस्तम्भे। जृभि गात्रविनामे। जृम्भते। जजृम्भे। जृम्भिष्यते। गल्भ धार्ष्ट्ये। प्रगल्भते। प्रजगल्भे। अथ परस्मैपदिनः। गुपू रक्षणे।

### ८९९. गुपूधूपविच्छिपणिपनिभ्य आयः ३–१–२८

एभ्यः आयप्रत्ययः स्यात् स्वार्थे। 'धातोरेकाच...' इत्यतो धातोरित्यनुवृत्तेरनार्धधातुकः। पुगन्तेति गुणः। गोपाय इति स्थिते।

### ९००. सनाद्यन्ता धातवः ३–१–३२

'गुप्तिज्किद्भ्यः सन्' इत्यारभ्य 'कमेर्णिङ्' इत्यन्तैर्विहिताः प्रत्ययाः सनादयः। सनाद्यन्ता धातुसंज्ञाः स्युः। प्रत्ययान्तानां भ्वादिषु पाठाभावेन धातुसंज्ञाया अप्राप्तौ वचनम्। सन्, क्यच्, काम्यच्, क्यङ्, क्यष्, आचारे विहितः क्विप्, णिच्, यङ्, यक्, आय, ईयङ्, णिङ्—इति द्वादश सनादयः। सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारे क्विप् णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥ धातुत्वाल्लडादयः। 'कर्तरि शप्'। 'अतो गुणे'। गोपायति।

९०१. **आयादय आर्धधातुके वा** ३-१-३१

आय ईयङ् णिङ् इत्येते त्रयः आर्धधातुकविवक्षायां वा स्युः ।

९०२. **कास्प्रत्ययादाममन्त्रे लिटि** ३-१-३५

कास् धातोः प्रत्ययान्तधातुभ्यश्चाम् स्याल्लिटि न तु मन्त्रे ।

**कास्ग्रहणेऽनेकाच उपसंख्यानम्** (वा)

अनेकाचोऽप्याम् भवतीति वक्तव्यमित्यर्थः । तेन 'चकासृ दीप्तौ, जागृ निद्राक्षये' इत्यादिभ्योऽपि लिटि आम् भवति ।

९०३. **आर्धधातुके** ६-४-४६

इत्यधिकृत्य ।

९०४. **अतो लोपः** ६-४-४८

अकारस्य लोपः स्यादार्धधातुके परे । आमन्तात् कृञोऽनुप्रयोगः । गोपायाञ्चकार । अल्लोपफलन्तु गोपायितेत्यादौ स्पष्टम् । गोपायांबभूव । गोपायामास । आयप्रत्ययाभावे । जुगोप । 'जुगोपात्मानमत्रस्तः' (रघु. १-२१) । जुगुपतुः । क्रादिनियमान्नित्यमिट् । जुगोपिथ । जुगुपिव । जुगुपिम । ऊदित्वायप्रत्यये गोपायिता । तदभावे इटि गोपिता । इटोऽप्यभावे गोप्ता । एवं गोपायिष्यति । गोपिष्यति । गोप्स्यति । सार्वधातुके त्वायो नित्यः । गोपायतु । अगोपायत् । गोपायेत् । लुङि अगोपायीत् । अगोपीत् । अगौप्सीत् ॥ आशीर्लिङि गोपाय्यात् । गुप्यात् ॥ अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् ॥ जप जल्प व्यक्तायां वाचि । जप मानसे च । जपति । जजाप । जेपतुः । 'अतो हलादेर्लघोः' । अजापीत् । अजपीत् । जल्पति । जजल्प । जजल्पतुः । अजल्पीत् ॥ **तुम्प** हिंसायाम् । 'प्रात्तुम्पतौ गवि कर्तरि' इति पारस्करादिगणे पाठात् सुट् । प्रस्तुम्पति गौः । **तुबि** वक्रसंयोगे । चुम्बति । चुचुम्ब । चुम्बिष्यति । अथात्मनेपदिनः ॥ **घूर्ण** भ्रमणे । घूर्णते । जुघूर्णे । अयं तुदादौ परस्मैपदी । क्षमूष् सहने । क्षमते । चक्षमे । ऊदित्वाद्वेट् । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे ।

९०५. म्वोश्च ८-२-६५

'मो नो धातोः' इत्यनुवर्तते । मान्तस्य धातोः मस्य नकारादेशः स्यात् मकारे वकारे च परे । 'अट्कुप्वाङ्...' इति णत्वम् । चक्षण्वहे । चक्षमिमहे । चक्षण्महे ॥ क्षमिष्यते । क्षंस्यते । क्षमेत । आशिषि क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त । कमु कान्तौ । कान्तिरिच्छा ।

९०६. कमेर्णिङ् ३-१-३०

कमेर्णिङ् स्यात् स्वार्थे । ङित्वात्तङ् । 'अत उपधायाः' । कामयते ।

९०७. अयामन्ताल्वाय्येत्न्विष्णुषु ६-४-५५

'णेरनिटि' इत्यतो णेरित्यनुवर्तते । आम्, अन्त, आलु, आय्य, इत्नु, इष्णु-एषु परेषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कृञोऽनुप्रयोगः । 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' । कामयाञ्चक्रे । कामयाम्बभूव । कामयामास । 'आयादय आर्धधातुके वा' । चकमे । चकमाते । चकमिरे । कामयिता । कमिता । कामयिष्यते । कमिष्यते । अकामयत ।

९०८. णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३-१-४८

ण्यन्तात् श्रिद्रुस्रुभ्यश्च च्लेश्चङ् स्यात् कर्तरि लुङि परे । चङावितौ । अकाम् इ अ त इति स्थिते ।

९०९. णेरनिटि ६-४-५१

'आर्धधातुके' इत्यधिकृतम् । 'अतो लोपः' इत्यतो लोप इत्यनुवर्तते । अनिडादावार्धधातुके परे णेर्लोपः स्यात् । इति णिलोपः ।

९१०. णौ चङ्युपधाया ह्रस्वः ७-४-१

अङ्गस्येत्यधिकारः । चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् । अ कम् अ त इति जाते ।

९११. चङि ६-१-११

चङि परे अनभ्यासधात्ववयवस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्यैकाचः । अभ्यासकार्यम् । अ चकम् अत इति जाते । सनि योऽभ्यासकार्यविशेषः

सोऽतिदिश्यते । तथाहि ।

९१२. सन्वल्लघुनि चङ्परेऽनग्लोपे ७-४-९६

सनीव सन्वत् । चङ् परः यस्मात् सः चङ्परः इति बहुव्रीहिः । अङ्गस्येत्यधिकारः । अङ्गसंज्ञानिमित्तभूतो यश्चङ्पर इत्यर्थः । स च णिरेव । अको लोपः अग्लोपः । न अग्लोपः अनग्लोपः । अत्र लोपोऽभ्यासस्य इत्यतः अभ्यासस्येत्यनुवर्तते । चङ्परके णौ यल्लघु तस्मिन् परे योऽभ्यासः तस्य सनीव कार्यं स्यात् । अत्र व्याख्यान्तरम् । अङ्गस्येत्यावृत्त्या णेर्विशेष्यम् । चङ्परके णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्यात् ।

९१३. सन्यतः ७-४-७९

'अत्र लोपः . . .' इत्यतोऽभ्यासस्येति 'भृञामित्' इत्यतः इदिति चानुवर्तते । अभ्यासस्यत इकारः स्यात् सनि । पिपक्षति ।

९१४. दीर्घो लघोः ७-४-९४

'सन्वल्लघुनि . . .' इति पूर्वसूत्रं 'सन्वत्' शब्दवर्जमनुवर्तते । तत्र पूर्ववत् द्वेधा व्याख्येयम् । सन्वद्भावविषये अभ्यासस्यातो दीर्घः स्यात् । अचीकमत् । अभ्यासस्य इकारः सनि विहितोऽत्रातिदिष्टः । दीर्घस्तु चङ्परके णावेवेति विविच्यबोध्यम् । कमेर्णिङभावपक्षे ।

कमेश्च्लेश्चङ् वक्तव्यः (वा)

णेरभावात् इत्वं दीर्घश्च न । अचकमत । चङ्परके णौ यल्लघु इत्यत्र, लघुपरको योऽभ्यासः इत्यत्र च वर्णान्तरेण व्यवधानं सह्यम् । येन नाव्यवधानं तेन व्यवधानेऽपि वचनप्रामाण्यात् । चकासृ दीप्तौ । णिजन्ताल्लुङ् । प्रथमव्याख्याने अचचकासत् । चङ्परकणौ लघोरभावात् । द्वितीयव्याख्याने अचीचकासत् । अभ्यासस्य लघुपरकत्वात् । अजजागरत् इत्यत्र तु व्याख्याद्वयेऽपि न दीर्घसन्वद्भावौ । प्रथमव्याख्याने णेर्लघोश्च, द्वितीयव्याख्याने अभ्यासस्य, लघोश्च अनेकव्यवधानात् । लघुनीति किम् ? अशशासत् । अत्र 'नाग्लोपि . . .' इति उपधाह्रस्वोनिषिध्यते ॥ अथ परस्मैपदिनः । भण शब्दे । भणति ।

बभाण । बभणतुः । भणिष्यति । क्वण शब्दे । क्वणति । चक्वाण । चक्वणतुः । क्वणिष्यति । कन दीप्तिकान्तिगतिषु । कनति । चकान । चकनतुः । कनिष्यति । ष्टन शब्दे । 'धात्वादेः षः सः' । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति टस्य नः । स्तनति । तस्तान । अस्तानीत् । अस्तनीत् । चमु अदने ।

## ९१५. ष्ठिवुक्लमुचमां शिति ७-३-७५

'शमामष्टानां...' इत्यतो दीर्घ इति वर्तते । दीर्घश्रुत्यां अच इत्युपस्थितम् । एषामचो दीर्घः स्याच्छिति ।

### आङि चम इति वक्तव्यम् (वा)

आचामति । आङि किम् ? चमति । विचमति । आचचाम । चमिष्यति । आचामिष्यति । आचामेत् । चमेत् ।

## ९१६. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७-२-५

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नस्यादिडादौ सिचि । अचमीत् । 'अतो हलादेर्लघोः' इति विकल्पिता वृद्धिर्न भवति । इडादौ किम् ? दह भस्मीकरणे । अधाक्षीत् । णेरछन्दस्युदाहरणम् । लोके-ण्यन्तात् चङो विधानात् । क्रमु पादविक्षेपे ।

## ९१७. वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३-१-७०

'दिवादिभ्यः श्यन्' इत्यतः श्यन् इति, 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते । एभ्यः श्यन् वा स्यात् कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ।

## ९१८. क्रमः परस्मैपदेषु ७-३-७६

क्रमेर्दीर्घः स्यात् परस्मैपदपरे शिति । क्राम्यति-क्रामति । चक्राम । चक्रमतुः । क्राम्यतु-क्रामतु । क्राम्य-क्राम । क्रमिता । अक्रमीत् । मान्तत्वात् न वृद्धिः । अथात्मनेपदिनः । अय गतौ । अयते । उदयते सूर्यः ।

## ९१९. दयायासश्च ३-१-३७

दय, अय, आस्–एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । अयांबभूव ।

अयामास । अयिता । अयिष्यते । अयेत । ' इणः षीध्वंलुङ्लिटां धोऽङ्गात् । अयिषीढ्वम् ।

### ९२०. विभाषेटः ८-३-७९

इणः परो य इट् ततः परेषां षीध्वं लुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् । अत्र ' झलो झलि ' इति सिचो लोपः ।

### ९२१. उपसर्गस्यायतौ ८-२-२९

' कृपो रो लः ' इत्यतो ' रो लः ' इति वर्तते । अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निसूदुसो रुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । निर्दुरोस्तु निलयते । दुल्यते । प्रत्यय इति तु इणो रूपम् । अथ कथं ' उदयति विततोर्ध्वरश्मिरज्जा 'विति माघः । अत्र हि शानच् स्यात् । इणः शतरि तु उद्यतीति भाव्यम् । उच्यते । ' इट किट कटी गतौ ' इति धातुपाठे इ धातुः प्रश्लिष्टः । तस्येदं रूपम् । दय दानगति रक्षण हिंसादानेषु । दयते । दयाञ्चक्रे । दयस्व । ' तेषां दयसे न कस्मात् ' (भट्टिः. २-३३) ' अधीगर्थदयेशां कर्मणि ' इति षष्ठी । अदयिढ्वम् । अदयिध्वम् । ओप्यायी वृद्धौ । प्यायते । आप्यायते ।

### ९२२. लिड्यङोश्च ६-१-२९

' प्यायः पी ' इति सूत्रमनुवर्तते । लिटि यङि च प्यायः पीभावः स्यात् । ' एरनेकाच . . . ' इति यण् । पिप्ये । पिप्याते । पिप्यिरे । प्यायिष्यते ।

### ९२३. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३-१-६१

' च्लेः सिच् ' इत्यतः च्लेरिति ' चिण् ते पदः ' इत्यतः चिण् ते इति चानुवर्तते । एभ्यः च्लेश्चिण् वा स्यादेकवचने तशब्दे परे । अयं चिण् कर्तरि प्रयोगेऽपीति विशेषः । सर्वधातुभ्यो भावे कर्मणि च चिण् वक्ष्यते ।

## ९२४. चिणो लुक् ६-४-१०४

च्चिण: परस्य प्रत्ययस्य लुक । स च प्रत्ययस्तशब्द एव । अप्यायि । चिणभावे सिचि अप्यायिष्ट । अप्यायितराम् इत्यत्र तरपो न लुक् । आभीयत्वेन तशब्द लुकोऽसिद्धत्वात् । अप्यायिढ्वम्-ध्वम् । वल संवरणे संचलने च । वलते । ववले । वादित्वान्नेत्वाभ्यासलोपौ । षेवृ सेवने । सेवते । परिनिविभ्य इति षत्वम् । परिषेवते । न्यषेवत । सिषेवे । ञि फला विशरणे । 'आदिर्ञिटुडव: ' । 'ञीत: क्त: ' इत्येतदर्थो ञिशब्द: । फलति । विशीर्यत इत्यर्थ: पफाल । 'तस्य मूर्धानमासाद्य पफालासिवरो हि स: ' (म. भा.) । तृफलेत्येत्वम् । फेलतु: । फेलु: । सिचि अतो हलादेरिति वृद्धिविकल्पे प्राप्ते ।

## ९२५. अतो ल्रान्तस्य ७-२-२

लान्तस्य रान्तस्य च धातोरकारस्य वृद्धि: स्यात् परस्मैपदपरे सिचि । अफालीत् । अचारीत् । सिचीत्यकारविशेषणम् । तेन अश्वलीत् अवश्रीत् इत्यादावनेकव्यवधाने न वृद्धि: । फलिष्यति । मील निमेषणे । निमेषण-मक्षिसंकोच: । मीलति । निमीलति । मिमील । अमीलीत् । मीलिष्यति । फल निष्पत्तौ । फलति । वृक्ष: फलति । पफाल । फेलतु: । फलिष्यति । खेल चलने । ऋदित् । क्रीडायां प्रचुर: प्रयोग: । खेलति । चिखेल । चिखेलतु: । चिखेलु: । खेलिष्यति । स्खल संचलने । स्खलति । चस्खाल । चस्खलतु: । स्खलिता । अस्खलत् । अस्खालीत् । 'अतो ल्रान्तस्य ' इति नित्या वृद्धि: । दल विशरणे । दलति । ददाल । देलतु: । दलिष्यति । अदालीत् । चर गतौ । चरति । चचार । चेरतु: । चेरु: । अचरत् । अचारीत् । अचरिष्यत् । ष्ठिवु निरसने । 'धात्वादे: ष: स: ' इति प्राप्ते ।

### सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेध: (वा)

ष्ठिवुक्लम्विति दीर्घ: । ष्ठीवति । तिष्ठेव । तिष्ठिवतु: । ष्ठीव्येत् । आशिषि 'हलि चे 'ति दीर्घ: । ष्ठीव्यात् । निरष्ठीवत् । जि जये । जय उत्कर्षप्राप्ति: । अकर्मक: । जि अभिभवे इति तु सकर्मक: । जयति ।

' जयत्यतिबलो रामः ' (श्री.रा.)।

## ९२६. सन्लिटोर्जेः ७-३-५७

'अभ्यासाच्च' इति 'सूत्रादभ्यासादिति चजोः कुः . . .' इति सूत्रात् कु इति चानुवर्तते। जयतेरभ्यासात् परस्य कुत्वं स्यात् सन् लिटोः। जभ्यान्तरतम्यात् गः। जिगाय। एरनेकाच इति यण्। जिग्यतुः। जिग्युः। थलि भारद्वाजनियमाद्वेट्। जिगयिथ। जिगेथ। जिगाय। जिगय। जिग्यिव। जिग्यिम। जेता। जेष्यति। अजैषीत्। जीव प्राणधारणे। धात्वर्थसंगृहीतकर्मत्वादकर्मकः। जीवति। जिजीव। जीविष्यति। अजीवीत्। गर्व दर्पे। गर्वति। जगर्व। धिवि प्रीणने।

## ९२७. धिन्विकृण्व्योर च ३-१-८०

'तनादिकृञ्भ्य उः' इत्यतः उरिति, 'कर्तरि कृत्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते। अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च कर्त्रर्थे सार्वधातुके परे। शपोऽपवादः। इदित्वान्नुम्। धिन उ ति इति स्थिते, उप्रत्ययस्यार्धधातुकत्वादकारलोपः। अचः परस्मिन्निति नस्य स्थानिवद्भावाल्लघूपधगुणो न। उप्रत्ययस्य पित्सु गुणः। धिनोति। धिनुतः। धिन्वन्ति।' अत्र वकारस्य नेट्। उकारवृत्त्यार्धधातुकत्वस्य अल्धर्मत्वेन स्थानिवद्भावाभावात्। धिनोमि।

## ९२८. लोपश्चास्यान्यतरस्यां म्वोः ६-४-१०७

'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पूर्वसूत्रोक्त उकारः अस्येत्यनेन परामृश्यते। प्रत्ययशब्दो लक्षणया प्रत्ययसंबन्धिनि वर्तते। अस्येति परामृष्टः उकारः अङ्गस्य विशेषणम्। तदन्तविधिः। असंयोगपूर्वो यः प्रत्ययोकारः तदन्ताङ्गस्य लोपो वा स्यान्मकारवकारयोः परतः। धिन्वः-धिनुवः। धिन्मः-धिनुमः। मिपि तु लोपं बाधित्वा परत्वाद्गुणः। धिनोमि। असंयोगपूर्वस्येति किम्? शक्नुवः। दिधिन्व। धिन्विष्यति। धिनोतु-धिनुतात्।

९२९. उतश्च प्रत्ययादसंयोगपूर्वात् ६-४-१०६

'अतो हेः' इत्यतो हेरिति, 'चिणो लुक्' इत्यतो लुगिति चानुवर्तते। असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात् परस्य हेर्लुक् स्यात्। धिनु। धिनुतात्। धिनवानि। नित्यत्वादुकारलोपात्पूर्वमाट्। धिनवाव। धिनवाम। अधिनोत्। अधिन्वीत्। धिनुयात्। धिन्व्यात्। कृवि हिंसाकरणयोश्च। कृणोति इत्यादि धिनोतिवत्। अव रक्षणगत्यादिषु। अवति। आव। नेटीति न वृद्धिः। मा भवानवीत्। धावु गतिशुद्ध्योः। स्वरितेत्। धावति-धावते। दधाव-दधावे। अथात्मनेपदिनः। शिक्ष विद्योपादाने। शिक्षते। शिशिक्षे। शिक्षिष्यते। अशिक्षत। शिक्षेत। शिक्षिषीष्ट। अशिक्षिष्ट। अशिक्षिष्यत। भिक्ष भिक्षायामलाभे लाभे च। भिक्षते। बिभिक्षे। दक्ष वृद्धौ शीघ्रार्थे च। दक्षते। दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते। दिदीक्षे। ईक्ष दर्शने। ईक्षते। 'इजादेः' श्चेत्याम्। ईक्षांचक्रे। ईक्षांबभूव। ईक्षामास। ईक्षिता। ईक्षिष्यते। ईक्षताम्। ऐक्षत। ऐक्षिष्ट। ऐक्षिष्यत। भाष व्यक्तायां वाचि। भाषते। बभाषे। अभाषिष्ट। अभाषिढ्वम्। अत्र इडागमो लुप्तसिज्भक्त इति ध्वम् इण्णन्तादङ्गात् पर इति बोध्यम्। रेषृ हेषृ ह्रेषृ अव्यक्ते शब्दे। आद्यो वृकशब्दे। ततो द्वौ अश्वशब्दे। रेषते वृकः रिरेषे। हेषते अश्वः। ह्रेषते। जिह्रेषे। जिह्रेषाते। भासृ दीप्तौ। बभासे। भासेत। भासिषीष्ट। अभासिढ्वम्। रासृ शब्दे। 'चन्द्रोऽय-मित्यार्ततरं ररासे'। आङः शसि इच्छायाम्। आङुपसर्गः। आशंसते। आशशंसे। आशंसत। ग्रसु अदने। ग्रसते। जग्रसे। ग्रसिष्यते। ईह चेष्टायाम्। ईहते। ईहां चक्रे। ईहां बभूव। ईहामास। ऐहत। ईहेत। 'विभाषेटः'। ईहिषीढ्वम्-ध्वम्। ऐहिष्ट। ऐहिढ्वम्-ध्वम्। गर्ह कुत्सायाम्। जगर्हे। काशृ दीप्तौ। काशते। चकाशे। ऊह वितर्के। ऊहते। ऊहांचक्रे। औहत। औहिष्ट। गाहू विलोडने। गाहते। जगाहे। ऊदित्वादिड्वा। जगाहिषे-अत्र 'हो ढः'। 'एकाच...' इति भष्भावः। 'षढोः कः

सि'। षत्वम्। जगाहिढ्वे-ध्वे। गाहिता। इडभावे।

## ९३०. ढो ढे लोपः ८-३-१३

ढस्य लोपः स्यात् ढे परे। गाढा। अथ परस्मैपदिनः। तक्षू तनूकरणे।

## ९३१. तनूकरणे तक्षः ३-१-७६

श्नुः स्याद्वा शब्विषये। तक्ष्णोति-तक्षति वा काष्ठम्। ततक्ष। इडागमे सिचि। अतक्षीत्। अतक्षिष्टाम्। इडभावे अतक्षीत्। 'स्कोः संयोगाद्योरन्ते च' इति कलोपः। 'षढोः कः सि'। अतष्टाम्। अतक्षुः। अतष्टाः। अतक्ष्व। अतक्ष्म। तक्ष्णुयात्-तक्षेत्। तक्ष्यात्। अतक्षिष्यत्। कलोपः। 'षढोः कः सि'। अतक्ष्यत्। वाग्भिः संतक्षति। भर्त्सयतीत्यर्थः। काक्षि काङ्क्षायाम्। काङ्क्षति। चकाङ्क्ष काङ्क्षिष्यति। चूष पाने। चूषति। चुचूष। भूष अलङ्कारे। भूषति। बुभूष। वृषु सेचने। वर्षति। ववर्ष। ववर्षतुः। वर्षेत्। वृष्यात्। अवर्षिष्यत्। रस शब्दे। रसति। ररास। रेसतुः। रेसुः। शसु हिंसायाम्। शसति। शशास। 'न शसददवादिगुणानाम्'। शशसतुः। शशसुः। शशसिथ। शंसु स्तुतौ। शंसति। शशंसुः। शंसेत्। आशिषि नस्य लोपः। शस्यात्। रह त्यागे। रहति। रराह। रेहतुः। रहि गतौ। रंहति। ररंह। रंहेत्। रंह्यात्। बृंहि वृद्धौ शब्दे च। बृंहति। बृंहति हस्ती। अबृंहीत्। अबृंहिष्टाम्। अर्ह पूजायाम्। अर्हति। 'तस्मान्नुड्द्विहलः'। आनर्ह। अथात्मनेपदिनः। द्युत दीप्तौ। द्योतते।

## ९३२. द्युतिस्वाप्योः संप्रसारणम् ७-४-६७

अनयोरभ्यासस्य संप्रसारणं स्यात्। 'इग्यणः संप्रसारणम्'। संप्रसारणाच्चेति पूर्वरूपम्। दिद्युते दिद्युताते। द्योतिता। द्योतिष्यते।

## ९३३. द्युद्भ्यो लुङि १-३-९१

बहुवचनात् द्युतादिभ्य इति गम्यते। 'शेषात् कर्तरि...' इत्यतः

परस्मैपदमित्यनुवर्तते । 'वा क्यषः' इत्यतो वेति च । 'तस्मादित्युत्तरस्य' । द्युतादिभ्यः परस्य लुङः परस्मैपदं वा स्यात् । कृपू सामर्थ्ये इत्येतत्पर्यन्तं द्युतादिः ।

## ९३४. पुषादिद्युताद्यॢदितः परस्मैपदेषु ३-१-५५

'च्लेः सिच्' इत्यतः च्लेरिति, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यतोऽङिति चानुवर्तते । अत्र पुष धातुः श्यन्विकरणो व्याख्यानात् । श्यन्विकरण पुषादेर्द्युतादेः ॡदितश्च धातोः परस्य च्लेरङ् स्यात् परस्मैपदेषु । ङित्वान्न लघूपधगुणः । अद्युतत् । पक्षे अद्योतिष्ट । 'व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी' (माघः. २-३) । रुच दीप्तावभिप्रीतौ च । रोचते सूर्यः । हरये रोचते भक्तिः । रुरुचे । अरोचत । अरुचत्-अरोचिष्ट । शुभ दीप्तौ । शोभते । शुशुभे । शोभेत । शोभिषीष्ट । अशुभत्-अशोभिष्ट । क्षुभ संचलने । क्षोभते । चक्षुभे । क्षोभिष्यते । अक्षुभत्-अक्षोभिष्ट । स्रंसु ध्वंसु भ्रंसु अवस्रंसने । स्रंसते । सस्रंसे दध्वंसे । बभ्रंसे । स्रंसिष्यते । अस्रंसत । अङि नलोपः । अस्रसत्-अस्रंसिष्ट । 'नास्रसत् करिणां ग्रैवम्' (रघु. ४-४८) 'भ्रंशु अधः पतने' इति दिवादौ । स्रम्भु विश्वासे । विस्रम्भते । अस्रम्भत्-अस्रम्भिष्ट । वृतु वर्तने । वर्तते । ववृते । वर्तिता । वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत्-अवर्तिष्ट । अवर्तिष्यत । अत्र विशेषः ।

## ९३५. वृद्भ्यः स्यसनोः १-३-९२

कृपूपर्यन्तं चत्वारो वृतादयः । वृतादिभ्यः परस्मैपदं वा स्यात् स्ये सनि च ।

## ९३६. न वृद्भ्यश्चतुर्भ्यः ७-१-५९

आर्धधातुकस्येडिति, 'सेऽसिचि' इत्यतः से इति चानुवर्तते । 'गमेरिट्...' इत्यतः परस्मैपदेषु इत्यनुवृत्तम् । तच्च तङानयोरभावं लक्षयति । एभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे । तथाच लृटि लृङि च वर्त्स्यति, अवर्त्स्यत् इत्यादि रूपान्तरं बोध्यम् । तङानयोरभावे किम् ? विवृत्स । अत्र सन्नताल्लोटि हेर्लुकि परस्मैपदपरकत्वाभावेऽपि नेट् । शृधु शब्दकुत्सायाम् । शर्धते । वृतुवद्रूपाणि । स्यन्दू प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दिषे ।

स्यन्दिता । ऊदित्वाद्वेट् । स्यन्ता । स्यन्दिष्यते । स्यन्त्स्यते । परस्मैपदेतु 'न वृद्भ्यः . . .' इति निषेध एव । स्यन्त्स्यति । द्युद्भ्यो लुङीति परस्मैपदपक्षे अङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । इडभावे । 'झलो झलि'। अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत । कृपू सामर्थ्ये ।

## ९३७. कृपो रो लः ८-२-१८

कृपधातोः यो रेफस्तस्य लकारः स्यात् । कल्पते । सूत्रञ्चावर्तते । आवृत्तस्यैवं पदच्छेदः । कृप उः रः लः इति । उरिति ऋकारस्य षष्ठ्येकवचने रूपम् । कृपेति लुप्तषष्ठ्यन्तम् । कृपधातोर्यः ऋकारः तस्यावयवो यो रेफसदृशः तस्य लकारसदृशः स्यात् । ऋकारस्य लृकारः स्यादिति यावत् । ऋकारे रेफांशः लृकारे लकारांशो वर्तत इत्येव तयोर्भेदः । रेफांशस्य लकारांशे आदिष्टे ऋकारः लृकारः संपद्यत इति बोध्यम् । कृपधातो रेफस्य लकारः, ऋकारस्य च लृकार आदिश्यत इति सूत्रस्य परमार्थः । कल्पते । चकॢपे । चकॢपिषे । इत्यादि स्यन्दिवत् । वृत् । वृत्तः संपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः । अथात्मनेपदिनः । षितश्च । घट चेष्टायाम् । घटते । जघटे । घटादयो मितः इति वक्ष्यमाणेन मित्संज्ञा । तत्फलन्तु णौ 'मितां ह्रस्वः' 'चिण्णमुलोर्दीर्घोऽन्यतरस्यामि'ति च । घटयति । विघटयति । 'उद्घाटयति, उद्घाटनम्, प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिव' इत्यादि तु घट संघाते इति चौरादिकस्य । व्यथ भयसंचलनयोः व्यथते ।

## ९३८. व्यथो लिटि ७-३-६८

'अत्र लोपः . . .' इत्यतोऽभ्यासस्येति, 'द्युतिस्वाप्योः. . . .' इत्यतः संप्रसारणमिति चानुवर्तते । व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । अभ्यासे थस्य हलादिशेषेण निवृत्तिः । यस्य तु संप्रसारणमपवादः । विव्यथे । 'न संप्रसारणे संप्रसारणम्' वस्य न संप्रसरणम् । विव्यथे । विव्यथिषे । प्रथ प्रख्याने । पप्रथे । प्रथिष्यते । अप्रथत । अप्रथिष्ट । क्रदि वैक्लव्ये । क्रन्दते ।

चक्रन्दे। क्रन्दिता। ञित्वरा संभ्रमे। त्वरते। तत्वरे। घटादयः षितः। 'षिद्भिदादिभ्योऽङ्' इति कृत्सु वक्ष्यते। मित्वन्तु एतदूर्ध्वमपि। अथ परस्मैपदिनः। णट नृत्तौ। धातुरयं पूर्वं पठितो मित्वार्थमनूदितः। तत्रायं विवेकः पूर्वं पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः। पदार्थाभिनयो नाट्यम्। अत्र घटादेस्तु नृत्यं नृत्तञ्चार्थः। यत्कारिषु नर्तकव्यपदेशः। 'पदार्थाभिनयौ नृत्यं नृत्तं ताललयाश्रयम्'। अस्मिन्नर्थे धातुर्मित्। तथाच नाटयति नटयतीति च व्यवस्थया प्रयोगः। श्लथ क्रथ हिंसायाम्। श्लथते। श्लथयति। क्रथते। चक्रथे। 'जासिनिप्रहणे'ति सूत्रे क्राथेति निपातनात् क्राथयति। ज्वल दीप्तौ। प्रत्ययार्थं पठिष्यमाणोऽयं मित्वार्थमनूद्यते। ज्वलति। प्रज्वलयति। स्मृ आध्याने। चिन्तायां पठिष्यमाणस्य आध्याने मित्वार्थमनुवादः। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। स्मरति। स्मरयति। स्मारयतीति च व्यवस्थया प्रयोगः। श्रा पाके श्रै पाके इति भ्वादौ पठिष्यमाणस्य श्रा इत्यादादिकस्य मित्वार्थोऽनुवादः। श्रपयति विक्लेदयतीत्यर्थः। कम्पने चलिः। मित्। चलयति शाखाम्। कम्पनादन्यत्र शीलं चालयति। अन्यथा करोतीत्यर्थः। सूत्रं चालयति। क्षिपतीत्यर्थः। सभां चालयति। प्रवर्तयतीत्यर्थः। मदी हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। दैवादिकस्य मित्वार्थोऽनुवादः। मदयति। हर्षयति ग्लेपयति वेत्यर्थः। अन्यत्र मादयति। चित्तविकारमुत्पादयतीत्यर्थः। ध्वन शब्दे॥ ज्वलादौ पठिष्यमाणो ध्वन्यात्मके शब्दने मित्वार्थमनूद्यते। ध्वनयति घण्टाम्। अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः। अत्र भोजः। दलि, वलि, स्खलि, रणि, ध्वनि, त्रपि, क्षपयश्चेति पपाठ। एते मितः। 'क्षै क्षये' इति वक्ष्यमाणस्य कृतात्वस्य पुका निर्देशः क्षपिरिति। क्षपयति। घटादयो मितः। मित्संज्ञा इत्यर्थः॥

## जनीजॄष् क्नसुरञ्जोऽमन्ताश्च (वा)

मित इत्यनुवर्तते। अमन्ताः कमिगम्यादयो मितः।

## ज्वलह्वलह्मलनमामनुपसर्गाद्वा (वा)

एषां मित्वं वा। ज्वलयति। ज्वालयति। उपसृष्टे तु नित्यं मित्वम्।

कथं तर्हि प्रज्वालयति । उन्नामयतीति । घजन्तात्तत्करोतीति णौ । ननु कथं संक्रामयतीति ? । अमन्तत्वेन मित्वात् ह्रस्वप्रसङ्गः । उच्यते । 'मितां ह्रस्व' इति सूत्रे वा चित्तविरागे इति सूत्रात् वेत्यनुवर्त्य व्यवस्थितविभाषाश्रीयते ॥ तेन 'रजो विश्रामयन् राज्ञाम्, धुर्यान् विश्रामयेति सः' इत्याद्यपि सिद्धम् ।

## न कम्यमिचमाम् (वा)

अमन्तत्वात् प्राप्तं मित्वं निषिध्यते । कामयते । अम गत्यादिषु । आमयति । आचामयति ।

## शमो दर्शने (वा)

शाम्यतिर्दर्शने मिन्नस्यात् । निशामयति रूपम् । अन्यत्र तु 'प्रणयिनो निशमय्य वधूः कथाः' । श्रावयित्वेत्यर्थः । कथं तर्हि 'निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति' ? । शम आलोचने इति चौरादिकस्येदं रूपम् । धातूनामनेकार्थत्वात् श्रवणे वृत्तिः ।

## यमोऽपरिवेषणे (वा)

यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात् । आयामयति । द्राघयति व्यापरयति । वेत्यर्थः । परिवेषणे तु यमयति ब्राह्मणान् । परिवेषयतीत्यर्थः । कथं तर्हि 'धर्मे प्रजाः नियमयन्' इति ? । नियमशब्दादर्शआद्यचि तत्करोतीति णिच् । वृत् । घटादिः समाप्तः ॥ फण गतौ ।

## ९३९. फणां च सप्तानाम् ६-४-१२५

'अतएकहल्मध्ये' इत्यतो लिटीति, 'थलि सेटि' इति चानुवर्तते । 'ध्वसोः' इत्यतः एदिति, 'गमहने' त्यतः क्ङितीति, 'वा जॄभ्रमुत्रसाम्' इत्यतो वेति च अनुवर्तते । एषां वा एत्वाभ्यासलोपौ स्तः क्ङिति लिटि सेटि थलि च । पफाण । फेणतुः । फेणुः । राजृ दीप्तौ । स्वरितेत् । राजति-राजते । रराज । रेजतुः-रराजतुः । रेजुः-रराजुः । रेजिथ-रराजिथ । रेजे । रेजाते । रेजिरे । राजिता । राजितासि-राजितासे । राजिष्यति-राजिष्यते । राजतु-राजताम् । अराजत्-अराजत । राजेत्-राजेत ।

राज्यात्-राजिषीष्ट । अराजीत्-अराजिष्ट । अराजिष्यत्-अराजिष्यत । रेजतु-रित्यादौ विधानसामर्थ्यात् आकारस्यैत्त्वम् । टु भ्राजृ टु भ्राशृ टु भ्लाशृ दीप्तौ । टुरित् । 'ट्वितोऽथुच्' इत्येतदर्थः । भावे भ्राजथुरित्यादि सिध्यति । अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु भ्राजादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । विभ्राक्-विभ्राट् । भ्राजते । भ्रेजे-बभ्राजे । स्यमु स्वन ध्वन शब्दे । स्यमादयः क्षरत्यन्ताः परस्मैपदिनः । स्यमति । स्वनति । स्वेनतुः-सस्वनतुः । 'अतो हलादेर्लघोः' इति लुङि वा वृद्धिः । अस्वानीत् । अस्वनीत् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । वेश्च स्वनो भोजने इति षत्वम् । फणादयो गताः ।

ध्वनति । दध्वान । दध्वनतुः । दध्वनुः । ज्वल दीप्तौ । ज्वलति । 'अतो ल्रान्तस्य' । अज्वालीत् । चल कम्पने । चलति । चचाल । चेलतुः । अचालीत् । पत्लृ गतौ । पतति । पपात । पेततुः । पतिता । पतिष्यति । पततु । अपतत् । लुङि लृदित्वादङ् ।

## ९४०. पतः पुम् ७-४-१९

'ऋदृशोऽङि' इत्यतः अङीति वर्तते । पतः पुमागमः स्यादङि परे । उकार उच्चारणार्थः । दन्त्यादचः परः । अपप्तत् । अपप्तताम् । अपप्तन् । अपतिष्यत् । क्नथे निष्पाके । क्नथति । चक्नाथ । चक्नथतुः । क्नथिता । एदित्वात् ह्म्यन्तेति वृद्धिनिषेधः । अक्नथीत् । टु वम उद्गिरणे । टुरित् । वमति । ववाम । ववमतुः वादित्वात् 'न शस ददेति' एत्वाभ्यासलोपौ न । वमिता । वमिष्यति । भ्रमु चलने । 'वा भ्राशेति' श्यन् वा । भ्रम्यति । भ्रमति । भ्राम्यतीति दिवादौ वक्ष्यते ।

## ९४१. वा जॄ भ्रमुत्रसाम् ६-४-१२४

एषामेत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । बभ्राम । भ्रेमतुः-बभ्रमतुः । भ्रेमुः-बभ्रमुः । भ्रेमिथ-बभ्रमिथ । ह्म्यन्तेति न वृद्धिः ।

अभ्रमीत् । अभ्रमिष्टाम् । क्षर संचलने । क्षरति । चक्षार । चक्षरतुः । क्षरिता । 'अतो ल्रान्तस्य' । अक्षारीत् । अक्षारिष्टाम् । अक्षारिषुः । अथ द्वावनुदात्तेतौ । षह मर्षणे । सहते । सेहे । सहिता । तादौ तीषसहेति वा इट् । इडभावे तु-ढत्वधत्वष्टुत्वढलोपाः । स ढा इति जाते ।

## ९४२. सहिवहोरोदवर्णस्य ६-३-११२

'ढ्रलोपे पूर्वस्यदीर्घोऽणः' इत्यतो ढलोप इति वर्तते । रलोप इति तु न। असंभवात् । सहिवहोरवर्णस्य ओत् स्यात् ढलोपे सति । सोढा । सोढारौ । सहिष्यते । सहतां । असहत । सहेत । सहिषीष्ट । असहिष्यत । परिनिविभ्य इति षत्वम् । परिषहते ।

## ९४३. सिवादीनां वाड्व्यवायेऽपि ८-३-७१

परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि । पर्यषहत। पर्यसहत । व्यषहत । व्यसहत । रमु क्रीडायाम् । रमते । रेमे । रेमिषे । रन्ता । रंस्यते । रमतां । अरमत । रमेत । रंसीष्ट । अरंस्त । अरंसातां । अरंसत । अरंस्थाः । अरंसाथां । अरंरुध्वं । अरंसि । अरंस्वहि । अरंस्महि ॥ **अथ परस्मैपदिनः** । षद्लृ विशरणगत्यवसादनेषु । लटि शपि सद् अ इति स्थिते ।

## ९४४. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७-३-७८

ष्ठिवुक्लमु इत्यतः शितीत्यनुवर्तते । श् चासौ इच्च शित् इति कर्मधारयः । 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिः । अङ्गाधिकारात् प्रत्यये इति लभ्यते । पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये । सीदति । शितीति बहुव्रीहौ तु पाधातोः कर्मणि लिटि पपे इत्यत्रापि एशि पिबादेशापत्तिः । ससाद । सेदिथ-ससत्थ सेदतुः । सत्ता । सत्स्यति । सीदतु । असीदत् । सीदेत् । सद्यात् । लुङि लृदित्वादङ् । असदत् । असत्स्यत् ॥ 'सदिरप्रतेः' । निषीदति । 'प्राक्सितादड्व्यवायेऽपि' । न्यषीदत् ।

## ९४५. सदेः परस्य लिटि ८-३-११८

न रपरसृपिसृजि (८-३-११०) इति सूत्रात् नेति वर्तते। मूर्धन्य इत्यधिकृतम्। परशब्दः उत्तरखण्डपरः। सदेरभ्यासात् परस्य षत्वं न स्याल्लिटि। निषसाद। निषेदतुः। शद्लृ शातने। विशीर्णतायामयं धातुः। शातनन्तु जनकतया निर्दिश्यते। विशरणं धात्वर्थः।

## ९४६. शदेः शितः १-३-६०

अनुदात्तङित इत्यतः आत्मनेपदमिति वर्तते। शित्पदस्य शिद्भाविनि लक्षणा। शिद्भाविनः शदेरात्मनेपदं स्यात्। शपिविवक्षिते इति यावत्। शीयादेशः। शीयते। विशीर्यते इत्यर्थः। शशाद। शेदतुः। भारद्वाजनियमात्थलिवेट्। शेदिथ। शशत्थ। शत्ता। शत्तासि। शत्स्यति। शीयतां। अशीयत। शीयेत। शद्यात्। अङ्। अशदत्। अशत्स्यत्॥ क्रुश आह्वाने रोदने च। क्रोशति। चुक्रोश। क्रोष्टा। अक्रोशत्। क्रोशेत्। क्रुश्यात्। लुङि।

## ९४७. शल इगुपधादनिटः क्सः ३-१-४५

धातोरेकाच इत्यतो धातोरितिवर्तते। इगुपधो यः शलन्तो धातुः तस्मादनिटः च्लेः क्सादेशः स्यात्। सिचोऽपवादः। ककार इत्। अक्रुश स त् इति स्थिते। व्रश्चादिना शस्य षः। 'षढोः कः सि'। सस्य षत्वम्। क्त्वान्नोपधागुणः। अक्रुक्षत्। अक्रुक्षताम्। अक्रुक्षन्। कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु। कोचति। चुकोच। बुध अवगमने। बोधति। बुबोध। बुबोधिथ। बोधिता। बोधिष्यति। रुह बीजजन्मनि प्रादुर्भावे च। रोहति। रुरोह। रुरोहिथ। रोढा। रोक्ष्यति। लुङि क्सः। अरुक्षत्। अथ स्वरितेतः। हिक्क अव्यक्ते शब्दे। हिक्कति। हिक्कते। जिहिक्क। जिहिक्के। हिक्किता। हिक्किष्यति। अञ्चु गतौ याचने च। अञ्चति। अञ्चते। 'तस्मान्नुड्द्विहलः'। आनञ्च। आनञ्चे। अञ्चिता। अञ्चेत्। अच्यात्। डुयाचृ याञ्चायाम्। याचति। याचते। ययाच। ययाचे।

याचिष्यति । याचिष्यते । बुधिर् बोधने । बोधति । बोधते । बुबोध । बुबुधे । इरित्वादङ् वा । अबुधत् । अबोधीत् । अबोधिष्टाम् । अयं सेट् । अबोधिष्ट । अबोधिषाताम् । 'दीपजनेति' चिण् तु न भवति । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात् ॥ खनु अवदारणे । खनति । खनते । चखान ।

## ९४८. गमहनजनखनघसां लोपः क्ङित्यनङि ६-४-९८

'ऊदुपधाया गोहः' इत्यतः उपधाया इति वर्तते । अचिश्नुधातु इत्यतः अचीति च । गमादीनामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः । चख्नुः । चखनिथ । चख्ने । चख्नाते । अनङीति किम् ? अगमत् । गमेर्लुङि रूपम् । खनेत् । आशीर्लिङि तु—

## ९४९. ये विभाषा ६-४-४३

'जनसनखनां सञ्झलोः' इत्यतः जनसनखनामिति, 'अनुदात्तोपदेश'-इत्यतः क्ङितीति, 'विड्वनोरनुनासिकस्यात्' इत्यतः आदिति चानुवर्तते । जनसनखनामात्वं वा स्याद्यादौ क्ङिति । खायात् । खन्यात् । अखनीत् । अखानीत् । अखनिष्यत् । स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति । स्पशते । पस्पाश । पस्पशे । लष कान्तौ । लषति । 'वा भ्राशेति' श्यन् वा । लष्यति । अभिलषति । अभिलष्यति । ललाष । लेषतुः । लषिता । लषिष्यति । गुहू संवरणे ।

## ९५०. ऊदुपधाया गोहः ६-४-८९

गोह इति कृतलघूपधगुणस्य गुहेर्निर्देशः । 'अचिश्नुधातु' इत्यतः अचीत्यनुवर्तते । अङ्गाधिकारात् प्रत्यय इत्याक्षिप्तम् । गोह इति निर्देशात् गुणहेतौ इति लभ्यते । गुह उपधाया ऊत् स्याद्गुणहेतावजादौ प्रत्यये । गुणापवादः । गूहति । गूहते । उपगूहति । आलिङ्गतीत्यर्थः । जुगूह । गुणहेताविति किम् ? जुगुहतुः । जुगुहुः ॥ जुगूहिथ । जुगुहथुः । जुगुह । जुगूह । जुगुहिव । जुगुहिम । जुगुहे । जुगुहाते ॥ गूहिता । गोढा । गूहिष्यति । घोक्ष्यति । ढत्वभषभावकत्वषत्वानि । गूहेत् । गुह्यात् ।

अगूहीत् । अगूहिष्टाम् । अगूहिषुः । इडभावे लुङि–' शल इगुपधादिति ' क्सः । अघुक्षत् । अघुक्षन् । आत्मनेपदे तु—

### ९५१. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७-३-७३

' क्सस्याचि ' इत्यतः क्सस्येति वर्तते । दुहादीनां क्सस्य लुग् वा स्यात् आत्मनेपदे दन्त्ये । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ । लुगभावे अघुक्षत ।

### ९५२. क्सस्याचि ७-३-७२

' घोर्लोपो लेटि वा ' इति सूत्रात् लोप इत्यनुवर्तते । च्लेरादेशस्य क्सस्य लोपः स्यादचि परे । अलोऽन्त्यस्य । अघुक्षाताम् । अत्र लोपाभावे ' आतो ङितः ' इति इयादेशापत्तिः । अघुक्षन्त । झस्याजादित्वाभावात् अलोपाभावे अन्तादेशः । अन्तादेशे कृते अलोपः । अघुक्षथाः । अघुक्षि । अघुक्षावहि । अगुह्वहि । अघुक्षामहि । अगूहिष्यत । अघुक्ष्यत ॥ **अथाजन्ता उभयपदिनः ।** श्रीञ् सेवायाम् । श्रयति । श्रयते । शिश्राय । शिश्रियतुः । शिश्रयिथ । शिश्रिये । श्रयिता । अश्रयत् । अश्रयत । श्रयेत् । श्रयेत । श्रीयात् । श्रयिषीष्ट । लुङि णिश्रीति चङ् । अशिश्रियत् । ' यदृच्छयाशिश्रियदाश्रयः श्रियः ' (माघ. १-४६) । अशिश्रियत । अश्रयिष्यत् । अश्रयिष्यत । **भृञ् भरणे ।** भरति । भरते । बभार । बभ्रतुः । बभ्रुः । क्रादिनियमान्नेट् । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । बभृवहे । भर्ता ।

### ९५३. ऋद्धनोः स्ये ७-२-७०

आर्धधातुकस्येडित्यतः इडिति वर्तते । ऋकारान्तात् हन्तेश्च परस्य स्यस्य इट् स्यात् । एकाच उपदेशोऽनुदात्तात् इति इण्निषेधस्यापवादः । भरिष्यति । भरिष्यते । भरतु । भरतां । अभरत् । अभरत । भरेत् । भरेत । आशिषि तु—

### ९५४. रिङ् शयग्लिङ्क्षु ७-४-२८

' अयङ् यि क्ङिति ' इत्यतो यीत्यनुवृत्तं लिङो विशेषणम् । ' अकृत्सार्वधातुकयो 'रित्यतः असार्वधातुके इत्यनुवृत्तमपि तथा । ' रीङृतः ' इत्यतो ऋत इति वर्तते । शेयकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् ।

रीङि प्रकृते रिङ्विधिसामर्थ्यात् दीर्घो न । भ्रियात् । भ्रियास्तां । भ्रियासुः ।

## ९५५. उश्च १-२-१२

'लिङ्सिचावात्मनेपदेषु' इति सूत्रमनुवर्तते । 'इको झल्' इत्यतो झलिति च । ऋवर्णात् परौ झलादी लिङ् आत्मनेपदपरः सिच्-इत्येतौ कितौ स्तः ॥ इति किस्त्वान्न गुणः । भृषीष्ट । भृषीयास्तां । भृषीरन् ॥ 'सिचि वृद्धिः परस्मैपदेषु' । अभार्षीत् । अभार्ष्टां । अभार्षुः ॥ तङि तु—

## ९५६. ह्रस्वादङ्गात् ८-२-२७

'झलो झलि'त्यतो झलीति, 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते । 'रात् सस्ये'त्यतः सस्येत्यनुवृत्तम् । तच्च अङ्गग्रहणात् सिजेव । ह्रस्वान्तादङ्गात् परस्य सिचो लोपः स्याज्झलि । अभृत । अभृषातां । अभृषत । अभृथाः । अभृढ्वम् । अभृषि । अभृष्वहि ॥ 'ऋद्धनोः स्ये' । अभरिष्यत् । अभरिष्यत ॥ हृञ् हरणे । हरणं प्रापणं स्वीकारः स्तेयं नाशनं च । भारं हरति । प्रापयतीत्यर्थः । अंशं हरति । परस्वं हरति । पापं हरति । हरते । जहार । जहर्थ । जहार । जहर । क्रादिनियमादिट् । जह्रिव । जह्रिम । जह्रे । जह्राथे । जह्रिषे । 'विभाषेटः' । जह्रिढ्वे । जह्रिध्वे । जह्रिवहे । हर्ता । हर्तासि । हर्तासे । हरिष्यति । हरतु । हराणि । हरतां । हरेतां । हरै । अहरत् । अहरत । हरेत् । हरेत । ह्रियात् । हृषीष्ट । अहार्षीत् । अहृत । अहृषातां । अहृथाः । अहृढ्वं । अहरिष्यत् । अहरिष्यत । धृञ् धारणे । धरति । धरते । दधार । दधृथ । दध्रिव । दध्रे । धर्ता । धरिष्यति । धरतु । धरतां । अधरत् । धरेत् । धरेत । ध्रियात् । धृषीष्ट । अधार्षीत् । अधृत । अधृढ्वम् । णीञ् प्रापणे । 'णो नः' । नयति । नयते । निनाय । निन्यतुः । निनेथ । निन्यिथ । निनाय-निनय । निन्यिव । निन्ये । निन्यिषे । नेता । नेष्यति । नेष्यते । नयतु । नयतां । अनयत् । नयेत् । नीयात् । नेषीष्ट । अनैषीत् । अनैष्टां । अनेष्ट । अनेषातां । अनेष्यत् । अनेष्यत ॥ अथाजन्ताः परस्मैपदिनः । धेट् पाने । स्तनन्धयीत्यादौ ङीषर्थं टित्त्वम् । धयति ।

## ९५७. आदेच उपदेशेऽशिति ६-१-४५

'लिटि धातोरि'त्यतो धातोरित्यनुवृत्तमेचा विशेष्यते । उपदेशे एजन्तस्य धातोरात्वंस्यान्नतुशिति । उपदेशे इति किम्? चेता । स्तोता । धातोरिति किम्? गोभ्याम् । शितीति कर्मधारयाश्रयणात् तदादिविधौ शित्संज्ञकप्रत्ययादौ नेति लभ्यते । तेन एशि दधे इत्यादौ न दोषः । शितीति किम्? धयति । कृते णल्यात्वम् । दधा अ इति स्थिते ।

## ९५८. आत औ णलः ७-१-३४

णल्प्रकृतिर्धातुरेवेति धातोरिति लभ्यते । आदन्ताद्धातोर्णल औकारादेशः स्यात् ॥ दधौ ।

## ९५९. आतो लोप इटि च ६-४-३४

'आर्धधातुके' इत्यधिकृतम् । 'दीङो युडचिक्ङिति'त्यतः अचिक्ङितीत्यनुवृत्तम् । अजाद्योरार्धधातुकयोःक्ङिदिटोः परयोरातो लोपः स्यात् । इट आर्धधातुकत्वन्तु आर्धधातुकावयवत्वात । 'क्ङितीति' चेटो न विशेषणम् । इड्ग्रहणसामर्थ्यात् । अजाद्योः किम्? ग्लैधातोर्भावे यकि ग्लायते । क्ङितीति किम्? यान्ति । धा अतुस् इति स्थिते 'द्विर्वचनेऽची'ति निषेधात् द्वित्वे कृते आलोपः । दधतुः । दधुः । दधिथ । दधाथ । दधिव । धाता । अधयत् । धयेत् । आशीर्लिङि—

## ९६०. दाधाघ्वदाप् १-१-२०

दारूपा धारूपाश्च शब्दाः घुसंज्ञकाः स्युः दाप् दैपौ विना । इति धाधातोर्घुत्वम् ।

## ९६१. एर्लिङि ६-४-६७

'आर्धधातुके' इत्यधिकृतम् । 'दीङोयुडचिक्ङिति' इत्यतः क्ङितीति वर्तते । 'घु मास्थागापाजहातिसा'मित्यनुवर्तते । घुसंज्ञानां मास्थादीनाञ्च एत्वं स्यादार्धधातुके किति लिङि । धेयात् । धेयास्तां । धेयासुः । लुङि—

## ९६२. विभाषा धेट्श्व्योः ३-१-४९

'णिश्रिद्रुस्रुभ्य' इत्यतः कर्तरि चङ् इत्यनुवर्तते। आभ्यां च्लेश्चङ् वा स्यात् कर्तृवाचिनि लुङि परे। चङीति द्वित्वम्। आलोपः। अदधत्। अदधतां। अदधन्। अदधम्। अदधाव। अदधाम। चङभावे सिच्।

## ९६३. विभाषा घ्राधेट्शाच्छासः २-४-७८

घ्रा गन्धोपादाने, धेट् पाने, शो तनूकरणे, छो छेदने। षो अन्तकर्मणि। 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यतो लुगिति वर्तते। घ्रादिभ्यः सिचो लुग्वा स्यात् परस्मैपदे परे। अधात्। अधातां। अधुः। लुगभावपक्षे—

## ९६४. यमरमनमातां सक् च ७-२-७३

'इडत्यर्ती'त्यतः इडिति, 'स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदेष्विति च वर्तते। आदित्यनेन आदन्तस्य ग्रहणम्। एषां सक् स्यात् एभ्यः परस्य सिचः इट् स्यात् परस्मैपदेषु। अधासीत्। अत्र 'इट ईटी'ति सिचो लोपः। अधासिष्टाम्। अधासिषुः। इति धेटो लुङि त्रैरूप्यम्॥ ग्लै म्लै हर्षक्षये। हर्षक्षयो बलक्षयः। ग्लायति। जग्लौ। जग्लिथ। जग्लाथ। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्।

## ९६५. वान्यस्य संयोगादेः ६-४-६८

'एर्लिङि' इत्यस्मात् परमिदं सूत्रम्। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि। ग्लायात्। ग्लेयात्। अग्लासीत्। अग्लासिष्टां। एवं म्लायति। ध्यै चिन्तायाम्। ध्यायति। दध्यौ। दध्यिथ। दध्याथ। ध्याता। ध्यास्यति। अध्यायत्। ध्यायेत्। ध्यायात्। ध्येयात्। अध्यासीत्। अध्यास्यत्। कै गै शब्दे। कायति। गायति। जगौ। जगिथ। जगाथ। जगिव। गास्यति। गायतु। अगासीत्। अगास्यत्। पा पाने। 'पाघ्राध्मे'ति पिबादेशः। तस्य अदन्तत्वान्नोपधागुणः। पिबति। पपौ। पपिथ। पपाथ। पपिव। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। एर्लिङि। पेयात्। 'गातिस्थे'त्यादिना सिचो लुक्। अपात्। अपातां। अपुः।

अपास्यत् ॥ घ्रा गन्धोपादाने । जिघ्रति । जघ्रौ । घ्राता । अजिघ्रत् । जिघ्रेत् । घ्रायात् । घ्रेयात् । सिचि सक् । अघ्रासीत् । 'विभाषाघ्राधेडिति' सिचो वा लुक् । अघ्रात् । अघ्रातां । अघ्रास्यत् ॥ ध्मा शब्दाग्नि संयोगयोः । धमति । दध्मौ । 'शङ्खान्दध्मुः पृथक् पृथक्' । ध्माता । ध्मास्यति । अधमत् । धमेत् । ध्मायात् । ध्मेयात् । अध्मासीत् ॥ ष्ठा गति-निवृत्तौ । तिष्ठति । तस्थौ । तस्थिथ । तस्थाथ । तस्थिम । 'स्थादिष्व-भ्यसेन चाभ्यासस्ये'ति षत्वम् । अधितष्ठौ । उपसर्गात् सुनोतीति षत्वं । अधिष्ठाता । अधिष्ठास्यति । अतिष्ठत् । तिष्ठेत् । स्थेयात् । अस्थात् । अस्थातां । अस्थुः । अस्थास्यत् ॥ म्ना अभ्यासे । प्रायेणाङ्पूर्वः । आमनति । आमनन्ति । आमम्नौ । आमनत् । आमनेत् । आम्नायात् । आम्नेयात् । आम्नासीत् । आम्नासिषुः । आम्नास्यत् ॥ दाण् दाने । यच्छति । ददौ । दाता । दास्यति । यच्छतु । अयच्छत् । यच्छेत् । देयात् । अदासीत् । अदासिष्टां । अदास्यत् । नेर्गदेति णत्वं । प्रणियच्छति ॥ स्मृ चिन्तायां । स्मरति ।

### ९६६. ऋतश्च संयोगादेर्गुणः ७-४-१०

'दयतेर्दिगि लिटी'त्यतो लिटीति वर्तते । ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । लिटः कित्वात् अप्राप्तो गुणोऽनेन विधीयते । णलि परत्वा-दनेन गुणः । ततः अत उपधाया इति वृद्धिः । सस्मार । सस्मरतुः । सस्मर्थ । सस्मार । सस्मर । सस्मरिव । स्मर्ता । 'ऋद्धनोः स्ये' । स्मरिष्यति । स्मरतु । अस्मरत् । स्मरेत् । आशिषि तु—

### ९६७. गुणोऽर्तिसंयोगाद्योः ७-४-२९

'अकृत्सार्वधातुकयो'रित्यतः असार्वधातुक इति वर्तते । 'रिङ् शयग्लिङ्क्षु' इत्यतो यकिलिङीति च । 'अयङ् यि क्ङिती'त्यतो यि इति सप्तम्यन्तमनुवर्तते । अर्तेः संयोगादेः ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । स्मर्यात् । स्मर्यासुः । अस्मार्षीत् । अस्मार्ष्टां । अस्मरिष्यत् ।

सृ गतौ । सरति । 'ऋादित्वान्नेट्' । ससर्थ । सस्रुव । सस्रुम । सर्ता । सरिष्यति । असरत् । सरेत् । 'रिङ् शयग् लिङ्क्षु' । स्रियात् । असार्षीत् । असार्ष्टाम् । 'ऋद्धनोः स्ये' । असरिष्यत् । शीघ्रगतौ तु—'पाघ्राध्मेति' धावादेशः । धावति । धावतु । अधावत् । धावेत् । ऋ गतिप्रापणयोः । 'पाघ्रेति' ऋच्छादेशः । ऋच्छति ।

### ९६८. ऋच्छत्यृताम् . ७-४-११

ऋच्छति ऋ ऋतामितिच्छेदः । तौदादिकस्य ऋच्छतेः ऋधातोर्भ्वादेः ॠकारान्तानाञ्च गुणः स्याल्लिटि । णलि अनेन गुणे 'अत उपधायाः' इति वृद्धिः । आर । 'अत आदेः' इत्यभ्यासस्य दीर्घः । आ अर् अतुस् इति स्थिते सवर्णदीर्घे आरतुः । आरुः ।

### ९६९. इडत्त्यर्तिव्ययतीनाम् ७-२-६६

अद् ऋ व्येञ् इत्येभ्यस्थलोनित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । आर्च्छत् । ऋच्छेत् । अर्यात् । आर्षीत् । आर्ष्टाम् ॥ स्रु गतौ । स्रवति । सुस्राव । सुस्रोथ । सुस्रुव । स्रोता । स्रोष्यति । स्रवतु । अस्रवत् । स्रवेत् । 'अकृत्सार्वधातुकयोर्दीर्घः' । स्रूयात् । अस्रौषीत् । अस्रोष्यत् ॥ श्रु श्रवणे ।

### ९७०. श्रुवः शृ च ३-१-७४

चकारेण 'स्वादिभ्यः श्नुः' इति सूत्रस्थः श्नुः समुच्चीयते । श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः । 'सार्वधातुकमपित्' इति श्नोर्ङित्वाद्गुणो न । शृणोति । शृणुतः । अन्तौ अचिश्नुधातुरित्युवङि प्राप्ते ।

### ९७१. हुश्नुवोः सार्वधातुके ६-४-८७

'इणो यण्' इत्यतो यण् इति, 'अचि श्नु . . .' इत्यतः अचीति, 'एरनेकाच' इति सूत्रमेरितिवर्जं, 'ओः सुपी'त्यतः ओरिति चानुवर्तते । जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यचासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । शृण्वन्ति । असंयोगपूर्वस्येति किम् ? आप्नुवन्ति । सार्वधातुक

इति किम् ? जुहुवतुः । अनेकाज्ग्रहणन्तु छन्दसि हुवन्तीत्याद्यर्थम् । शृणोषि । शृणुथः । शृणुथ । शृणोमि । "लोपश्चास्यान्यतरस्यां म्वोः"। शृण्वः । शृणुवः । शृण्मः । शृणुमः ॥ शुश्राव । शुश्रुवतुः । शुश्रोथ । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु । शृणुतात् । शृणु । शृणवानि । अशृणोत् । अशृण्वन् । अशृण्व । अशृणुव । शृणुयात् । श्रूयात् । अश्रौषीत् । अश्रौष्टां । अश्रोष्यत् ॥ द्रु गतौ । द्रवति । दुद्राव । क्रादिनियमान्नेट् । दुद्रोथ । दुद्रुव । द्रोता । द्रोष्यति । अद्रवत् । द्रवेत् । द्रूयात् । णिश्रीति चङ् । अदुद्रवत् । अद्रोष्यत् ॥ जि अभिभवे । अभिभवो—न्यूनीकरणं न्यूनीभवनञ्च । आद्ये सकर्मकः । शत्रून् जयति । द्वितीयेत्वकर्मकः । अध्ययनात् पराजयते । "विपराभ्यां जे"रित्यात्मनेपदम् । 'पराजेरसोढः' इत्यपादानत्वम् । सन्लिटोर्जेः । जिगाय । सर्वं 'जि जये' इतिवत् ॥

**अथात्मनेपदिनः ।** ष्मिङ् ईषद्धसने । स्मयते । सिष्मिये । सिष्मियिढ्वे । सिष्मियिध्वे । स्मेता । स्मेष्यते । स्मयतां । अस्मयत । स्मयेत । स्मेषीष्ट । अस्मेष्ट । अस्मेष्यत ॥ पूङ् गतौ । प्लवते । 'पुप्लवे लवणार्णवम्'। प्लोता । प्लोष्यते ॥ देङ् रक्षणे । दयते । लिटि दिग्ये इत्यादि । अप्रसिद्धत्वात् प्रक्रिया न दर्शिता । त्रैङ् पालने । त्रायते । तत्रे । त्राता । त्रायतां । त्रायस्व । कथं त्राहि ? असाधुरेवायं । अत्रायत । त्रायेत । त्रासीष्ट । अत्रास्त । अत्रास्यत ॥ डीङ् विहायसा गतौ । डयते । डिड्ये । डयिता । डयिष्यते । डयतां । अडयत । डयेत । डयीषीष्ट । अडयिष्ट । तॄ प्लवनतरणयोः । अयं परस्मैपदी ।

### ९७२. ऋत इद्धातोः ७-१-१००

ऋदन्तस्य धातोरङ्गस्य इदादेशः स्यात् । इति प्राप्ते ।

### इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन (वा)

इति गुणः । तरति । 'ऋच्छत्यृता' मितिगुणः । उपधावृद्धिः । ततार । गुणः । 'तॄफले'त्येत्वं । तेरतुः । तेरिथ ।

## ९७३. वृतो वा ७-२-३८

वृ ॠत इति च्छेदः। वृशब्देन वृङ्वृञोर्ग्रहणम्। 'ग्रहोऽलिटि दीर्घः' इत्यतोऽलिटि दीर्घ इत्यनुवर्तते। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। तरिता। तरीता। अलिटीति किम्? तेरिथ। तेरिव। तरिष्यति। तरीष्यति। अतरत्। तरेत्। इत्वम्।

## ९७४. हलि च ८-२-७७

र्वोरुपधाया दीर्घ इक इत्यनुवर्तते। सिपि धातोरित्यतो धातोरिति च। रेफवान्तस्य धातोरुपधाया दीर्घः स्याद्धलि। तीर्यात्। तीर्यास्तां। लुङि इटो दीर्घे प्राप्ते।

## ९७५. सिचि च परस्मैपदेषु ७-२-४०

न लिङि इत्यतो नेति वर्तते। वृत इटो दीर्घो न स्यात् परस्मैपदपरे सिचि। अतारीत्। अतारिष्टां। अतारिषुः। अतरिष्यत्। अतरीष्यत्। **अथाष्टावनुदात्तेतः आत्मनेपदिनः।** गुप गोपने। **तिज निशाने। मान पूजायां। बध बन्धने।**

## ९७६. गुप्तिज्किद्भ्यः सन् ३-१-५

एभ्यः सन् प्रत्ययः स्यात्। गुप गोपने, तिज निशाने, कित निवसे- इत्येते चुरादयः।

## ९७७. मान्बधान्शान्भ्यो दीर्घश्चाभ्यासस्य ३-१-६

मानादीनां सन् स्यात् अभ्यासस्य दीर्घश्च। 'मान पूजायां'। 'बध- बन्धने' 'दान अवखण्डने'। 'शान अवतेजने'–इत्येते चुरादयः। सन् प्रत्ययस्तु अर्थविशेषे भवति। तथाहि।

**गुपेर्निन्दायां। तिजेः क्षमायां। कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च। मानेर्जिज्ञासायां (वा)**

जिज्ञासाप्रयोज्यविचारे इत्यर्थः।

बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने (वा)

एष्वर्थेषु गुपादिभ्यः सन् । 'सनाद्यन्ता धातवः' । गुप् स इति स्थिते ।

### ९७८. सन्यङोः ६-१-९

षष्ठ्यन्तमेतत् । सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तः, अजादेस्तु द्वितीयस्य ॥ इति द्वित्वम् । अभ्यासकार्यम् । धातोरित्युच्चार्य अविहितत्वात् अत्र सनो नार्धधातुकत्वम् । तेन इड्गुणौ न । 'कर्तरि शप्' । जुगुप्सते । अत्र गुपिप्रभृतयो निन्दाद्यर्थेषु नित्यं सन्नन्ताः । सनि च गुपादय आत्मनेपदिनः । कितिः परस्मैपदी । अयमप्यात्मनेपदीति शेखरकृत् । दान्शानौ तूभयपदिनः । अधर्मात् जुगुप्सते । निन्दतीत्यर्थः । 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यपादानत्वम् । कास्प्रत्ययादित्याम् । जुगुप्साञ्चक्रे । जुगुप्सिष्यते । जुगुप्सतां । अजुगुप्सत । जुगुप्सेत । जुगुप्सिसीष्ट । अजुगुप्सिष्ट । तितिक्षते । चिकित्सति-चिकित्सते । रोगमपनयतीत्याद्यर्थः । विचिकित्सते । संशेते इत्यर्थः । मीमांसते । अत्र अभ्यासस्य 'सन्यतः' इतीत्वे दीर्घः । अभ्यासविकारेषु बाध्य-बाधकभावो नास्ति । बीभत्सते । दीदांसते । ऋजुमार्गेण प्रवर्तते । शीशांसते । तीक्ष्णीकरोति । अर्थान्तरे तु गोपायतीत्यादि । रभ राभस्ये । राभस्यं शीघ्री भावः । आङ्पूर्वस्तु प्रारम्भार्थकः । आरभते । आरेभे । रब्धा । रप्स्यते । आरभतां । आरभत । रभेत । रप्सीष्ट । आरब्ध । आरप्सातां । आरब्धाः । अत्र झलोझलीति सिज्लोपः । डु लभष् प्राप्तौ । लभते । लेभे । अलभत । अलब्ध । अलप्सातां । अलप्सत ॥ ष्वञ्ज परिष्वङ्गे ।

### ९७९. दंशसञ्जस्वञ्जां शपि ३-४-२५

### ९८०. रञ्जेश्च ६-४-२६

श्नान्नलोप इत्यतो नलोप इत्यनुवर्तते । दंशादीनां नलोपः स्यात् शपि । धातुषु सर्वत्र झलि परे श्रूयमाणोऽनुस्वारोऽनुनासिकश्च नकारज एव । अनुस्वारानुनासिकयोरसिद्धत्वात् नकार एवेति शास्त्रप्रवृत्तिः । स्वजते । परिनिविभ्य इति षत्वम् । परिष्वजते । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति

व्याकरणान्तरम् । देभतुः, सस्वजे इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते । सस्वजे-सस्वञ्जे । एवं लिटि द्वैरूप्यम् । 'सदेः परस्य लिटि' (८-३-११८) इति षत्वनिषेधकसूत्रे—

## स्वञ्जेरुपसंख्यानम् (वा)

अतोऽभ्यासात् परस्य षत्वं न । परिषस्वजे-परिषस्वञ्जे । रामन्तं परिषस्वजे (रामा. युद्ध. १-१५) । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । अस्वङ्क्त । अस्वङ्क्षातां । अस्वङ्क्षत ॥ हद पुरीषोत्सर्गे । हदते । जहदे । हत्ता । हत्स्यते । हदेत । अहत्त । अहत्सातां । अथ परस्मैपदिनः । स्कन्दिर् गतिशोषणयोः । स्कन्दति । आस्कन्दति । चस्कन्द । स्कन्ता । स्कन्त्स्यति । इरित्वादङ् वा । अनिदितामिति नलोपः । अस्कदत् । अस्कान्त्सीत् । हलन्तलक्षणा वृद्धिः । झलो झलीति सिचो लोपे अस्कान्तां ॥ यभ मैथुने । यभति । ययाभ । येभतुः । येभिथ । ययब्ध । यप्स्यति ॥ णम प्रह्वत्वे शब्दे च । नमति । ननाम । नेमतुः । नेमिथ । ननन्थ । नन्ता । नंस्यति । 'यमरमनमातां सक् च' । अनंसीत् । अनंसिष्टां । अनंस्यत् ॥ गम्लृ सृप्लृ गतौ ।

## ९८१. इषुगमियमां छः ७-३-७७

'ष्ठिवुक्लमुचमा'मित्यतः शितीत्यनुवर्तते । क्सस्याचीत्यतोऽचीति च । एषां छः स्यादजादौ शिति । गच्छति । अचीति किम् ? इष्यतीष्णात्योर्मा भूत् । इच्छतीति तुदादिः । जगाम । 'गमहन'त्युपधालोपः । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । गन्ता ।

## ९८२. गमेरिट् परस्मैपदेषु ७-२-५८

सोऽसिचिकृतेत्यतः से इत्यनुवृत्तम् । गमेः परस्य सकारादेरार्धधातुकस्य इट् स्यात् आत्मनेपदाभावे गमिष्यति । आत्मनेपदाभाव इति लाक्षणिकार्थाश्रयणात् संजिगमिषिता इति तृचि इट् सिध्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् । लृदित्वादङ् । अगमत् । अगमिष्यत् ॥ सर्पति । ससर्प ।

ससृपतुः । ससर्पिथ ।

## ९८३. अनुदात्तस्य च ऋदुपधस्यान्यतरस्याम् ६-१-५९

'सृजिदृशोरि'त्यतो झल्यमकितीति, 'आदेच' इत्यतः उपदेशे इति चानुवर्तते । उपदेशेऽनुदात्तो यः ऋदुपधः तस्य अम् वा स्यात् झलादावकिति परे । सृजिरनुदात्तः । स्रप्ता । सर्प्ता । स्रप्स्यति । सर्प्स्यति । असर्पत् । सर्पेत । सृप्यात् । लृदित्वादङ् । असृपत् । अस्रप्स्यत् । असर्प्स्यत् । अकितीति किम् ? सृप्तः ॥ यम उपरमे । यच्छति । इन्द्रियाणि नियच्छति । ययाम । येमिथ । ययन्थ । यन्ता । सक् । अयंसीत् । अयंसिष्टां । अयस्यत् ॥ तप संतापे । तपति । तताप । तेपतुः । तेपिथ । ततप्थ । तप्ता । तप्स्यति । हलन्तलक्षणा वृद्धिः । अताप्सीत् । 'झलो झलि' । अताप्तां । अतप्स्यत् ।

## ९८४. निसस्तपतावनासेवने ८-३-१०२

आसेवनं पौनःपुन्यम् । तपतौ परे निसः सस्य षः स्यादनासेवने । निष्टपति सुवर्णं सुवर्णकारः । संकृदग्निं स्पर्शयतीत्यर्थः । अनासेवन इति किम् ? निस्तपति सुवर्णं सुवर्णकारः । पुनःपुनरग्नौ द्रावयतीत्यर्थः ॥ त्यज हानौ । त्यजति । तत्याज । तत्यक्थ । तत्याज-तत्यज । त्यक्ता । त्यक्ष्यति । त्यजेत् । त्यज्यात् । अत्याक्षीत् । अत्यक्तां । अत्याक्षुः । अत्यक्ष्यत् ॥ षञ्ज सङ्गे । 'दंशसञ्जस्वञ्जा'मिति नलोपः । सजति । ससञ्ज । ससञ्जतुः । सङ्क्ता । सङ्क्ष्यति । सजतु । असजत् । सजेत् । 'अनिदिता'मिति नलोपः । सज्यात् । असाङ्क्षीत् । असाङ्क्तां । असङ्क्ष्यत् ॥ दृशिर् प्रेक्षणे । 'पाघ्राध्मे'ति शिति पश्यादेशः । पश्यति । ददर्श । ददृशतुः ।

## ९८५. विभाषा सृजिदृशोः ७-२-६५

'गमेरिट्' इत्यतः इडिति, 'अचस्तास्व'दित्यतः थलीतिचानुवर्तते । आभ्यां थल इड्वा स्यात् । भारद्वाजनियमात् थलि नित्यमिटि प्राप्ते विकल्पः । ददर्शिथ । पक्षे—

### ९८६. सृजिदृशोर्झल्यमकिति ६-१-५८

अनयोरमागमः स्यात् झलादावकिति। दद्रष्ठ। अत्र व्रश्चभ्रस्जेत्यादिना शस्य षः। थस्य ष्टुत्वं। अकिति किम्? दृष्टम्॥ ददर्श। ददृशिव। ददृशिम। द्रष्टा। द्रक्ष्यति। पश्यतु। पश्येत्। दृश्यात्। इरित्वादङ् वा। ङित्वात् गुणनिषेधे प्राप्ते।

### ९८७. ऋदृशोऽङि गुणः ७-४-१६

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि। अदर्शत्। अदर्शतां। अदर्शन्। अङभावे शलन्तत्वात् क्से प्राप्ते।

### ९८८. न दृशः ३-१-४७

दृशश्च्लेः क्सो न। सिच्। अमागमः। ऋकारस्य यण्। हलन्तलक्षणा वृद्धिः। शस्य षः। षढोः कः सि। अद्राक्षीत्। झलो झलि। अद्राष्टां। अद्राक्षुः॥ अद्राक्षीः। अद्राष्टं। अद्राष्ट। अद्राक्षं। अद्राक्ष्व। अद्राक्ष्म॥ अत्र सिचो लोपे व्रश्चेत्यादिना शस्य षः। अद्रक्ष्यत्॥ दंश दशने। दशनं द्रंष्ट्राव्यापारः। पृषोदरादित्वादनुनासिकलोपः। दंशसञ्जेति नलोपः। दशति। दंशतीति तु 'दशि दंशने' इति चुरादेर्णिजभावे रूपम्। ददंश। ददंशिथ-ददंष्ठ। दंष्टा। दङ्क्ष्यति। अदशत्। दशेत्। अनिदितामिति नलोपः। दश्यात्। अदाङ्क्षीत्। 'झलो झलि'। शस्य षः। अदांष्टां। अदाङ्क्षुः॥ कृष विलेखने। कर्षति। चकर्ष। चकर्षिथ। कर्ष्टा-क्रष्टा। अनुदात्तस्य चेति पक्षे अम्। कर्क्ष्यति। क्रक्ष्यति। अकर्षत्। कर्षेत्। कृष्यात्। अकर्क्ष्यत। अक्रक्ष्यत। दह भस्मीकरणे। दहति। ददाह। देहिथ-ददग्ध। दादेर्घातोर्घः। दग्धा। एकाच इति बशो भष्। धक्ष्यति। दहतु। अदहत्। अधाक्षीत्। अदाग्धां। अधाक्षुः। अधक्ष्यत्॥ **अथोभयपदिनः**॥ डु पचष् पाके। पचति-पपाच। पेचिथ-पपक्थ। पक्ष्यति। अपाक्षीत्। अपाक्तां अपक्ष्यत्॥ पचते। पेचे। पक्ता। पचतां। अपचत। पचेत। पक्षीष्ट। पक्षीयास्तां। अपक्त। अपक्षातां। अपक्ष्यत॥ भज सेवायां।

भजति । बभाज । भेजतुः । भेजुः । भेजिथ-बभक्थ । भक्ता । भक्ष्यति । अभाक्षीत् । अभाक्तां । अभक्ष्यत् ॥ भजते । भेजे । भक्ष्यते । अभजत । भजेत । भक्षीष्ट । अभक्त । अभक्षातां । अभक्ष्यत ॥ रञ्ज रागे । रञ्जेश्चेति शपि नलोपः । रजति । रज्यतीति दिवादौ । ररञ्ज । ररञ्जतुः । ररञ्जिथ-ररङ्क्थ । रङ्क्तात । रङ्क्ष्यति । रजतु । रजेत् । 'अनिदितामिति' नलोपः । रज्यात् । अराङ्क्षीत् ॥ रजते । ररञ्जे । रङ्क्तां । अरञ्जत । रञ्जेत । रङ्क्षीष्ट ॥ शप आक्रोशे । शपति । शशाप । शेपतुः । शेपिथ । शशप्थ । शेपिम । शप्ता । शपतु । अशाप्सीत् । अशाप्तां ॥ शपते । शेपे । शप्स्यते । अशपत । शपतां । शप्सीष्ट । अशप्त । अशप्स्यत ॥ यज देवपूजासङ्गतिकरणदानेषु । अत्र देवपूजा देवतोद्देशेन द्रव्यत्यागः । यजति । णलिद्वित्वे य याज इति स्थिते ।

### ९८९. लिट्यभ्यासस्योभयेषाम् ६-१-१७

वचिस्वपीति सूत्रोपात्ताः ग्रहिज्या इति सूत्रोपात्ताश्च धातवः उभयपदेन गृह्यन्ते । वच्यादीनां ग्रह्यादीनाञ्च अभ्यासस्य संप्रसारणं स्याल्लिटि । इति संप्रसारणे पूर्वरूपम् । इयाज ।

### ९९०. वचिस्वपियजादीनां किति ६-१-१५

वचिस्वप्योः यजादीनाञ्च संप्रसारणं स्यात् किति । 'यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ इत्यपि । ह्वेञ् वदिः श्वयतिश्चैव यजाद्याः स्युरिमे नव' ॥ यज अतुस् इति स्थितेऽनेन संप्रसारणे पुनःप्रसङ्गविज्ञानाद् द्वित्वम् । सवर्णदीर्घः । ईजतुः । ईजुः ॥ एवञ्चात्र लिटि किति वच्यादिसूत्रेण संप्रसारणे द्वित्वम् । अकिति लिटि तु लिट्यभ्यासस्येति सूत्रेण अभ्यासस्य संप्रसारणमिति स्थितिः । इयजिथ-इयष्ठ । अत्र व्रश्चभ्रस्जेत्यादिना षः । इयाज-इयज । ईजिव । यष्टा । यक्ष्यति । यजेत् । इज्यात् । अयाक्षीत् । व्रश्चेत्यादिना षः अयाष्टां । अयाक्षुः । यजते । ईजे । अयजत । यजेत । यक्षीष्ट । अयष्ट । अयक्षातां । अयक्ष्यत ॥ डु वप् बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं

गर्भाधानञ्च । अयं छेदनेऽपि । केशान् वपति । निर् पूर्वोवापिर्दाने । पिण्डं निर्वपति । उवाप । ऊपतुः । वप्ता । वप्स्यति । वपेत् । उप्यात् । अवाप्सीत् । अवाप्तां । अवप्स्यत् । वपते । ऊपे । वपेत । वप्सीष्ट । अवप्त । अवप्सातां ॥ वह प्रापणे । वहति । उवाह । उवहिथ । इडभावे । उवोढ । ढत्वधत्वष्टुत्वढलोपाः । अवाक्षीत् । अवोढां । अवाक्षुः । अवाक्षीः । अवोढां । अवोढ । अवाक्षं । अवाक्ष्व । अवाक्ष्म ॥ 'सहिवहोरोदवर्णस्य' । वोढा । वक्ष्यति । उह्यात् । वहते । ऊहे । वहतां । वहेत । वक्षीष्ट ॥ अवोढ । अवक्षातां । अवक्षत् । अवोढाः । अवक्षाथां । अवोढ्वं । अवक्षि । अवक्ष्वहि । अवक्ष्महि ॥ वस निवासे । परस्मैपदी । वसति । उवास ।

## ९९१. शासिवसिघसीनाञ्च ८-३-६०

इणकुभ्यां परस्यैषां सस्य षः स्यात् । आदेशप्रत्ययावयवत्वाभावादप्राप्तं षत्वमनेन विधीयते । ऊषतुः । ऊषुः । उवसिथ । उवस्थ । उवास । उवस । ऊषिव । वस्ता ।

## ९९२. सःस्यार्धधातुके ७-४-४९

'अच उपसर्गात्तः' इत्यतस्त इति वर्तते । सस्य तः स्यात् सकारादावार्धधातुके । वत्स्यति । आर्धधातुक इति किम् ? आस्से । वस्से ॥ वसेत् । उष्यात् । अवात्सीत् । अवात्तां । अवात्सुः । अवत्स्यत् ॥ वेञ् तन्तुसन्ताने । वयति ।

## ९९३. वेञो वयिः २-४-४१

लिट्यन्यतरस्यामित्यतो लिटीति वर्तते । वेञो वयिरादेशः स्याल्लिटि । वयिरिति धातुनिर्देशे इक्प्रत्ययः । तेन इदितो नुम् धातोरिति नुम् न लिट्यभ्यासस्योभयेषामित्यभ्यासस्य संप्रसारणम् । उवाय । अतुसि—

## ९९४. ग्रहिज्यावयिव्यधिवष्टिविचति वृश्चति पृच्छति भृज्जतीनां ङिति च ६-१-१६

एषां किति ङिति च संप्रसारणं स्यात् । यकारस्य प्राप्ते ।

### ९९५. लिटि वयो यः ६-१-३८

'न संप्रसारणे' इत्यतो नेति संप्रसारणमिति च वर्तते। वयो यस्य संप्रसारणं न स्याल्लिटि। वस्य संप्रसारणम्। सवर्णदीर्घः ऊयतुः। ऊयुः। वयेस्तासावभावात् थलि क्रादिनियमान्नित्यमिट्। उवयिथ॥ एकाच उपदेश इत्यात्वम्। वाता। वास्यति। वयतु। अवयत्। वयेत्। ऊयात्। यमरमेति सक्। अवासीत्। अवासिष्टां। अवास्यत्॥ वयते। ऊये। वयतां। अवयत। वयेत। वासीष्ट। अवास्त। अवासातां। अवास्यत॥ ह्वेञ् स्पर्धायां शब्दे च। ह्वयति।

### ९९६. अभ्यस्तस्य च ६-१-३३

'ह्वः संप्रसारणमि'ति सूत्रमनुवर्तते। अभ्यस्तस्त यौ ह्वयतिरिति वैयधिकरण्येनान्वयः। कश्चाभ्यस्तस्य ह्वयतिः? निमित्तम्। अभ्यस्तनिमित्तभूतस्य अभ्यस्तीभविष्यतो ह्वयतेः संप्रसारणं स्यात्। ततो द्वित्वं। जुहाव। णलि आत्वे संप्रसारणे पूर्वरूपे द्वित्वम्। उकारस्य वृद्धिरावादेशश्च। कित्युवङ्। जुहुवतुः। जुहुवुः। जुहोथ-जुहविथ। जुहाव-जुहव। जुहुविव। ह्वाता। ह्वास्यति। अह्वयत्। ह्वयेत्। हूयात्। लुङि सिचि प्राप्ते।

### ९९७. लिपिसिचिह्वश्च ३-१-५३

एभ्यश्च्लेरङ् स्यात्। 'आतो लोप इटि च'। अह्वत्। अह्वतां। अह्वन्। अह्वस्यात्॥ ह्वयते। जुहुवे। ह्वास्यते। अह्वयत। ह्वयेत। ह्वासीष्ट।

### ९९८. आत्मनेपदेष्वन्यतरस्याम् ३-१-५४

लिप्यादिभ्यश्च्लेरङ् वा स्यादात्मनेपदेषु। अह्वत। अह्वेता। अह्वन्त। पक्षे। अह्वास्त। अह्वासातां। अह्वासत। अह्वास्यत॥ वद व्यक्तायां वाचि। परस्मैपदी सेट्। वदति। अच्छ वदति। अच्छ गत्यर्थवदेषु इति गतिसंज्ञा। उवाद। ऊदतुः। उवदिथ। वदिता। वदिष्यति। अवदत्। वदतु। वदेत्। उद्यात्। वदव्रजेति वृद्धिः। अवादीत्। अवादिष्टां। अवादिषुः। अवदिष्यत्। टुओश्वि गतिवृद्ध्योः। परस्मैपदी। सेट्। श्वयति। शिश्वाय। अत्रा-

गर्भाधानञ्च । अयं छेदनेऽपि । केशान् वपति । निर् पूर्वो वापिर्दाने । पिण्डं निर्वपति । उवाप । ऊपतुः । वप्ता । वप्स्यति । वपेत् । उप्यात् । अवाप्सीत् । अवाप्तां । अवप्स्यत् । वपते । ऊपे । वपेत । वप्सीष्ट । अवप्त । अवप्सातां ॥ वह प्रापणे । वहति । उवाह । उवहिथ । इड्भावे । उवोढ । ढत्वधत्वष्टुत्वढलोपाः । अवाक्षीत् । अवोढां । अवाक्षुः । अवाक्षीः । अवोढां । अवोढ । अवाक्षं । अवाक्ष्व । अवाक्ष्म ॥ 'सहिवहोरोदवर्णस्य' । वोढा । वक्ष्यति । उह्यात् । वहते । ऊहे । वहतां । वहेत । वक्षीष्ट ॥ अवोढ । अवक्षातां । अवक्षत् । अवोढाः । अवक्षाथां । अवोढ्वं । अवक्षि । अवक्ष्वहि । अवक्ष्महि ॥ वस निवासे । परस्मैपदी । वसति । उवास ।

## ९९१. शासिवसिघसीनाञ्च ८-३-६०

इण्कुभ्यां परस्यैषां सस्य षः स्यात् । आदेशप्रत्ययावयवत्वाभावादप्राप्तं षत्वमनेन विधीयते । ऊषतुः । ऊषुः । उवसिथ । उवस्थ । उवास । उवस । ऊषिव । वस्ता ।

## ९९२. सः स्यार्धधातुके ७-४-४९

'अच उपसर्गात्तः' इत्यतस्त इति वर्तते । सस्य तः स्यात् सकारादावार्धधातुके । वत्स्यति । आर्धधातुक इति किम् ? आस्से । वस्से ॥ वसेत् । उष्यात् । अवात्सीत् । अवात्तां । अवात्सुः । अवत्स्यत् ॥ वेञ् तन्तुसन्ताने । वयति ।

## ९९३. वेञो वयिः २-४-४१

लिट्यन्यतरस्यामित्यतो लिटीति वर्तते । वेञो वयिरादेशः स्याल्लिटि । वयिरिति धातुनिर्देशे इक्प्रत्ययः । तेन इदितो नुम् धातोरिति नुम् न लिट्यभ्यासस्योभयेषामित्यभ्यासस्य संप्रसारणम् । उवाय । अतुसि—

## ९९४. ग्रहिज्यावयिव्यधिवष्टिविचति वृश्चति पृच्छति भृज्जतीनां ङिति च ६-१-१६

एषां किति ङिति च संप्रसारणं स्यात् । यकारस्य प्राप्ते ।

## ९९५. लिटि वयो यः ६-१-३८

'न संप्रसारणे' इत्यतो नेति संप्रसारणमिति च वर्तते। वयो यस्य संप्रसारणं न स्याल्लिटि। वस्य संप्रसारणम्। सवर्णदीर्घः ऊयतुः। ऊयुः। वयेस्तासावभावात् थलि क्रादिनियमान्नित्यमिट्। उवयिथ॥ एकाच उपदेश इत्यात्वम्। वाता। वास्यति। वयतु। अवयत्। वयेत्। ऊयात्। यमरमेति सक्। अवासीत्। अवासिष्टां। अवास्यत्॥ वयते। ऊये। वयतां। अवयत। वयेत। वासीष्ट। अवास्त। अवासातां। अवास्यत॥ ह्वेञ् स्पर्धायां शब्दे च। ह्वयति।

## ९९६. अभ्यस्तस्य च ६-१-३३

'ह्वः संप्रसारणमि'ति सूत्रमनुवर्तते। अभ्यस्तस्त यौ ह्वयतिरिति वैयधिकरण्येनान्वयः। कश्चाभ्यस्तस्य ह्वयतिः? निमित्तम्। अभ्यस्त-निमित्तभूतस्य अभ्यस्तीभविष्यतो ह्वयतेः संप्रसारणं स्यात्। ततो द्वित्वं। जुहाव। णलि आत्वे संप्रसारणे पूर्वरूपे द्वित्वम्। उकारस्य वृद्धिरावादेशश्च। क्वित्युवङ्। जुहुवतुः। जुहुवुः। जुहोथ-जुहविथ। जुहाव-जुहव। जुहुविव। ह्वाता। ह्वास्यति। अह्वयत्। ह्वयेत्। हूयात्। लुङि सिचि प्राप्ते।

## ९९७. लिपिसिचिह्वश्च ३-१-५३

एभ्यश्च्लेरङ् स्यात्। 'आतो लोप इटि च'। अह्वत्। अह्वतां। अह्वन्। अह्वस्यात्॥ ह्वयते। जुहुवे। ह्वास्यते। अह्वयत। ह्वयेत। ह्वासीष्ट।

## ९९८. आत्मनेपदेष्वन्यतरस्याम् ३-१-५४

लिप्यादिभ्यश्च्लेरङ् वा स्यादात्मनेपदेषु। अह्वत। अह्वेता। अह्वन्त। पक्षे। अह्वास्त। अह्वासातां। अह्वासत। अह्वास्यत॥ वद व्यक्तायां वाचि। परस्मैपदी सेट्। वदति। अच्छ वदति। अच्छ गत्यर्थवदेषु इति गतिसंज्ञा। उवाद। ऊदतुः। उवदिथ। वदिता। वदिष्यति। अवदत्। वदतु। वदेत्। उद्यात्। वदव्रजेति वृद्धिः। अवादीत्। अवादिष्टां। अवादिषुः। अवदिष्यत्। टुओश्वि गतिवृद्ध्योः। परस्मैपदी। सेट्। श्वयति। शिश्वाय। अत्रा-

भ्यासस्य लिट्यभ्यासस्येति संप्रसारणं न। 'श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः' इति वार्तिकात्।

९९९. विभाषा श्वेः ६-१-३०

लिड्यङोरित्यनुवर्तते। श्वयतेः संप्रसारणं वा स्यात् लिटि यङि च। इति संप्रसारणाभावपक्षे। शिश्वियतुः। संप्रसारणे तु शुशाव। शुशुवतुः। श्वयिता। श्वयिष्यति। श्वयेत्। आशिषि कित्वाद्वचिस्वपीति संप्रसारणम्। 'अकृत्सार्वधातुकयोर्दीर्घः' शूयात्। अश्वयीत्। ह्म्यन्तेति न वृद्धिः। अश्वयिष्टां। अश्वयिषुः॥

॥ इति भ्वादयः॥

---

## अथ अदादयः

अद भक्षणे। परस्मैपदी। अनिट्। अदादिप्रभृतयश्चुराद्यन्ताः भ्वाद्यन्तर्गणाः। अत एव भ्वादित्वादेषां धातुत्वम्।

१०००. अदिप्रभृतिभ्यः शपः २-४-७२

'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यतो लुगित्यनुवर्तते। अदिप्रभृतिभ्यः परस्य शपो लुक् स्यात्। अत्ति। अत्तः। अदन्ति॥ अत्सि। अत्थः। अत्थ॥ अद्मि। अद्वः। अद्मः॥ पदान्तत्वाभावात् दस्य नानुनासिकः।

१००१. लिट्यन्यतरस्याम् २-४-४०

'अदो जग्धिः' इत्यतः अदः इति 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते। अदो घस्लृ वा स्याल्लिटि। जघास। अतुसि 'गमहने' त्युपधालोपः। तस्य चर्विधिं प्रति स्थानिवत्त्वनिषेधात् चर्त्वेन ककारः। 'शासिवसी'ति षत्वम्। जक्षतुः। जक्षुः। घसेस्तासावभावात् भारद्वाजनियमाप्राप्त्या थलि नित्यमिट्। जघसिथ। पक्षे। आद। आदतुः। आदुः। इडत्यर्तिव्ययतीनाम्। आदिथ। आदिव॥ अत्ता। अत्स्यति। अत्तु।

## १००२. हुझल्भ्यो हेर्धिः ६-४-१०१

जुहोतेर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अदानि ।।

## १००३. अदः सर्वेषाम् ७-३-१००

'गुणोऽपृक्ते' इत्यतोऽपृक्त इति, 'तुरुस्तुशम्यमं' इत्यतः सार्वधातुक इति, 'अड् गार्ग्यगालवयो'रित्यतः अडिति चानुवर्तते । अदः परस्यापृक्तसार्वधातुकस्याडागमः स्यात् सर्वमतेन । आदत् । आत्तां । आदन् ।। आदः । आत्तं । आत्त ।। आदं । आद्व । आद्म ।। अद्यात् । अद्यातां । अद्युः । अद्यात् । अद्यास्तां । अद्यासुः ।

## १००४. लुङ्सनोर्घस्लृ २-४-३७

अदो घस्लृ स्याल्लुङि सनि च । लृदित्वादङ् । अघसत् । आत्स्यत् । हन हिंसागत्योः । परस्मैपदी । हन्ति । 'नेर्गदे'ति णत्वं । प्रणिहन्ति ।

## १००५. अनुदात्तोपदेश वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६-४-३७

अनुनासिकेति लुप्तषष्ठीकं पृथक्पदम् । तच्च अनुदात्तोपदेशादेर्विशेषणम् । तदन्तविधिः । अनुनासिकान्तानामनुदात्तोपदेशानां वनति तनोत्यादीनाञ्च लोपः स्यात् झलादौ क्ङिति । 'अलोऽन्त्यस्ये'त्यन्त्यस्य लोपः । तत्र अनुदात्तोपदेशाः 'एकाच उपदेशेऽनुदात्तात्' इति सूत्रस्य विषयभूता अनिटः । तेष्वनुनासिकान्तानामत्र ग्रहणम् । तेन मुचनहोर्व्यावृत्तिः । एतदर्थमेव अनुनासिकेति पृथक्पदं व्याख्यातम् । तथाच यमि रमि नमि गमिं हनि मन्यतयोऽनुदात्तोपदेशाः प्रकृते गृह्यन्ते । वन शब्दे, वन संभक्तौ, वन हिंसायामिति च भ्वादिरुदात्तोपदेश इति पृथग् ग्रहणम् । तनु क्षणु क्षिणु ऋणु तृणुघृणुवनुमनु—एते तनोत्यादयः । अनुदात्तोपदेश इति किम् ? शान्तः । दान्तः । अनुनासिकान्तानामिति किम् ? मुक्तः । नद्धः । झलि किम् ? गम्यते । नम्यते । क्ङितीति किम् ? गन्ता । यन्ता ।। प्रकृते तसि । हतः । 'गमहने'त्युपधालोपः ।

हो हन्तेरिति कुत्वम् । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । 'हो हन्तेरिति' कुत्वम् । जघान । जघ्नतुः । जघ्नुः ।

१००६. अभ्यासाच्च ७-३-५५

अभ्यासात् परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ-जघन्थ । जघ्नथुः । जघ्न । जघान-जघन । जघ्निव । जघ्निम ।। हन्ता । ऋद्धनोरितीट् । हनिष्यति । हन्तु । हतात् । हतां । घ्नन्तु ।

१००७. हन्तेर्जः ६-४-३६

'शा हौ' इत्यतो हावित्यनुवर्तते । हन्तेर्जः स्यात् हौ परे । जहि । अत्र 'अतो हे'रिति लुङ् न । आभीयतया जादेशस्यासिद्धत्वात् । हतं । हत । हनानि । हनाव । वयं हनाम द्विषतः (शिशु. २-३५) । अहन् । अत्र 'संयोगान्तस्य लोपः । हल्ङ्याबादिलोपो' वा । अहतां । अघ्नन् । अहन् । अहतं । अहत । अहनं । अहन्व । अहन्म । हन्यात् । आशिषि तु—

१००८. आर्धधातुके २-४-३५

इत ऊर्ध्वं 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' (२-४-५८) इति यावत् आर्धधातुकाधिकारः ।

१००९. हनो वध लिङि २-४-४७

१०१०. लुङि च २-४-४८

हनो वध इत्यदन्त आदेशः स्यादार्धधातुके लिङि लुङि च। आर्धधातुके इति विषयसप्तमी । तेनार्धधातुकोपदेशेऽकारान्तत्वात् 'अतो लोपः' । वध्यात् । वध्यास्तां । अवधीत् । वधादेशस्यानेकाच्त्वात् 'एकाचउपदेशे' इतीण् निषेधो न । अवधिष्टां । 'अतो हलादे'रिति वृद्धिस्तु न । अल्लोपस्य स्थानिवत्त्वात् । अवधिष्यत् ।। **अथोभयपदिनः ।** द्विष अप्रीतौ । द्वेष्टि । द्विष्टः । द्विषन्ति । द्वेक्षि । दिद्वेष । दिद्विषतुः । द्वेष्टा । द्वेक्ष्यति । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि । अद्वेट् । अद्विष्टां ।

## १०११. द्विषश्च ३-४-११२

'झेर्जुस्', लङः शाकटायनस्ये 'त्यनुवर्तते। द्विषः परस्य लङो झेर्जुस् वा स्यात्। अद्विषुः। अद्विषन्। अद्वेषम्। अद्विष्ट। द्विष्यात्। द्विष्यातां। आशिषि द्विष्यास्तां। लुङि अद्विक्षत्। 'शल इगुपधादिति क्सः'। अद्विक्षतां। अद्विक्षन्। अद्वेक्ष्यत्। द्विष्टे। दिद्विषे। द्वेष्टा। द्वेक्ष्यते। द्विष्टां। द्विक्ष्व। द्वेषै। द्वेषावहै। अद्विष्ट। द्विषीत। लिङ् सिचावात्मनेपदेषु' इति किस्त्वम्। द्विक्षीष्ट। लुङि अद्विक्षत। 'क्सस्याचि'। अद्विक्षातां। अद्विक्षन्त। अद्वेक्ष्यत॥ दुह प्रपूरणे। प्रपूरणमत्र क्षारणम्। दोग्धि। दुग्धः। दुहन्ति। धोक्षि। दुदोह। दुदुहतुः। दुदोहिथ। दोग्धा। दोग्धु। दुग्धात्। दुग्धि। दोहानि। लङि अधोक्। अदुग्धां। अदुहन्। दुह्यात्। दुह्यास्तां। लुङि क्सः। अधुक्षत्। अधोक्ष्यत्॥ तङि दुग्धे। दुदुहे इत्यादि॥ लिह आस्वादने। शपो लुकि ढत्वधत्वष्टुत्वढलोपाः। लेढि। लीढः। लिहन्ति। 'षढोः कः सि'। लेक्षि। लिलेह। लिलिहतुः। लीढा। लेक्ष्यति। लेढु। लीढात्। लीढि। लेहानि। लिह्यात्। लिह्यास्तां। अलेट्। क्सः। अलिक्षत्। अलेक्ष्यत्॥ लीढे। लिलिहे इत्यादि॥ चक्षिङ् व्यक्तायां वाचि। इकारोऽनुदात्तो युजर्थः। 'अनुदात्तेतश्च हलादेः' इति युच्। विचक्षणः। नुम् तु न। इदिदन्तस्येति व्याख्यानात्। ङकारस्तु 'अनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमिति' ज्ञापनार्थः। तेन स्फायन् इत्यादिसिद्धमिति केचित्। अन्तेदित्त्वप्रयुक्तनुम्वारणेन चारितार्थ्यात् ज्ञापकत्वं न युक्तम्। स्फायन् इत्याद्यसाध्विति शेखरकृत्। स्कोरिति कलोपः। ष्टुत्वम्। चष्टे। चक्षाते। 'आर्धधातुके' इत्यधिकृत्य।

## १०१२. चक्षिङः ख्याञ् २-४-५४

## १०१३. वा लिटि २-४-५५

चक्षिङः ख्याञादेशः स्यादार्धधातुके, लिटि तु वा। ञित्वात् ख्याञ् उभयपदी। चख्यौ। चख्यतुः। चख्यिथ। चख्याथ। चख्ये। चख्याते।

पक्षे चचक्षे । चचक्षाते । ख्याता । ख्यास्यति । ख्यास्यते । चष्टां । चक्षातां । चक्ष्व । चक्षै । अचष्ट । चक्षीत । आशिषि चक्षीयास्तां । ख्यायात् । 'वान्यस्य संयोगादेः' । ख्येयात् । ख्यासीष्ट । लुङि तु—

१०१४, अस्यतिवक्तिख्यातिभ्योऽङ् ३–१–५२

एभ्यश्च्लेरङ् स्यात् । अख्यत् । अख्यत । अख्यास्यत् । अख्यास्यत । चक्षिङ् धातुः प्रायेणाङ्पूर्वः । आचष्टे । व्याचष्टे । क्वचिद्वर्जनार्थोऽपि । सञ्चष्टे । वर्जयतीत्यर्थः । 'संख्याज्ञानं प्रवक्ष्यामि परिसंख्यानदर्शनम्' (म. भा. मोक्ष. ३०६–१६) परिसंख्यानं वर्जनम् ॥ अथात्मनेपदिनः । ईड स्तुतौ । ईट्टे ।

१०१५. ईशः से ७–२–७७

१०१६. ईडजनोर्ध्वे च ७–२–७८

पूर्वसूत्रमनुवर्तते । 'इडत्यर्ति इत्यतः इडिति, रुदादिभ्यः सार्वधातुके इत्यतः सार्वधातुक इत्यनुवर्तते । ईशीडजनां सार्वधातुकयोः से ध्वे शब्दयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । ईड्वहे । ईडाञ्चक्रे । ईडिता । ईडिष्यते । ईट्टां । एकदेशविकृतस्यानन्यत्वात् । ईडिष्व । ऐट्ट । विकृतिग्रहणेन प्रकृतेरग्रहणम् । तेनध्वेग्रहणेन प्रकृतेर्ध्वमोग्रहणं न । ऐड्ढ्वम् । ईडीत । ईडिषीष्ट । ऐडिष्ट ॥ ईश ऐश्वर्ये । व्रश्चेति षः । ईष्टे । ईशाते । ईशिषे । ईशिध्वे । ईशाञ्चक्रे । ईष्टां ईशिष्व । ऐष्ट । ऐड्ढ्वं ॥ आस उपवेशने । आस्ते । 'धि चेति' सलोपः । आध्वे । 'दयायासश्च' त्याम् । आसाञ्चक्रे । आसित्वा । आसिष्यते । आस्तां । आस्त । धि चेति सलोपः । आध्व । आसि । आस्वहि ॥ आसीत । आसिषीष्ट । आसिष्ट । आसिषातां । आसिष्यत ॥ आङः शासु इच्छायां । आशास्ते । आशासाते । आङ्पूर्वत्वं प्रायिकम् । तेन 'नमोवाकं-प्रशास्महे' इति सिद्धम् । आसिवदन्यानि रूपाणि ॥ वस आच्छादने । वस्ते । वसाते । वसते । वस्से । वध्वे । ववसे । वसिता । वस्तां । अवस्त । वसीत । अवसिष्ट ॥ शिजि अव्यक्ते शब्दे ।

शिङ्क्ते । शिञ्जाते । शिशिञ्जे । शिञ्जिष्यते । शिङ्क्तां । अशिङ्क्त । अशिञ्जातां । शिञ्जीत । अशिञ्जिष्ट ॥ षूङ् प्राणिगर्भविमोचने । सूते । सुवाते । सुवते । सूषे । सुषुवे । सुषुविषे । क्रादि नियमान्नित्यमिट् । ऊदित्वादिड्विकल्पो लिटोऽन्यत्र । सोता-सविता । सोष्यते-सविष्यते । सूतां । 'भूसुवोस्तिङि ति' गुणनिषेधः । सुवै । सुवावहै । असूत । सुवीत । सोषीष्ट-सविषीष्ट । असोष्ट-असवीष्ट । असोष्यत-असविष्यत ॥ शीङ् स्वप्ने ।

**१०१७. शीङः सार्वधातुके गुणः ७-४-२१**

'क्ङिति च' इत्यस्यापवादः । शेते । शयाते ।

**१०१८. शीङो रुट् ७-१-६**

'झोऽन्तः' इत्यतो झ इति, 'अदभ्यस्तात्' इत्यतः अदिति च वर्तते । शीङो झस्यातो रुडागमः स्यात् । शेरते । शेषे । 'धि च' । शेध्वे । शये । शेवहे । शेमहे ॥ शिश्ये । शयिता । शयिष्यते । शेतां । शेरतां । शेष्व । शयै । शयीत । शयिषीष्ट । अशयिष्ट ॥ **अथ परस्मैपदिनः ।** यु मिश्रणेऽमिश्रणे च । सेट् ।

**१०१९. उतो वृद्धिर्लुकि हलि ७-३-८९**

'नाभ्यस्तस्याचिपिति सार्वधातुके' इति सूत्रमचिवर्जमनुवर्तते । लुग्विषये उतो वृद्धिः स्यात् हलादौ पिति सार्वधातुके, न त्वभ्यस्तस्य । यौति । नाभ्यस्तस्येति किम् ? यङ्लुकि योयोति । युतः । युवन्ति । योषि । यौमि । युयाव । युयुवतुः । युयविथ । उवङं बाधित्वा परत्वात् गुणः । यविता । यविष्यति यौतु । युतात् । युहि । यवानि । अयौत् । अयुतां । अयुवन् । युयात् । इह वृद्धिर्न । विशेषविहितेन ङित्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत् । अयाविष्टां । अयविष्यत् ॥ रु शब्दे । सेट् ।

**१०२०. तुरुस्तुशम्यमः सार्वधातुके ७-३-९५**

'उतो वृद्धिर्लुकि हली' त्यतो हलीति, 'भूसुवो' रित्यतस्तिङीति, 'ब्रुव ईट्' इत्यत ईडिति, 'यङो वे' त्यतो वेति चानुवर्तते । एभ्यः परस्य सार्व-

धातुकस्य हलादेस्तिङ: ईड् वा स्यात् । ईट्पक्षे उतो वृद्धिर्न । हलाद्यभावात् । रविति-रोति । ईडयमपितोऽपि । पितीत्यननुवृत्तेः । रुवीत:-रुत: । हलादे: किम् ? रुवन्ति । तिङ: किम् ? शाम्यति । सार्वधातुके किम् ? आशिषि रूयात् । रवीषि-रौषि । रवीमि-रौमि । रुवीव:-रुव: ॥ रुराव । रविता । रविष्यति । रवीतु-रौतु । रुवीहि-रुहि । रवाणि । अरवीत्-अरौत् । अरुवीतां अरुतां । रुवीयात्-रुयात् । रूयात् । अरावीत् । अराविष्टां । अरविष्यत् ॥ णु स्तुतौ । सेट् । नौति । नुनाव । नविष्यति । युधातुवद्रूपाणि । टु क्षु शब्दे । सेट् । क्षौति । युधातुवत् ॥ ष्टुञ् स्तुतौ । उभयपदी । अपित् । स्तौति । स्तुत: । स्तुवन्ति । स्तवीति । स्तुवीत: । स्तौषि-स्तवीषि । स्तौमि-स्तवीमि । तुष्टाव । क्रादित्वान्नेट् । तुष्टोथ । तुष्टुव । तुष्टुम । स्तोता । स्तोष्यति । लङि अस्तौत् । अस्तवीत् । अस्तुतां-अस्तुवितां । अस्तौ:-अस्तवी: । स्तुयात्-स्तुवीयात् । अशिषि स्तूयात् । लुङि 'स्तुसुधूञ्भ्य: परस्मैपदेषु' इति इट् । अस्तावीत् । अस्ताविष्टां । अस्तोष्यत् ॥ स्तुते-स्तुवीते । तुष्टुवे । तुष्टुषे । स्तुतां-स्तुवीतां । अस्तुत-अस्तुवीत । स्तुवीतेत्यादि ॥ ब्रूञ् व्यक्तायां वाचि ।

## १०२१. ब्रुव ईट् ७-३-९३

'नाभ्यस्तस्ये'त्यत: पिति सार्वधातुक इति, 'उतोवृद्धि'रित्यतो हलीति चानुवर्तते । ब्रुव: परस्य हलादे: पित: सार्वधातुकस्य ईट् स्यात् । ब्रवीति । ब्रुत: । ब्रुवन्ति । सार्वधातुकस्येति किम् ? उवक्थ । ब्रवीषि । ब्रवीमि ॥

## १०२२. ब्रुव: पञ्चानामादित आहो ब्रुव: ३-४-८४

'विदो लटो वा' इत्यतो लट इति वर्तते । परस्मैपदानां णलतुसुस् इत्याद्यनुवर्तते । ब्रुव: परस्य लट: परस्मैपदानां पञ्चानामादिभूतानां णलादय: पञ्च वा स्यु:, तत्संनियोगेन ब्रुव आहशब्दादेश: । अकार उच्चारणार्थ: । आह । आहतु: । आहु: ।

### १०२३. आहस्थः ८–२–३५

'झलो झली 'त्यतो झलीति वर्तते। आह शब्दस्य थादेशः स्यात् झलि परे। चर्त्वम्। आत्थ। थलो ब्रुव ईट् तु न। झलि थत्वविधानसामर्थ्यात्। आहथुः। एषां पञ्चानां ब्रवीतीत्याद्यर्थः॥ आर्धधातुकाधिकारे।

### १०२४. ब्रुवो वचिः २–४–५३

ब्रुवो वचिरादेशः स्यादार्धधातुके। उवाच। ऊचतुः। ऊचुः। वक्ता। वक्ष्यति। ब्रवीतु-ब्रूतात्। ब्रूतां। ब्रूहि। ब्रवाणि। अब्रवीत्। अब्रूतां। अब्रवं। अब्रूव। ब्रूयात्। उच्यात्। लुङि–'अस्यति वक्ती 'त्यङ्।

### १०२५. वच उम् ७–४–२०

'ऋदृशोऽङि गुणः' इत्यतोऽङीति वर्तते। वच उमागमः स्यादङि। अवोचत्। अवोचः। अवोचं। अवक्ष्यत्॥ ब्रूते। ब्रुवाते। ऊचे। वक्ता। वक्ष्यते। ब्रूतां। अब्रूत। ब्रुवीत। [illegible]ष्ट। अवोचत। अवक्ष्यत॥ अथ परस्मैपदिनः। इण् गतौ। एति। इतः। अन्तौ इयङि प्राप्ते।

### १०२६. इणो यण् ६–४–८१

'अचि श्नु धातु' इत्यतोऽचीत्यनुवर्तते। अङ्गाधिकारात् प्रत्यय इति लभ्यते। इणो यण् स्यादजादौ प्रत्यये। यन्ति। एषि। इयाय। अत्र द्वित्वे उत्तरखण्डस्य वृद्धौ आयादेशे अभ्यासस्यासवर्णे इति इयङ्। इयतुस् इति स्थिते।

### १०२७. दीर्घ इणः किति ७–४–६९

'अत्र लोपोऽभ्यासस्ये 'त्यतोऽभ्यासस्येति, 'व्यथोलिटी 'त्यतो लिटीति च वर्तते। इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि। ईयतुः। ईयुः। इययिथ-इयेथ। एता। एष्यति। एतु-इतात्। यन्तु। इहि। अयानि। अयाव। अयाम। ऐत। ऐतां। आयन्। ऐः। आयं। ऐव। इयात्। इयातां। ईयात्। ईयास्तां।

### १०२८. इणो गा लुङि २-४-४५

इणो गादेशः स्याल्लुङि । 'गातिस्थे'ति सिचो लुक् । अगात् । अगातां । अगुः ॥ इङ् अध्ययने । नित्यमधिपूर्वः । अधीते । इयङि सवर्ण दीर्घः । अधीयाते । अधीयते । अधीषे । अधीध्वे । अधीये । अधीवहे ।

### १०२९. गाङ् लिटि २-४-४९

इङो गाङादेशः स्याल्लिटि विवक्षिते । अधिजगे । 'आतो लोप इटिचे'-त्यालोपः । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधीतां । अधीयातां । अधीष्व । अध्ययै । अध्ययावहै । अध्यैत । परत्वादियङ् । तत आट् । वृद्धिः । अध्यैयातां । अध्यैयत । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयातां । अधीयीरन् । अधीयीथाः । अधीयीय । अधीयीवहि । अध्येषीष्ट । लुङि—

### १०३०. विभाषा लुङ्लृङोः २-४-५०

इङो गाङादेशो वा स्याल्लुङ्लृङोः ।

### १०३१. गाङ्कुटादिभ्योऽञ्णिन्ङित् १-२-१

अतिदेशोऽयम् । गाङिति इङादेशो गृह्यते । कुट कौटिल्ये इत्येतदारभ्य कुङ् शब्दे इति पर्यन्ताः तुदादयः कुटादयः । एभ्यः परे ञिद्भ्यो णिद्भ्यश्च भिन्नाः प्रत्ययाः ङिद्वत्स्युः । इति सिचो ङित्वे—

### १०३२. घुमास्थागापाजहातिसां हलि ६-४-६६

'आर्धधातुके' इत्यधिकृतम् । 'आतो लोप इटि चे'त्यत आत इति, 'ईद्यती'त्यतः ईदिति, 'अनुदात्तोपदेश' इत्यतः क्ङितीति चानुवर्तते । घुसंज्ञकानां मादीनाञ्च आत ईत् स्यात् हलादौ क्ङित्यार्धधातुके । अध्यगीष्ट । पक्षे अध्यैष्ट । अध्यगीष्यत-अध्यैष्यत । **अथ परस्मैपदिनः** । इक् स्मरणे । अयमप्यधिपूर्वः । ककार इत् ।

### इण्वदिक इति वक्तव्यम् (वा)

'इणो यण्' इत्यादिकार्यमिकोऽप्यतिदिश्यते । अध्येति । अधीतः ।

अधियन्ति। अधीयाय। अध्यगात् इत्यादि। केचित्तु आर्धधातुकाधिकारोक्तकार्यस्यैवातिदेशमाहुः। तन्मते यण् न। तथाच भट्टिः—'ससीतयो राघवयोरधीयन्' इति। अधीयन् स्मरन्। 'अधीगर्थदयेशां कर्मणी'ति षष्ठी। तन्मते यणभावे इयङ्। अधीयन्ति। अधीयन्तु॥ या प्रापणे। प्रापणमिह प्राप्तिर्गतिः। याति। प्रणियाति। यातः। यान्ति। ययौ। ययिथ। ययाथ। याता। यास्यति। यातु। अयात्। अयातां।

## १०३३. लङः शाकटायनस्यैव ३-४-१११

'झेर्जुस्, आतः' इति सूत्रद्वयमनुवर्तते। आदन्तात् परस्य लङो झेर्जुस् वा स्यात्। एवकार उत्तरार्थः। अयुः अयान्। यायात्। यायातां। यायास्तां। सक्। अयासीत्। अयासिष्टां॥ वा गतिगन्धनयोः। गन्धनं सूचनम्। वातीत्यादि यातिवत्। भा दीप्तौ। भातीत्यादि॥ ष्णा शौचे। स्नाति। सस्नौ। आशिषि 'वान्यस्य संयोगादेः'। स्नायात् स्नेयात्॥ प्सा भक्षणे। प्साति॥ पप्सौ॥ पा रक्षणे। पाति। पपौ। अपुः अपान्। 'एर्लिङीति' सूत्रे 'गातिस्थे'त्यत्र च पिबतेरेव ग्रहणात् एत्वसिज्लुकौ न। पायात्। पायास्तां अपासीत्॥ रा दाने। ला आदाने॥ ख्या प्रकथने। अयं सार्वधातुकमात्रविषयः। आख्याति॥ मा माने। माति। ममौ। 'तनौ ममुस्तत्र न कैटभद्विषः' (माघ. १-२३)। परिमित्यर्थकोऽयमकर्मकः। उपसर्गवशेन परिच्छेदार्थे सकर्मकोऽपि। 'उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु?' इति नैषधे॥ वच परिभाषणे। वक्ति। वक्तः। अयमन्तिपरो न प्रयुज्यते। बहुवचनपर इत्यन्ये। अस्मिन् पक्षे पुरुषत्रयेऽपि बहुवचनं नास्ति। वक्तु। वग्धि। हेर्धिः। वच्यात्। उच्यात्। 'अस्यतिवक्ती'त्यङ्। अवोचत्॥ विद ज्ञाने। सेट्। वेत्ति। वित्तः। विदन्ति। वेत्सि। वेद्मि। विद्वः। विद्मः॥

## १०३४. विदो लटो वा ३-४-८३

वेत्तेः परस्य लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः।

विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म ॥ लटः स्थाने विहितत्वेन आर्धधातुकत्वभावात् थलादीनां नेट् । लिटि तु विवेद । विविदतुः । विविदुः । विवेदिथ । विविदिव । विविदिम । पक्षे--

१०३५. उषविदजागृभ्योऽन्यतरस्याम् ३-१-३८

एभ्यो लिट्याम् वा स्यात् । आम् संनियोगेन विदेत्यकारान्तो निपात्यते । तेन लघूपधगुणो न । विदाञ्चकार । विदाञ्चक्रतुरित्यादि । वेदिता । वेदिष्यति । 'वेत्ता, वेत्स्यति' इत्यादि तु विदॢ लाभे इति तौदादिकस्य । वेत्तु-वित्तात् । वित्तां । विदन्तु । विद्धि । वेदानि । पक्षे—

१०३६. विदांकुर्वन्त्वित्यन्यतरस्याम् ३-१-४१

'कृञ् चानुप्रयुज्यते लिटि' इत्युत्तरमिदं सूत्रम् । विदांकुर्वन्त्वित्येतदन्यतरस्यां निपात्यते । विदेर्लोटि आम् प्रत्ययो गुणाभावो लोटो लुक कृञश्च लोट् परस्यानुप्रयोगः । पुरुषवचने न विवक्षिते । इति-शब्दात् । सर्वाण्येव लोड् वचनान्यनु प्रयुज्यन्ते । तथाहि—

१०३७. तनादिकृञ्भ्य उः ३-१-७९

तनादेः कृञश्च उप्रत्ययः स्यात् कर्तृवाचिनि सार्वधातुके । शपोऽपवादः । तनादिपाठादेव सिद्धे करोतिग्रहणं नियमार्थम्-अन्यत् तनादिकार्यं मा भूदिति । तेन 'तनादिभ्यस्तथासोः' इति विभाषा सिचो लुक् करोते र्न भवति । अकृत, अकृथाः । उप्रत्ययोऽयमार्धधातुकः । करोतु । अनुप्रयोगे विदाङ्करोतु ।

१०३८. अत उत् सार्वधातुके ६-४-११०

उतश्च प्रत्ययात् इत्यतः उत इत्यनुवृत्तं 'नित्यं करोते'रित्यतोऽनुवृत्तस्य करोतेर्विशेषणम् । तदन्तविधिः । 'गमहने'त्यतः क्ङितीति वर्तते उप्रत्ययान्तस्य करोतेरकारस्य उत् स्यात् सार्वधातुके क्ङिति उदिति तपरकरणसामर्थ्यान्न लघूपधगुणः । विदाङ्कुरुतात् । विदाङ्कुरुतां । विदाङ्कुर्वन्तु । 'उतश्च प्रत्ययात्' इति हेर्लुक । आभीयत्वेन लुकोऽसिद्धत्वात् उत्वम् । विदाङ्कुरु । विदाङ्करवाणि । लङि हल्ङ्यादिलोपः । अवेत् । अवित्तां सिजभ्यस्तेति

द्वेर्जुस् । अविदुः । सिपि ।

१०३९. दश्च ८-२-७५

'सिपि धातो रुर्वा' इत्यनुवर्तते । 'पदस्ये'त्यधिकृतम् धातोर्दान्तस्य पदस्य सिपि परे रुर्वा स्यात् । 'अलोऽन्त्यस्य' । अवेः-अवेत् । धातुग्रहण-मुत्तरार्थम् । पदस्येति किम् ? वेत्सि । चर्त्वस्य असिद्धत्वात् दकारोऽस्ति । अवेदं । अविद्व । अविद्म । विद्यात् । विद्यास्तां । अवेदीत् । अवेदिष्टां । अवेदिषुः । अवेदिष्यत् ॥. अस भुवि । भवनं भूः । सत्तायामित्यर्थः । अस्ति ।

१०४०. श्नसोरल्लोपः ६-४-१११

श्नम्+असोः इति च्छेदः । शकन्ध्वादित्वात् पररूपम् । 'गमहने' त्यतः क्ङितीति, 'अत उत्' इत्यतः सार्वधातुक इति च वर्तते । श्नम्विकरण-स्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति । स्तः । सन्ति । 'तासस्त्यो' रिति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥ 'आर्ध धातुके' इत्यधिकृत्य ।

१०४१ अस्तेर्भूः २-४-५२

अस्तेर्भूरित्यादेशः स्यादार्धधातुके । बभूव । भविता । भविष्यति । अस्तु-ऽतात् । स्तां । सन्तु ।

१०४२. घ्वसोरेद्धावभ्यासलोपश्च ६-४-११९

घुसंज्ञकानामस्तेश्च एत्वं स्यात् हौ परे अभ्यासलोपश्च । अस् हि इति स्थिते सस्यैत्वम् । तस्याभीयत्वेनासिद्धत्वात् हेर्धिः । 'श्नसो' रित्यल्लोपः । एधि । तातङ्पक्षे एत्वं न । परेण तातङा बाधात् । 'सकृद् गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' । स्तात् । स्तम् । स्त । असानि । असाव । असाम ॥ 'अस्तिसिचोऽपृक्ते' इतीट् । आसीत् । श्नसोरल्लोपस्याभीयत्वेनासिद्धत्वात् आट् । आस्तां । आसन् । आसीः । स्यात् । भूयात् । अभूत् । अत्र-'अस्ति सिचोऽपृक्ते' इतीण् न । विद्यमानात् सिचोस्तेश्चेति व्याख्यानात् । इह

चास्तेरश्रूयमाणत्वात् ॥ मृजूष शुद्धौ ।

१०४३. मृजेर्वृद्धिः ७-२-११४

वृद्धिशब्दश्रवणात् इक्-परिभाषोपतिष्ठते । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' । मृजेरिकोवृद्धिः स्यात् धातुप्रत्यये परे । 'व्रश्च' त्यादिना षः । मार्ष्टि । मृष्टः । मृजन्ति । मार्क्षि । मृष्ठः । मृष्ठ । मार्ज्मि । मृज्वः । मृज्मः ॥ ममार्ज । ममृजतुः । ममार्जिथ । ममार्ज । ममृजिव ॥ ऊदित्वाद्वेट् । मार्जिता । मार्ष्टा । मार्जिष्यति । मार्क्ष्यति । मार्ष्टु । मृष्टात् । मृड्ढि । मार्जानि । अमार्ट् । अमार्ज । मृज्यात् । मृज्यास्तां । अमार्जीत् । अमार्जिष्टां । अमार्क्षीत् । अमार्ष्टां । अमार्क्षुः । अमार्जिष्यत् । अमार्क्ष्यत् ॥ मृजेर्वृद्धिः 'क्ङित्यजादौ वेष्यते' । तेन मार्जन्ति, ममार्जतुः, मार्जन्तु इत्यादि रूपान्तराण्यपि ॥ रुदिर् अश्रुविमोचने ।

१०४४. रुदादिभ्यः सार्वधातुके ७-२-७६

रुदादिभ्यः परस्य वलादेः सार्वधातुकस्येट् स्यात् । रुद्, स्वप्, श्वस्, अन्, जक्ष्-एते रुदादयः । रोदिति । रुदितः । रुदन्ति । रोदिषि । रोदिमि । रुरोद । रुरुदतुः । रुरोदिथ । रोदिता । रोदिष्यति । रोदितु-रुदितात् । हौ परत्वदिटि धित्वं न । रुदिहि । रोदानि ।

१०४५. रुदश्च पञ्चभ्यः ७-३-९८

'नाभ्यस्तस्ये'त्यतः सार्वधातुक इति, 'उतो वृद्धिरि' त्यतो हलीति, 'गुणोऽपृक्ते' इत्यतोऽपृक्त इति, 'ब्रुव ईट्' इत्यत ईडिति चानुवर्तते । रुदादिभ्यः परस्य हलादेः अपृक्तस्य सार्वधातुकस्य ईट् स्यात् ।

१०४६. अड्गार्ग्यगालवयोः ७-३-९९

रुदादिभ्यः परस्य हलादेरपृक्तस्य सार्वधातुकस्य अड्वा स्यात् । अरोदीत्-अरुदत् । अन्तरङ्गत्वात् तामादयः । तत इट् । अरुदितां । अरुदन् । अरोदीः-अरोदः, अरुदितं । अरुदित । अरोदं । अरुदिव । रुद्यात् । रुद्यास्तां । लुङि इरितो वा इत्यङ् । अरुदत् । अरुदतां । पक्षे सिच् ।

अरोदीत् । अरोदिष्टां अरोदिषुः । अरोदिष्यत् ॥ ञिष्वप् शये । स्वपिति । स्वपितः । स्वपन्ति । स्वपिषि । स्वपिमि । स्वपिमः । सुष्वाप । अत्र 'लिट्यभ्यासस्येति' संप्रसारणम् । अतुसि 'वचिस्वपीति' संप्रसारणे द्वित्वम् । सुषुपतुः सुषुपुः । 'अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्' । सुष्वपिथ-सुष्वप्थ । सुष्वाप-सुष्वप । सुषुपिम । स्वप्ता । स्वप्स्यति । स्वपितु । अस्वपीत्-अस्वपत् । अस्वपितां । स्वप्यात् । आशिषि कित्वात् संप्रसारणम् । सुप्यात् । लुङि अस्वाप्सीत् । अस्वाप्तां । अस्वाप्सुः । अस्वप्स्यत् ॥ श्वस प्राणने । श्वसिति । श्वसितः । शश्वास । शश्वसिथ । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत्-अश्वसत् । श्वस्यात् । श्वस्यातां । श्वस्यास्तां । सिचि ह्म्यन्तक्षणश्वसेति न वृद्धिः । अश्वसीत् । अश्वसिष्टां ॥ अन च । प्राणने । अनिति । अनितः । अनन्ति ।

## १०४७. अनितेः ८-४-१९

'रषाभ्यां नो ण' इत्यनुवर्तते । 'उपसर्गादसमासेऽपी'त्यतः उपसर्गादिति च । उपसर्गस्थान्निमित्तात् परस्य अनितेर्नस्य णः स्यात् । भिन्नपदस्थत्वादप्राप्तौ वचनम् । प्राणिति । प्राणितः । प्राणन्ति ॥ आन । आनिथ । अनिता । अनिष्यति । अनितु । आनीत्-आनत् । अन्यात् । अन्यातां । अन्यास्तां । आनीत् । माभवान् अनीत् । 'नेटीति' वृद्धिनिषेधः । आनिष्यत् ॥ जक्ष भक्ष हसनयोः । जक्षिति । जक्षितः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा ।

## १०४८. अदभ्यस्तात् ७-१-४

अभ्यस्तात् परस्य झस्य अत् स्यात् । जक्षति । जजक्ष । न च 'अनभ्यासस्ये'ति द्वित्वनिषेधः शङ्क्यः । अभ्यस्तसंज्ञायामपि अभ्यासयुक्तत्वाभावात् । जक्षिता । लङि अजक्षीत्-अजक्षत् । अजक्षितां । 'सिजभ्यस्तेति' झेर्जुस् । अजक्षुः । अजक्षीः-अजक्षः । लुङि तु अजक्षीत् । अजक्षिष्टां ॥ रुदादयः पञ्च गताः ॥ जागृ निद्राक्षये । जागर्ति । जागृतः । अदभ्यस्तात् । जाग्रति । जागर्षि । जागर्मि । 'उषविदे'त्याम् वा । जागराञ्चकार,

जागराम्बभूव, जागरामास-जजागार । अतुसादौ क्त्विनात् गुणनिषेधे प्राप्ते ।

## १०४९. जाग्रोऽविचिण्णल्ङित्सु ७-३-८५

'मिदेर्गुण' इत्यतो गुण इति वर्तते । जागर्तेर्गुणः स्यात् वि चिण् णल् ङिद्भ्योऽन्यस्मिन् परे वृद्धिविषये प्रतिषेधविषये च । निणल्- पर्युदासात् वृद्धिविषये इति, ङित्पर्युदासात् प्रतिषेधविषये इति च लभ्यते । जजागरतुः । जजागरुः । जजागरिथ । जागरिता । जागरिष्यति । जागर्तु-जागृतात् । जाग्रतु । जागृहि । लङि हल्ङ्यादिलोपे रेफस्य विसर्गः । अजागः । अजागृतां । 'सिजभ्यस्तेति' जुसि—

## १०५०. जुसि च ७-३-८३

'क्सस्याचि' इत्यतोऽचीति वर्तते । इगन्ताङ्गस्य गुणः स्यादजादौ जुसि । अजागरुः । जुसो ङित्वात् 'जाग्रोऽविचिण्णल्ङित्सु' इत्यनेनैव गुणोऽत्र न शङ्क्यः । अजागः । अजागृतं । जागृयात् । जागृयुः । अत्र गुणो मा भूदित्यजादौ जुसीति व्याख्यातम् । आशिषि तु जागर्यात् । जागर्यास्तां । जागर्यासुः ॥ लुङि अजागरीत् । सिचि वृद्धिं बाधित्वा जागर्तेर्गुणः । गुणे रपरत्वे 'अतो ल्रान्तस्ये'ति प्राप्तापि ह्म्यन्तेति निषिध्यते । अजागरिष्टां । अजागरिष्यत् ॥ **दरिद्रा दुर्गतौ** । दरिद्राति ।

## १०५१. इद्दरिद्रस्य ६-४-११४

'गमहने'त्यतः क्ङितीति, 'ईहल्यघोः' इत्यतो हलीति, 'अत उत्' इत्यतः सार्वधातुके इति च वर्तते । दरिद्रातेरिकारः स्यात् हलादौ क्ङिति सार्वधातुके । दरिद्रितः ।

## १०५२. श्नाभ्यस्तयोरातः ६-४-११२

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । दरिद्रति । अनेकाच्त्वादाम् । दरिद्राञ्चकार । दरिद्रातेराम् नेति केचित् । ददरिद्रौ ।

दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः । लुङि वा सनि ण्वुलि ल्युटि च न (वा)

दरिद्रिता । दरिद्रिष्यति । दरिद्रातु । अदरिद्रात् । अदरिद्रितां । अदरिद्रुः । दरिद्रियात् । दरिद्रियात् । लुङि आलोपपक्षे । अदरिद्रीत् । अदरिद्रिष्टां । लोपाभावे इट्सकौ । अदरिद्रासीत् । अदरिद्रासिष्टां । अदरिद्रिष्यत् ॥ चकासृ दीप्तौ । चकास्ति । चकास्तः । चकासति । चकासाञ्चकार । चकासिता । चकासिष्यति । चकास्तु । धिचेतिसलोपः । चकाधि ।

## १०५३. तिप्यनस्तेः ८-२-७३

पदस्येत्यधिकृतम् । 'झलां जशोऽन्ते' इत्यतः अन्ते इति, 'ससजुषो' रित्यतः स इति, 'वसुस्रंसु . . .' । इत्यतो द इति च वर्तते । पदान्तस्य सस्य दःस्यात्तिपि परे, न त्वस्तेः । अचकात्-द् । अनस्तेः किम्? सलिलं सर्वमा इदम्' छान्दसमेतत् । आः=आसीत् । अचकास्तां । अचकासुः ।

## १०५४. सिपि धातो रुर्वा ८-२-७४

पदान्तस्य धातुसंबन्धिनः सस्य रुः स्याद्वा सिपि परे । अचकाः । पक्षे जश्त्वेन दः । अचकात्-द् । चकास्यात् । अचकासीत् । अचकासिष्टां । अचकासिष्यत् ॥ शासु अनुशिष्टौ । शास्ति ।

## १०५५. शास इदङ्हलोः ६-४-३४

'अनिदितां हल . . .' । इत्यतः उपधायाः क्ङितीत्यनुवर्तते । शास उपधाया इत् स्यात् अङि हलादौ क्ङिति च । शासिवसिघसीनाञ्चेति षः । ष्टुत्वं । शिष्टः । 'जक्षित्यादयः षट्' । शासति । शशास । शशासतुः । शशासिथ । शासिता । शासिष्यति । शास्तु-शिष्टात् । शिष्टां । शासतु ।

## १०५६. शा हौ ६-४-६५

शास्तेः शादेशः स्यात् हौ परे । तस्याभीयत्वेन असिद्धत्वात् 'हुझल्भ्यः . . .' इति हेर्धिः । शाधि । शासानि । शासाव । 'तिप्यनस्तेः' ।

अशात् । अशिष्टां । अशासुः । सिपि धातोरुर्वा । अशाः-अशात् । अशासं । अशिष्व ॥ शिष्यात् । शिष्यास्तां । लुङि-सर्तिं शास्तीत्यङ् । अशिषत् । अशिषन् । अङा व्यवहितत्वान्नात्र जुस् । अशासिष्यन् ॥ वश कान्तौ । कान्तिरिच्छा । छान्दसोऽयम् । क्वचिल्लोकेऽपि । वष्टि । 'ग्रहिज्येति' संप्रसारणम् । उशन्ति ॥

चर्करीतञ्च (ग)

चर्करीतमिति यङ्लुगन्तस्य संज्ञा पूर्वाचार्याणाम् । यङ्लुगन्तमदादौ बोध्यम् । तेन यङ्लुगन्तात् शप् तस्य लुक् च । परस्मैपदिन उपक्रम्य पाठात् यङ्लुगन्तात् परस्मैपदमेव । बोभोति । पास्पर्द्धि । ह्नुङ् अपनयने । ह्नुते । ह्नुवाते । ह्नुवते । जुह्नुवे । जुह्नुविषे । ह्नोता । ह्नोष्यते । ह्नुतां । ह्नुष्व । ह्नवै । ह्नवावहै । अह्नुत । ह्नुवीत । ह्नोषीष्ट । अह्नोष्ट । अह्नोषातां । अह्नोष्यत ॥

इत्यदादय

---

## अथ जुहोत्यादिः

हु दानादनयोः । दानञ्चेह वैधे आधारे हविषः प्रक्षेपः । परस्मैपदी ।

### १०५७. जुहोत्यादिभ्यः श्लुः २-४-७५

एभ्यः परस्य शपः श्लुः स्यात् ।

### १०५८. श्लौ ६-१-१०

'एकाचो द्वे...' इत्यतो द्वे इति, 'लिटि धातोः...' इत्यतो धातोरिति चानुवर्तते । श्लौ सति धातोर्द्वेस्तः । तथाच हुति इति स्थिते शप् । तस्य श्लुः । धातोर्द्विर्त्वम् । 'कुहोश्चुः' । 'सार्वधातुकार्धधातुकयोरि'ति गुणः । जुहोति । जुहुतः । 'अदभ्यस्तात्' । 'हुश्नुवोरिति' यण् । जुह्वति । जुहोषि । जुहोमि । जुहुवः ॥

१०५९. भीह्रीभृहुवां श्लुवच्च ३-१-३९

श्लाविव श्लुवत् । भीप्रभृतिभ्यो लिटि आम् वा स्यात्, एषां श्लाविव कार्यञ्च । जुहवाञ्चकार । जुहवांबभूव । जुहवामास । आमभावपक्षे - जुहाव । जुहुवतुः । जुहविथ-जुहोथ । जुहाव-जुहव । जुहुविव । होता । होष्यति । जुहोतु । हुधि । 'जटाधरः सन् जुहुधीह पावकम् (किरा. १-४४) अजुहोत् । अजुहुतां । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् । ञि भी भये । परस्मैपदी । बिभेति ।

१०६०. भियोऽन्यतरस्याम् ६-४-११५

'इद्दरिद्रस्य' त्यत इदिति, 'गमहन' त्यतः क्ङितीति, 'ई हल्यघोरि' त्यतो हलीति, 'अत उत् . . .' इत्यतः सार्वधातुके इति चानुवर्तते । भीधातोरिकारः स्यात् हलादौ क्ङिति सार्वधातुके । बिभितः-बिभीतः । बिभ्यति । बिभेषि । बिभिथः-बिभीथः । बिभेमि । बिभिवः-बिभीवः । भीह्रीत्याम् वा श्लुवच्च । बिभयाञ्चकार । बिभाय । एरनेकाच इति यण् । बिभ्यतुः । 'अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्' । बिभयिथ-बिभेथ । बिभ्यिव । भेता । भेष्यति । बिभेतु-बिभितात्-बिभीतात् । बिभिहि-बिभीहि । बिभयानि । अबिभेत् । अबिभितां-अबिभीतां । बिभियात्-बिभीयात् । आशिषि भीयात् । अभैषीत् । अभैषुः । अभेष्यत् ॥ ह्री लज्जायाम् । परस्मैपदी । जिह्रेति । जिह्रीतः ॥ इयङ् । जिह्रियति । आमि परत्वाद्गुणः । जिह्रयाञ्चकार । जिह्राय । जिह्रियतुः । ह्रेता । ह्रेष्यति । जिह्रेतु । जिह्रीतां । जिह्रियतु । जिह्रीहि । जिह्रयाणि । अजिह्रेत् । अजिह्रयुः । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥ डु भृञ् धारणपोषणयोः ।

१०६१. भृञामित् ७-४-७६

भृञामिति बहुवचनात् भृञादीनामिति लभ्यते । 'निजां त्रयाणां . . .' इत्यतः त्रयाणामिति, 'अत्र लोपः . . .' इत्यतोऽभ्यासस्येति च वर्तते ।

'भृञ्, माङ्, ओ हाङ्' इत्येषां त्रयाणामभ्यासस्य इकारादेशः स्यात् श्लौ। बिभर्ति। बिभृतः। बिभ्रति। लिटि आमि श्लुवद्भावात् द्वित्वेत्वे। बिभरामास, बिभराम्बभूव। बभार। क्रादिनियमान्नेट्। बिभर्थ। बिभृव। बिभृम। भर्ता। 'ऋद्धनोः स्ये'। भरिष्यति। बिभर्तु। बिभ्रतु। बिभृहि। बिभराणि। लङि अबिभः। अबिभृतां। अबिभरुः। अबिभः। अबिभृतं। अबिभरं। बिभृयात्। 'रिङ्शयग्लिङ्क्षु'। भ्रियात्। अभार्षीत्। ञित्वादात्मनेपदमपि। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चक्रे। बभ्रे। बभृषे। बभृवहे। भरिष्यते। बिभृतां। अबिभृत। बिभ्रीत। बिभ्रीयातां। बिभ्रीरन्। आशिषि उश्चेति किस्त्वम्। भृषीष्ट। भृषीयास्तां। ह्रस्वादङ्गात् इति सिचो लोपः। अभृत। अभृषातां। अभृषत। अभरिष्यत॥ माङ् माने शब्दे च।

## १०६२. ई हल्यघोः ६-४-११३

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलि, न तु घुसंज्ञकस्य। अभ्यासस्य भृञामित्। मिमीते। अजादौ क्ङिति सार्वधातुके तु 'श्नाभ्यस्तयोरात' इत्यालोपः। मिमाते। मिमते। मिमीषे। मिमे। मिमीवहे। लिटि ममे। ममिषे। ममे। माता। मास्यते। मिमीतां। अमिमीत। अमिमीथाः। अमिमि। मिमीत। मिमीरन्। मासीष्ट। अमास्त। अमासातां। अमासि। अमास्यत॥ ओ हाङ् गतौ। जिहीते। जहे। माङ् धातुवद्रूपाणि॥ ओ हाक् त्यागे। परस्मैपदी। जहाति।

## १०६३. जहातेश्च ६-४-११६

जहातेरिद् वा स्यात् हलादौ क्ङिति सार्वधातुके। पक्षे—'श्नाभ्यस्तयोरात' इति ईत्वम्। जहितः-जहीतः। जहति। जहासि। जहामि। जहिवः-जहीवः। जहौ। जहतुः। जहुः। जहिथ-जहाथ। हाता। हास्यति। जहातु-जहितात्-जहीतात्॥

## १०६४. आ च हौ ६-४-११७

जहातेर्हौ परे आत्स्यात् पक्षे इदीतौ च। जहाहि-जहिहि-जहीहि।

जहितं-जहीतं । अजहात् । अजहितां-अजहीतां । अजहुः । अजहाः । अजहां ।

### १०६५. लोपो यि ६-४-११८

जहातेरालोपः स्याद्यादौ सार्वधातुके । जह्यात् । जह्यातां । जह्युः । 'एर्लिङि' । हेयात् । अहासीत् । अहास्तां । अहासुः । अहास्यत् ॥ डु दाञ् दाने । ददाति ॥ द दा तः इति स्थिते अघोरिति पर्युदासात् ईत्वाभावे 'श्नाभ्यस्तयोरातः' इत्यालोपः । दत्तः । ददति । ददासि । दत्थः । दत्थ । ददामि । दद्वः । दद्मः । ददौ । ददतुः । ददुः । ददिथ-ददाथ । ददौ । ददिव । ददिम ॥ दाता । दास्यति । ददातु-दत्तात् । घ्वसोरेद्धावभ्यासलोपश्चेति एत्वाभ्यासलोपौ । देहि । ददानि । लङि अददात् । अदत्तां । अददुः । अददां । अदद्व । अदद्म । दद्यात् । देयात् । गातिस्थाघुपेति सिचो लुक् । अदात् । अदातां । अदुः । अदास्यत् ॥ दत्ते । ददाते । ददते ॥ ददे । दद्वहे । ददे । ददाते । ददिरे । ददिषे । ददिवहे ॥ दाता । दास्यते । दत्तां । दत्स्व । ददै । ददावहै । अदत्त । अददत । ददीत । दासीष्ट । अदित । अत्र स्थाघ्वोरिच्चेति इकारः । सिचः कित्वञ्च । ह्रस्वादङ्गात् इति सिचो लुक् । अदिषातां । अदिषत । अदास्यत । डु धाञ् धारणपोषणयोः । दानेऽपीत्येके । दधाति । 'श्नाभ्यस्तयोरातः' इत्यालोपे दध् तस् इति स्थिते ।

### १०६६. दधस्तथोश्च ८-२-३८

'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इत्यस्मादुत्तरसूत्रमिदम् । दध इत्युक्त्या द्विरुक्तस्येति लभ्यते । द्विरुक्तस्य झषन्तस्य धाञ्धातोरवयवस्य बशो भष् स्यात् तथयोः स्ध्वोश्च परतः । धत्तः । आल्लोपो न स्थानिवत् । पूर्वत्रासिद्धीये तन्निषेधात् । दधति । धत्थः । धत्थ । दधामि । दध्वः । दध्मः । दधौ । दधिथ-दधाथ । धाता । धास्यति । दधातु । धेहि । दधानि । अदधात् । दध्यात् । धेयात् । गातिस्थेति सिचो लुक् । अधात् । अधास्यत् । धत्ते ।

45

दध्वे । दधे । दध्वहे । दध्महे । लिटि तु दधिवहे । दधिमहे । धत्तां । धत्स्व । अधत्त । अदधतां । अधत्थाः । अधद्ध्वम् । अदधि । दधीत । धासीष्ट । अधित । अधिषातां । अधास्यत ॥

॥ इति जुहोत्यादयः ॥

---

## अथ दिवादयः

अथ परस्मैपदिनः । दिवु क्रीडाविजिगीषा व्यवहारद्युति स्तुति मोद-मदस्वप्नकान्तिगतिषु ।

### १०६७. दिवादिभ्यः श्यन् ३–१–६९

एभ्यः श्यन् स्यात् कर्त्रर्थे सार्वधातुके । शपोऽपवादः । श्यनोऽपित्त्वेन ङित्वात् गुणो न । 'हलि च' इत्युपधादीर्घः । दीव्यति । दिदेव । दिदेविथ । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्टां । अदेविष्यत् ॥ षिवु तन्तुसन्ताने । सीव्यति । परिनिविभ्य इति षत्वम् । परिषीव्यति । 'सिवादीनां वाड्व्यवयेऽपि' । न्यषीव्यत्-, न्यसीव्यत् ॥ ष्ठिवु निरसने ।

### ष्ठीवेः प्रतिषेधः (वा)

इति धात्वादेः षः सो निषिद्धः । ष्ठीव्यति । ष्ठीवतिर्भ्वादौ । तिष्ठाव । प्लुष दाहे । प्लुष्यति । प्लोषिता । नृती गात्रविक्षेपे । 'श्वीदितः' इत्याद्यर्थमीत्वम् । नृत्यति । ननर्त । नर्तिता ।

### १०६८. सेऽसिचि कृतचृतच्छृदतृदनृतः ७–२–५७

'उदितो वा' इत्यतो वेति वर्तते । एभ्यः परस्य सादेरार्धधातुकस्येड् वा स्यात् । नर्तिष्यति-नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्टां । अनर्तिष्यत्-अनर्त्स्यत् । त्रसी उद्वेगे । वा भ्राशभ्लाशेति श्यन् वा । त्रस्यति-

त्रसति । तत्रास । 'वाजॄ भ्रमुत्रसाम्' इत्येत्वाभ्यासलोपौ वा । तत्रसतुः-त्रेसतुः । तत्रसिथ-त्रेसिथ । त्रसिष्यति । त्रस्यतु-त्रसतु ॥ क्षिप प्रेरणे । क्षिप्यति । क्षिपतीति तुदादौ । चिक्षेप । चिक्षिपतुः । चिक्षेपिथ । क्षेप्ता । क्षेप्स्यति । अक्षेपीत् । अक्षेप्सां । अक्षेप्सुः ॥ पुष्प विकसने । पुष्प्यति । पुपुष्प । पुष्पिष्यति ॥ तिम ष्टिम ष्टीम आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति । तेमिष्यतीत्यादि ॥ व्रीड चोदने लज्जायाञ्च । व्रीडयति ॥ जॄष् वयोहानौ । 'ऋत इद्धातोः' । 'हलि चे'ति दीर्घः । जीर्यति । जजार । अतुसादौ ऋच्छत्यृतामिति गुणः । रपरत्वम् । 'वा जॄभ्रमुत्रसाम् इत्येत्वाभ्यासलोपविकल्पः । जजरतुः-जेरतुः । जजरिथ-जेरिथ । वृतो वा इति पाक्षिको दीर्घः । जरिता-जरीता । 'जॄस्तम्भु . . .' इत्यङ्विकल्पः । अजरत् । अजारीत् ॥

### जनी जॄष् क्नसोरञ्जोऽमन्ताश्च (ग)

इति गणसूत्रात् मित्संज्ञकोऽयम् । जरयति । दॄ विदारणे इति दिवादिर्मि चेति भाष्यसंमतम् (३–२–१७८) तेन दीर्यति । ददारेत्यादि । ण्यन्ते दरयति ॥ षूङ् प्राणिप्रसवे । सूयते । सुषुवे । सुषुविषे । सुषुविवहे । स्वरतिसूतीतिलिटोऽन्यत्र वेट् । सोता-सविता । सोष्यते । सविष्यते । असूयत । सूयेत । सोषीष्ट । सविषीष्ट । असोष्ट-असविष्ट । असोष्यत-असविष्यत ॥ दूङ् परितापे । दूयते । दुदुवे । दुदुविषे । दविता । इट्सहित सूयतिवत् । डीङ् विहायसा गतौ । डीयते । डयत इति भ्वादौ । डिड्ये । डयिता ॥ धीङ् आधारे । धीयते । दिध्ये । धेता ॥ लीङ् श्लेषणे । लीयते । लिल्ये ।

### १०६९. विभाषा लीयतेः ६–१–५१

मीनातिमिनोतिदीङां ल्यपि च इत्यतोल्यपीति, आदेच इत्यतः आदिति एच इति चानुवर्तते । एच इत्यस्य विषये सतीति शेषः । लीयतेरिति यका निर्देशः । ली श्लेषणे इति क्र्यादिः । लीलीङोरात्वं वा स्यात् एज्विषये ल्यपि च । लेता-लाता । लेष्यते-लास्यते ॥ 'स्वादय ओदितः' ।

तन्फलन्तु ओदितश्चेति निष्ठानत्वम् । प्रसूनं । दूनं । लानं ॥ **पीङ् पाने** । पीयते । पिबतीति भ्वादौ । पिप्ये । अपीयत ॥ **ईङ् गतौ** । ईयते । इजादेश्चेत्याम् । अयाञ्चक्रे ॥ **प्रीङ् प्रीतौ** । प्रीयते ॥ अयं सकर्मक इति सिद्धान्तकौमुदी । अकर्मक इति माधवः ॥ **अथ परस्मैपदिनः । शो तनूकरणे** ।

## १०७०. ओतः श्यनि ७-३-७१

'घोर्लोपो लेटि वा' इत्यतो लोप इति वर्तते । ओकारस्य लोपः स्यात् श्यनि परे । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति । 'विभाषा घ्राधेट्...' इति सिचो वा लुक् । अशात् । अशाताम् । 'आतः' इति जुस् । अशुः । अशाः । लुगभावे यमरमनमातामिति इट्सकौ । अशासीत् । अशासिष्टां ॥ **षो अन्तकर्मणि** । 'स्यति गर्वं गुरुद्रुहाम्' । ससौ । साता ॥ **दो अवखण्डने** । द्यति । ददौ । दास्यति ॥ **अथात्मनेपदिनः । जनी प्रादुर्भावे** ।

## १०७१. ज्ञाजनोर्जा ७-३-७९

ष्ठिवुक्लम्वित्यतः शितीति वर्तते । अनयोर्जादेशः स्यात् शिति । जायते । जज्ञे इह गमहनेत्युपधालोपे श्चुत्वम् । जज्ञाते । 'गावो ह जज्ञिरे तस्मात्' । जनिता । जनिष्यते । जायतां । लुङि । 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेः चिण् वा एकवचने तशब्दे परे । अत्र बुधधातुः पूर्वोत्तरसाहचर्यात् दिवादिरेव । न तु भ्वादिः । अ जन् इ त इति स्थिते । 'चिणो लुक्' । अत उपधाया इति वृद्धौ प्राप्तायां ।

## १०७२. जनिवध्योश्च ७-३-३५

अनयोरुपधाया वृद्धिर्नस्यात् चिणि ञ्णिति कृति च । अजनि । चिणभावे । अजनिष्ट । अजनिषातां जनिर्मित् । जनयति ॥ **दीपी दीप्तौ** । दीप्यते । दिदीपे । अदीपि-अदीपिष्ट । दीपिता ॥ **पूरी आप्यायने** । पूर्यते । पुपूरे । अपूरि-अपूरिष्ट ॥ **क्लिश उपतापे** । क्लिश्यते । चिक्लिशे । क्लेशिता ॥ **काश**

दीप्तौ । काश्यते । चकाशे ॥ **वाशृ** शब्दे । वाश्यते ॥ ववाशे । ववाशाते । वादित्वात् नाभ्यासलोपः ॥ **अथोभयपदिनः** । **मृष** तितिक्षायां । मृष्यति । ममर्ष । ममृषतुः । मृष्यते । ममृषे । मर्षिष्यते ॥ **णह** बन्धने । नह्यति संनह्यति । ननाह । नेहतुः । ननद्ध-नेहिथ । नद्धा । 'नहो धः' । नत्स्यति ॥ नह्यते । नेहे । **रञ्ज** रागे । अनिदितामिति नलोपः । रज्यति । ररञ्ज । ररञ्जतुः । रङ्क्ता । रजतीति भ्वादौ । रञ्जेश्चेति शपि नलोपः ॥ रज्यते । ररञ्जे ॥ **शप** आक्रोशे । शप्यति । शप्यते ॥ **अथात्मनेपदिनः** । **पद** गतौ । पद्यते । पेदे । पत्ता । पत्स्यते । पद्यतां । अपद्यत । पद्येत । पत्सीष्ट ।

## १०७३. चिण् ते पदः ३-१-६०.

पदश्च्लेः चिण् स्यात्तशब्दे परे । उपधावृद्धिः । अपादि । प्रत्यपादि[1] । अपत्सातां । अपत्सत । अपत्स्यत ॥ **खिद** दैन्ये । खिद्यते । चिखिदे । खेत्स्यते ॥ **विद** सत्तायां । विद्यते । विविदे । वेत्ता ॥ **बुध** अवगमने । बुध्यते । बोधति बोधते इति च भ्वादौ । बुबुधे । बोद्धा । 'एकाचो बशो भष् . . . ' । भोत्स्यते । अबुध्यत । बुध्येत । भुत्सीष्ट । अबोधि । चिणभावे सिच् । झलो झलीति लोपः । अबुद्ध । अभुत्सातां ॥ **युध** संप्रहारे । युध्यते । युयुधे । योत्स्यते । अयुध्यत । लुङि अयुद्ध । अयुत्सातां । कथं युध्यतीति ? युधमिच्छतीति क्यच् ॥ अनो **रुध** कामे । अनुरुध्यते ॥ **मन** ज्ञाने । मन्यते । मेने । मन्ता । मंस्यते । मन्यतां । अमंस्त । मनुते इति तनादौ ॥ **युज** समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अस्मिन्नर्थेऽकर्मकः । युज्यते । योक्ता ॥ **सृज** विसर्गे । अकर्मकः । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' (रघु. ५-६९) संबध्नातीत्यर्थः । विभातवायुः कर्ता । स्रष्टा । व्रश्चभ्रस्जेति षः । असृष्ट । अत्र झलो झलीति सृचो लोपः । लिङ्सिचोरात्मनेपदेषु'

---

[1] कर्मणि प्रथमैकवचनेऽप्येवमेव रूपम् ।

इति सिचः कित्वात् अम् न । असृक्षातां ॥ अथ परस्मैपदिनः । राधोऽकर्मकात् वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेवश्यन् । तत्तोदाहरणं वृद्धाविति । तथाचार्थान्तरेऽपिश्यन् भवति । राध्यत्योदनः । सिध्यतीत्यर्थः । यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । क्रुधद्रुहेति संप्रदानता । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । 'राधीक्ष्योर्यस्यविप्रश्नः' इति संप्रदानता । दैवस्य धात्वर्थेऽन्तर्भावात् जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । 'राधो हिंसायां' इत्येत्वाभ्यासलोपाविह न । तस्य सकर्मकतया दैवादिकत्वाभावात् । राद्धा । रात्स्यति । राध्नोतीति स्वादौ । राधयतीति चुरादौ ॥ व्यध ताडने । ग्रहिज्येति संप्रसारणम् । विध्यति । विव्याध । अत्र 'लिट्यभ्यासस्ये'ति संप्रसारणम् । विविधतुः । विविधुः । अत्र परत्वात् वचिस्वपीति संप्रसारणेद्वित्वम् । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ पुष पुष्टौ । पुष्यति । पुपोष । पोष्टा । पोक्ष्यति । पुषादिद्युतादीत्यङ् । अपुषत् ॥ शुष शोषणे । शुष्यति । अशुष्यत् । अशुषत् । शोक्ष्यति ॥ तुष प्रीतौ । तुष्यति । तुतोष । तुतोषिथ । तोष्टा । तोक्ष्यति । अतुष्यत् । अतुषत् ॥ दुष वैकृत्ये । दुष्यति । अदुष्यत् । अदुषत् । अदोक्ष्यत् ॥ श्लिष आलिङ्गने । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति । अश्लिष्यत् ।

## १०७४. श्लिष आलिङ्गने ३-१-४६

श्लिषेः परस्य च्लेः क्सःस्यादालिङ्गनेऽर्थे । 'षढोः कः सि' । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गने किम् ? अन्यत्र पुषाद्यङ् । समश्लिषज्जतु काष्ठम् । संबन्धार्थकोऽत्र श्लिषिः ॥ ञिष्विदा गात्रप्रक्षरणे । स्वेदः स्रुतावित्यर्थः । स्विद्यति । सिष्वेद । स्वेत्स्यति । अस्विद्यत् । अस्विदत् ॥ क्रुध क्रोधे । क्रुध्यति । चुक्रोध । क्रोत्स्यति । अक्रुधत् ॥ क्षुध बुभुक्षायाम् । क्षुध्यति । अक्षुध्यत् । अक्षुधत् । अनिडयम् । क्षुधित इत्यत्र तु 'वसतिक्षुधोरिट्' इतीट् । शुध शौचे । शुध्यति । शुशोध । शोत्स्यति । अशुधत् ॥ षिधु संराद्धौ । सिध्यति । सेद्धा । सेत्स्यति । असिध्यत् । असिधत् ॥ संराद्धिर्निष्पत्तिः ॥

णश अदर्शने। नश्यति। ननाश। नेशतुः। नेशिथ। इडभावपक्षे।

१०७५. मस्जिनशोर्झलि ७-१६०

अनयोर्झलि परे नुम् स्यात्। ननंष्ठ।

१०७६. रधादिभ्यश्च ७-२-४५

'स्वरतिसूती 'त्यतोवेति वर्तते। एभ्यो वलाद्यार्धधातुकस्येड् वा स्यात्। रध्, नश्, तृप्, दृप्, द्रुह्, मुह्, ष्णुह्, ष्णिह्—एते रधादयः। नशिता-नंष्टा। नशिष्यति-नङ्क्ष्यति। अनश्यत्। च्लेरङ्। अनशत्॥ उपसर्गाद-समासेऽपीति णत्वम्। प्रणश्यति॥ तृप प्रीणने। प्रीणनं तृप्तिस्तर्पणञ्च। तृप्यति। 'नाग्निस्तृप्यति काष्ठानां'। ततर्प। ततृपुः। तर्पिता। इडभावे। अनुदात्तस्य चेत्यादिना पक्षेऽम्। त्रप्ता। तर्प्ता। अतृप्यत्। अङ्। अतृपत्। तृपेः सिज्वेति वार्तिकम्। पितॄनताप्र्सीत्॥ दृप हर्षमोहनयोः। मोहनं गर्वः। दृप्यति। दर्पिष्यति। अनुदात्तस्यचेत्यम वा। द्रप्ता। दर्प्ता। अदृपत्॥ द्रुह जिघांसायां। द्रुह्यति। दुद्रोह। द्रोहिता। 'वा द्रुहमुहष्णुहष्णिहा'मिति धः। पक्षे ढः। द्रोग्धा-द्रोढा। अङ्। अद्रुहत्॥ मुह वैचित्त्ये। वैचित्त्यमविवेकः। मुह्यति। मुमोह। मोहिष्यति। मोक्ष्यति। वा द्रुहेति घत्वे ढत्वे च तुल्यं रूपम्। अमुहत॥ ष्णिह प्रीतौ। स्निह्यति। अस्निह्यत्। अस्निहत्॥ रधादयो गताः॥ पुषादयस्तु आगणान्तात्॥ शमु उपशमे।

१०७७. शमामष्टानां दीर्घः श्यनि ७-३-७४

शमादीनामष्टानां दीर्घः स्यात् श्यनि परे। शाम्यति। शशाम। शेमतुः। शमिता। अशाम्यत्। अशमत्॥ तमु कांक्षायाम्। ताम्यति। तमिष्यति। अताम्यत्। अतमत्॥ दमु उपशमे। उपशम इति ण्यन्तस्य रूपम्। तेन सकर्मकोऽयम्। दाम्यति। शमयतीत्यर्थः। दमिष्यति। अदाम्यत्। अदमत्॥ श्रमु तपसि खेदे च। श्राम्यति। अश्रमत्॥ भ्रमु अनवस्थाने। 'वा भ्राशभ्लाश..' इति श्यन् वा। श्यनि 'शमामष्टानां..' इति दीर्घः। भ्राम्यति। 'वा जृभ्रमुत्रसाम्'। बभ्रमतुः-भ्रेमतुः। अभ्राम्यत्।

अभ्रमत् । पक्षे भ्रमतीत्यादि भ्वादिवत् । भ्वादेः श्यनि भ्रम्यतीत्येव ॥ क्षमू सहने । क्षाम्यति । चक्षाम । चक्षमिथ । लिटोऽन्यत्र ऊदित्वाद्वेट् । क्षमिता-क्षन्ता । अक्षाम्यत्-अक्षमत् । क्षमते इति क्षमूष् इति भ्वादेः ॥ क्लमु ग्लानौ । क्लाम्यति । वा भ्राशेति पक्षे शपि क्लामति । अत्र 'ष्ठिवु क्लमु . . ' इति दीर्घः । अक्लाम्यत्-अक्लामत् । लुङि अङ् । अक्लमत् ॥ मदी हर्षे । माद्यति । अमाद्यत् । अमदत् ॥ शमादयोऽष्टौ गताः ॥ असु क्षेपणे । अस्यति । आस । आसतुः । असिष्यति । लुङि पुषादित्वादङि ।

## १०७८. अस्यतेस्थुक् ७-४-१७

'ऋदृशोऽङि . . .' इत्यतोऽङीति वर्तते । अस्यतेरङि थुक् स्यात् । आस्थत् । उपन्यास्थत् । अस्य पुषादित्वादेवाङि सिद्धे 'अस्यतिवक्ती'ति अङ्विधानमात्मनेपदार्थम् । उपसर्गादस्यत्यूह्योरिति पाक्षिकमात्मनेपदम् । उपन्यास्थत । पर्यास्थत ॥ यसु प्रयत्ने ।

## १०७९. यसोऽनुपसर्गात् ३-१-७१

## १०८०. संयसश्च ३-१-७९

श्यन् वा स्यात् । पक्षे शप् । यस्यति-यसति । संयस्यति । अनुपसर्गात् किम् ? प्रयस्यति । ययास । येसतुः । यसिष्यति । यस्यतु-यसतु । संयस्यतु-संयसतु । प्रयस्यतु । अयसत् । लङ् । लुङि चेदं रूपम् । लङि अयस्यदित्यपि । उपसर्गे तु प्रायस्यत् इति लङि । प्रायसदिति लुङि ॥ भ्रंशु अधःपतने । अनिदितामिति नलोपः । भ्रश्यति । बभ्रंश । अभ्रशत् ॥ बभ्रंश । ञितृषा पिपासायां । तृष्यति । ततर्ष । ततृषतुः । तर्षिता । अतृषत् । हृष तुष्टौ । हृष्यति । जहर्ष । जहृषतुः । हर्षिष्यति । अहृष्यत् । अहृषत् । 'हर्षति अहर्षीत्' इति च भ्वादौ ॥ दिवादौ श्यन्नङौ विशेषः । रुष हिंसायां । रुष्यति । तीषसहेति वेट् । रोषिता रोष्टा । अरुषत् । कुप क्रोधे । कुप्यति । चुकोप । अकुप्यत् । अकुपत् । लुप विमोहने । लुप्यति । लोपिष्यति । सेट्कोऽयम् । तौदादिकस्त्वनिट् । अलुपत् ॥ लुभ गार्ध्ये ।

लुभ्यति । लुलोभ । तीषसहेति वेट् । लोभिता । लोब्धा । अलुभत् ॥ क्षुभ संचलने । क्षुभ्यति । चुक्षोभ । क्षोभिष्यति । अक्षुभत् ॥ क्लिदू आर्द्रीभावे । क्लिद्यति । चिक्लेद । ऊदित्वात् वेट् । क्लेदिता-क्लेत्ता । क्लिद्यतु । अक्लिद्यत् । क्लिद्येत् । क्लिद्यात् । अक्लिदत् । अक्लेदिष्यत् । अक्लेत्स्यत् ॥ ञिमिदा स्नेहने । मेद्यति । अमिदत् ॥ ऋधु वृद्धौ । ऋध्यति । उरत् । हलादिः शेषः । अत आदेः । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट् । आनर्ध । आनृधतुः ॥ अर्धिष्यति । आर्ध्यत् । लुङि तु आर्धत् ॥ गृधु अभिकांक्षायां । गृध्यति । जगर्ध । जगृधः । गृध्येत् । गृध्यात् । अगृध्यत् । अगृधत् । अगर्धिष्यत् ॥ पुषादयो वृत्ताः । दिवादिराकृतिगणः । तेन दीर्यति, मृग्यति, क्षीयते इत्यादयः सिद्धाः ॥

इति दिवादयः

---

## अथ स्वादयः

षुञ् अभिषवे । अभिषवः स्नानं स्नपनं पीडनं सुरोत्पादनञ्च । तत्र स्नाने अकर्मकः ।

### १०८१. स्वादिभ्यः श्नुः ३-१-७३

स्वादिभ्यः श्नुः स्यात् कर्त्रर्थे सार्वधातुके परे । शपोऽपवादः । सुनोति । सुनुतः । 'हुश्नुवोः सार्वधातुके' इति यण् सुन्वन्ति । सुनोषि । सुनुथः । सुनुथ । सुनोमि । 'लोपश्चास्यान्यतरस्यां म्वोः' । सुन्वः-सुनुवः । सुन्मः-सुनुमः ॥ सुषाव । सुषुवतुः । सुषविथ-सुषोथ । सुषाव-सुषव । सुषुविव । सोता । सुनोतु । उतश्च प्रत्ययादितिहेर्लोपः । सुनु । सुनवानि । असुनोत् । सुनुयात् । सूयात् । स्तुसुधूञ्भ्यः परस्मैपदेषु इति सिच इट् । असावीत् । असाविष्टां । असोष्यत् । ञित्वात् पक्षे तङ् । सुनुते । सुषुवे । सोष्यते ।



ವ್ಯಾಕರಣ-ಸಂಸ್ಕೃತ ಸಾಹಿತ್ಯ

असुनुत । असुन्वि-असुनिवहि । असोष्ट । असोष्यत ॥ उपसर्गात् सुनोतीति षत्वम् । अभिषुणोति ॥ षिञ् बन्धने । सिनोति । सिनुते ॥ चिञ् चयने । चिनोति । चिन्वः-चिनुवः । चिचाय । चिच्यतुः । चिच्यिम । पक्षे ।

## १०८२. विभाषा चेः ७-३-५८

चजोः कुघिण्ण्यतोः इत्यतः कु इति वर्तते । 'अभ्यासाच्च' इत्यतोऽभ्यासादिति । 'सन्लिटोर्जेः' इत्यतः सन्लिटोरिति च । अभ्यासात् परस्य चिञः कुत्वं वा स्यात् सनि लिटि च । चिकाय । चिक्यतुः । चेष्यति । अचिनोत् । अचैषीत् । अचैष्टां । चिनुते । चिच्ये-चिक्ये । अचेष्ट ॥ स्तृञ् आच्छादने । स्तृणोति । तस्तार । 'ऋतश्च संयोगादेर्गुणः' । तस्तरतुः । 'ऋदन्तईदृङ् नित्यानिट्' तस्तर्थ । तस्तरिव । स्तर्ता । 'ऋद्धनोः स्ये' । स्तरिष्यति । स्तृणुयात् । गुणोऽर्तिसंयोगाद्योरित्यार्धधातुके लिङि गुणः । स्तर्यात् । अस्तार्षीत् । अस्तार्षुः ॥ स्तृणुते । तस्तरे । स्तरिष्यते । अस्तृणुत । स्तृण्वीत । अत्र 'हुश्नुवोः सार्वधातुके' इति यण् । आशिषि तु ।

## १०८३. ऋतश्च संयोगादेः ७-२-४३

'लिङ्सिचोरात्मनेपदेषु' इत्यनुवर्तते । 'इट् सनि वा' इत्यत इड्वेति । ऋदन्तात् संयोगादेः परयोर्लिङ् सिचोरिड् वा स्यादात्मनेपदेषु । स्तरिषीष्ट । इडभावपक्षे 'उश्च' इति किस्त्वान्न गुणः । स्तृषीष्ट । लुङ्यपि तथा । अस्तरिष्ट-अस्तृत । इडभावपक्षे उश्चेति सिचः किन्त्वम् । ह्रस्वादङ्गात् इति लोपश्च ॥ अस्तृषाताम् । अस्तरिष्यत ॥ वृञ् वरणे । वृणोति । ववार । वव्रुः । क्रादिनियमान्नेट् । वव्रिव । वव्रृम । थलि तु भाषायामिडिष्टः । 'बभूथाततन्थजगृभ्मववर्थेति निगमे' इति वेदे ववर्थेति निपातनात् । ववरिथ । वृतो वा । वरिता-वरीता । अवृणोत् । वृणुयात् । 'रिङ्शयग्लिङ्क्षु' । व्रियात् । अवारित् । अवारिष्टां । 'सिचि च परस्मैपदेषु' इति इटो नात्र दीर्घः । वृणुते । वव्रे । वरिष्यते-वरीष्यते । अवृणुत । अवृण्वातां । अवृण्वत । वृण्वीत ।

## १०८४. लिङ्सिचोरात्मनेपदेषु ७-२-४२

वृङ्वृञ्भ्यामृदन्ताच्च परयोः लिङ्सिचोरिड्वा स्यादात्मनेपदेषु । इत्याशीर्लिङि पाक्षिक इट् । तस्य 'वृतो वा' इति दीर्घविकल्पे प्राप्ते ।

## १०८५. न लिङि ७-२-३९

वृङ्वृञ्भ्यामृदन्ताच्च परस्येटो दीर्घो न स्याल्लिङि । वरिषीष्ट । वृषीष्ट । लुङि तु अवरिष्ट । अवरीष्ट । अवृत । अवृषातां ॥ धुञ् कम्पने । धुनोति । धुनुते । ह्रस्वान्तोऽयमनिट् । धोता । अधौषीत् । अधुत ॥ दीर्घान्तोऽप्ययम् । अस्मिन् पक्षे 'स्वरति सूति सूयति धूञूदितो वा । धूनोति । धविष्यति-धोष्यति । लुङि परस्मैपदे स्तुसुधूञ्भ्य इति नित्यमिट् । अधावीत् । धूनुते । दुधुवे । अधविष्ट । अधोष्ट ॥ अथ परस्मैपदिनः । टु दु उपतापे । दुनोति । दुदाव । दुदोथ-दुदविथ । दोता । अदुनोत् । दुनुयात् । दूयात् । अदौषीत् ॥ हि गतौ वृद्धौ च ।

## १०८६. हिनुमीना ८-४-१५

णत्वप्रकरणस्थमिदम् । 'उपसर्गादसमासेऽपि . . .' इत्यत उपसर्गादिति वर्तते । उपसर्गस्थान्निमित्तात् परस्य एतयोर्नस्य णः स्यात् । प्रहिणोति । प्रेरयतीत्यर्थः ।

## १०८७. हेरचङि ७-३-५६

चजोरिति सूत्रात् कुग्रहणं, अभ्यासाच्च इत्यत अभ्यासादिति, हो हन्तेरित्यतो ह इति चानुवर्तते । अभ्यासात् परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । जिघ्यतुः । प्रहेष्यति । प्रहिणोतु । प्राहिण्वत् । प्राहैषीत् । अचङीति किम् ? प्राजीहयत् दूतम् । णिजन्तस्येदं रूपम् ॥ आप्लृ व्याप्तौ । आप्नोति । आप्नुतः । आप्नुवन्ति । संयोगपूर्वकत्वादत्र हुश्नुवोरिति न यण् । आप्नोमि । आप्नुवः । आप्नुमः । संयोगपूर्वकत्वादत्र 'लोपश्चास्य . . .' इति पाक्षिक उलोपो न । आप । आपतुः । आप्ता । आप्स्यति । आप्नोतु । आप्नुहि । संयोगपूर्वत्वात् उतश्चप्रत्ययादिति हेर्लुङ्न । आप्नोत् । आप्नुतां ।

आप्नुयात् । आप्यात् । लदित्वादङ् । आपत् । आपतां । आपन् । आप्स्यत् ॥ **शक्लृ** शक्तौ । शक्नोति । शशाक । शेकतुः । शेकुः । शेकिथ-शशक्थ । शक्ष्यति । अशक्नोत् । शक्नुयात् । शक्यात् । अङ् । अशकत् । अशक्ष्यत् ॥ **राध साध** संसिद्धौ । राध्नोति । रराध । रराधतुः । रराधुः ।

## १०८८. राधो हिंसायाम् ६-४-१२३

एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । अपरेधुः । उपसर्गवशात् राधेर्हिंसायां वृत्तिः । क्रादिनियमान्नित्यमिट् । अपरेधिथ । अपरेधिव । अन्यत्र रराधिथ । रराधिव ॥ राद्धा । अपरात्स्यति । अरात्सीत् । साध्नोति । सात्स्यति ॥ अशू व्याप्तौ । आत्मनेपदी । ऊदित्वाद्वेट् । अश्नुते । अश्नुवाते । अश्नुवते ॥

## १०८९. अश्नोतेश्च ७-४-७२

' तस्मान्नुड् द्विहलः इत्यतो नुडिति वर्तते । कृतदीर्घादभ्यासाकारात् परस्याश्नोतेर्नुट् स्यात् । आनशे । द्विहल्त्वाभावादप्राप्तौ नुड् विधीयते । आनशिरे । अश्नोतेः किम् ? अश्नातेः क्र्यादेर्मा भूत् । आश ॥ अशिता-अष्टा । अशिष्यते-अक्ष्यते । अश्नुवीत । आशिष्ट-आष्ट । आशिषातां-आक्षातां ॥ अयं परस्मैपदमपीति ' उपदेशेऽत्वतः ' इति सूत्रस्थभाष्यस्वरसः । अश्नोति । आनश । आनशतुः । आनशुः ॥ **ञि घृषा** प्रागल्भ्ये । परस्मैपदी । घृष्णोति । दधर्ष । धर्षिता । धर्षिष्यति । अधृष्णोत् । अधर्षीत् । अधर्षिष्टां ॥ **ऋधु** वृद्धौ । ऋध्नोति । आनर्ध । अर्धिष्यति । **तृप** प्रीणने । तृप्नोति । क्षुभ्नादित्वाण्णत्वं न । सेडयम् । तर्पिष्यति । तृप्यतिस्तु अनिट् ॥

इति स्वादयः

---

## अथ तुदादयः

**अथोभयपदिनः । तुद व्यथने ।**

### १०९०. तुदादिभ्यः शः ३-१-७७

तुदादिभ्यः शः स्यात् कर्तरि सार्वधातुके । शपोऽपवादः । सार्वधातुकमपिदिति ङित्वाद् गुणनिषेधः । तुदति । तुतोद । तुतुदतुः । तुतोदिथ । तोत्ता । तुदतु । तुदेत् । तुद्यात् । अतौत्सीत् । अतौत्ताम् । अतोत्स्यत् । तुदते । तुतुदे । तोत्स्यते । अतुदत । तुदेत । 'लिङ्सिचावात्मनेपदेषु' इति लिङः कित्त्वम् । तुत्सीष्ट । झलोझलीति सिज्लोपः । अतुत्त । अतुत्साताम् । णुद प्रेरणे । नुदति । नुनोद । नुदते । नुनुदे ॥ दिश अतिसर्जने । अतिसर्जनं दानम् । दिशति । उपदिशति । अतिदिशति । संदिशति । दिदेश । देष्टा । देक्ष्यति । शल इगुपधादिति क्सः । अदिक्षत् । दिशते । दिदिशे । अदिशत । दिक्षीष्ट । अदिक्षत ॥ भ्रस्ज पाके । ग्रहिज्येति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति ।

### १०९१. भ्रस्जो रोपधयो रमन्यतरस्याम् ६-४-४७

'आर्धधातुके' इत्यधिकृतम् । भ्रस्जेः रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । रम्यकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । रोपधयोरिति स्थानषष्ठीनिर्देशात् रेफः उपधा च निवर्तते । भज् इत्यवस्थायां रम् । बभर्ज । बभर्जतुः । 'तास्यनिट् थलि वेडयम्' । बभर्जिथ । बभर्ष्ठ । रमभावे । बभ्रज्ज । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । भर्ष्टा । रमभावेतु भ्रष्टा । भृज्जेत् । अभृज्जत् । अभार्क्षीत् । अभार्ष्टाम् । अभ्राक्षीत् । भृज्जते । बभर्जे । बभ्रज्जे ॥ क्षिप प्रेरणे । क्षिपति । चिक्षेप । चिक्षिपतुः । क्षेप्तत । क्षेप्स्यति । क्षिपतु । अक्षिपत् । अक्षैप्सीत् । अक्षैप्सुः । क्षिपते । चिक्षिपे । क्षेप्स्यते । क्षिपेत । क्षिप्सीष्ट ॥ कृष विलेखने । कृषति । कर्षतीति भ्वादौ । चकर्ष । चकृषतुः । अनुदात्तस्य च ऋदुपधस्येति पक्षेऽम् ।

क्रष्टा-कर्ष्टा । अक्रुषत् । क्रुषेत् । कृष्यात् । शल इगुपधेति क्सः । अक्रुक्षत् । अक्रुक्षन् । अप्रसिद्धत्वात् पाक्षिके सिचि रूपान्तराणि नोपन्यस्तानि । क्रुषते । चक्रुषे ॥ अथात्मनेपदिनः । जुषी प्रीतिसेवनयोः । जुषते । जुजुषे । जोषिष्यते । अजुषत । जुषेत । अजोषिष्ट ॥ ओविजी भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । उद्विविजे ॥

## १०९२. विज इट् १-२-२

गाङ्कुटादिभ्य इत्यतो ङिदिति वर्तते । विजेः पर इडादिः प्रत्ययो ङिद्वत् स्यात् । इटो ङित्वे फलाभावात् इट् शब्देन इडादिः प्रत्ययो लक्ष्यते । उद्विजिता । उद्विजिष्यते ॥ ओ लस्जी व्रीडायां । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः । लज्जते । ललज्जे । लज्जिष्यते । लज्जतां । अलज्जत । लज्जेत । लज्जिषीष्ट । अलज्जिष्ट ॥ अथ परस्मैपदिनः । ओ व्रश्चू छेदने । ग्रहिज्येति संप्रसारणम् । वृश्चति । वव्रश्च । वव्रश्चतुः । अत्र लिट्यभ्यासस्येति संप्रसारणम् । उरत् । तस्य स्थानिवद्भावात् । वस्य संप्रसारणं न । न संप्रसारणे संप्रसारणमिति निषेधात् । ऊदित्वाद्वेट् । व्रश्चिता-व्रष्टा । व्रश्चिष्यति-व्रक्ष्यति । अत्र श्चुत्वस्यासिद्धत्वात् सस्य 'स्कोः संयोगाद्योरन्ते च' इति लोपः । चस्य तु व्रश्चभ्रस्जेति षः । तस्य च स्ये परे 'षढोः कः सी'ति षः । सस्य षत्वम् । सिचि तु इट् पक्षे नेटीति वृद्धिनिषेधः । अव्रश्चीत् । अव्रश्चिष्टां । अव्रश्चिषुः । इडभावपक्षे हलन्तलक्षणा वृद्धिः । स्कोरिति सलोपः । चस्य षः । तस्य कः । षत्वं । अव्राक्षीत् । अव्राष्टां । अव्राक्षुः ॥ उज्झ उत्सर्गे । उज्झति । उज्झाञ्चकार । उज्झिष्यति । औज्झत् ॥ लुभ मोहने । मोहनमाकुलीकरणम् । लुभति । लोभिता । तीषसहेति इट् । लोब्धा ॥ गुम्फ ग्रन्थे । शे परे अनिदितामिति नलोपे ।

### शे तृम्फादीनां नुम् वाच्यः (वा)

इति नुम् ॥ गुम्फति । जुगुम्फ । जुगुम्फतुः । संयोगात् परत्वेन लिटः किस्वाभावः । गुम्फिष्यति । अगुम्फत् । गुम्फेत् । आशिषि नलोप । गुफ्यात् ।

दृभी ग्रन्थे । दृभति । ददर्भ । ददृभतुः । अदृभत् । अदर्भिष्यत् ॥ घूर्ण भ्रमणे । घूर्णति । जुघूर्ण । घूर्णिष्यति । अघूर्णत् । अघूर्णीत् । अघूर्णिषुः ॥ घुर भीमार्थशब्दयोः । घुरति । जुघोर । जुघुरतुः । घोरिता । अघुरत् । 'घुर्घुरायितघुरीघोरो घुरेत् सूकरः' (का. प्र. ७) । इषु इच्छायां । इषुगमियमां छः । इच्छति । अभ्यासस्यासवर्णे इतीयङ् । इयेष । ईषतुः । ईषुः । इयेषिथ । तीषसहेति तादौ वेट् । एषिता-एष्टा । एषिष्यति । ऐच्छत् । इच्छेत् । इष्यात् । ऐषीद् । ऐषिष्टां ॥ मिष स्पर्धायां । नेत्रो-न्मीलनेऽस्य प्रसिद्धिः । मिषति । उन्मिषति । मिमेष । मेषिता । मिषेत् । मिष्यात् ॥ चल विलसने । चलति । चचाल । चेलतुः । चलिष्यति ॥ मिल श्लेषणे । मिलति । मिमेल । मिमिलुः । मेलिष्यति । अमिलत् । मिलेत् । अमेलीत् । अमेलिष्टां ॥ लिख अक्षरविन्यासे । लिखति । लिलेख । लिलिखुः । लेखिता । लेखिष्यति । लिखतु । अलिखत् । लिखेत् । लिख्यात् । अलेखीत् । अलेखिष्यत् ॥ अथ कुटादिः । कुट कौटिल्ये । कुटति । गाङ्कुटादिभ्य इति ङित्त्वम् । चुकुटिथ । चुकोट-चुकुट । कुटिता ॥ स्फुट विकसने । स्फुटति । भ्वादौ स्फोटते । स्फोटयतीति भेदनार्थकस्तु चुरादौ । स्फुटयतीति तु स्फुटं करोतीत्यर्थे णिचि अकारस्य स्थानिवद्भावेन गुणाभावे बोध्यम् । पुस्फोट । पुस्फुटतुः । उत्तमे णलि पुस्फोट । अत्र णलुत्तमो वा इति णित्वाभावपक्षे 'गाङ्कुटादिभ्योऽञ्णिन् ङित्' इति ङित्वे पुस्फुटेत्यपि ॥ स्फुटिता । स्फुटिष्यति । स्फुटतु । अस्फुटत् । स्फुटेत् । स्फुट्यात् । अस्फुटीत् । अस्फुटिष्टां । अस्फु-टिष्यत् ॥ कुच संकोचने । कुचति । संकुचति । चुकोच । चुकुचतुः । चुकोच-चुकुच । कुचिता । स्फुटिवद्रूपाणि । त्रुट छेदने । त्रुटति । वा भ्राशभ्लाशेति श्यन् वा । त्रुट्यति । तुत्रोट । त्रुटिष्यति । स्फुटिवद्रूपाणि ॥ स्फुर स्फुरणे । स्फुरति । पुस्फोर । स्फुरिता । स्फुटिवद्रूपाणि ॥ ब्रुड संवरणे । ब्रुडति । ब्रुडिष्यति । 'अन्तर्निमज्जनं ब्रुडनम्' इति शिवस्तोत्रावली व्याख्याने क्षेमराजः (स्तो. ५-१२) ।. गुरी उद्यमने । उभयपदी । गुरति । गुरते । गुरिष्यति ।

अवगुरेत् । निन्देदित्यर्थः । **णू** स्तवने । दीर्घान्तः । नुवति । नुनाव । नुनुवतुः । नुनाव । पक्षे ङित्वे–उवङ् । नुनुव । नुविष्यति । परिणूत-गुणोदयः । अत्र श्रयुकः किर्तीति इण्निषेधः । अनुवीत् । अनुविषुः । **धू** विधूनने । धुवति । दुधाव । धुविष्यति ॥ **गु** पुरीषोत्सर्गे । गुवति । गुता । गुष्यति । अगुवत् । अगुषीत् । ह्रस्वादङ्गात् इति सिचो लोपः । अगुतां । अगुषुः ॥ **ध्रु** गतिस्थैर्ययोः । ध्रुवति । ध्रुता । गुवतिवद्रूपाणि ॥ ध्रुव इति पाठान्तरम् । अयं सेट् । ध्रुवति । ध्रुविता । ध्रुविष्यति । अध्रुवीत् । अध्रुविष्टां ॥ कुटादयो वृत्ताः ॥ **पृङ्** व्यायामे । 'रिङ् शयग् लिङ्षु'। इयङ् । प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । 'ऋद्धनोः स्ये' इतीट् । व्यापरिष्यते । व्याप्रियतां । व्याप्रियेत । व्यापृषीष्ट । व्यापृत । व्यापृषातां । व्यापरिष्यत ॥ **मृङ्** प्राणत्यागे । म्रियते ।

## १०९३. म्रियतेर्लुङ्लिङोश्च १-३-६१

'अनुदात्तङित इत्यत आत्मनेपदमित्यनुवर्तते । अस्य ङित्वादात्मनेपदं सिद्धमेवेति नियमार्थमिदम् । लुङ्लिङोः शितश्च प्रकृतिभूतात् म्रियतेरात्मनेपदं भवति, अन्यत्र न भवति । तेन लिटि, लुटि, लृटि, लृङि च परस्मैपदमेव । ङित्वं स्वरार्थम् । ममार । मम्रतुः । ममृथ । मर्ता । मर्तासि । मरिष्यति । म्रियतां । अम्रियत । म्रियेत । मृषीष्ट । अत्र 'उश्च' इति लिङः कित्त्वम् । अमृत । अमृषातां । अमरिष्यत् ॥ **अथ परस्मैपदिनः** । **षू** प्रेरणे । सुवति । सुषव । सुषाव । सुषुवतुः । सविता । सविष्यति । असुवत् । सुवेत् । सूयात् । असावीत् । स्वरतिसूतीत्यत्र नास्य ग्रहणम् । सूतीति निर्देशात् । तत्र लुग्विकरणस्यैव ग्रहणात् ॥ **कॄ** विक्षेपे । 'ऋत इद्धातोः'। किरति । किरतः । चकार । ऋच्छत्यृतामिति गुणः । चकरतुः । वृतो वा । करिता । करीता । किरेत् । र्वोरुपधाया इति दीर्घः । कीर्यात् । अकारीत् । अकारिष्टां ।

## १०९४. किरतौ लवने ६-१-१४०

'सुट् कात् पूर्वः' इति सूत्रमनुवर्तते। 'उपात् प्रतियत्ने' इति सूत्रा-दुपादित्यनुवर्तते। उपात् परस्य किरतेः कात् पूर्वं इडागमः स्यात् छेदेऽर्थे। उपस्किरति। छिनत्तीत्यर्थः। अडभ्यासव्यवायेऽपीत्यनुवर्तते। उपास्किरत्। उपचस्कार।

## १०९५. हिंसायां प्रतेश्च ६-१-१४१

उपात् प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ निगरणे।

## १०९६. अचि विभाषा ८-२-२१

'कृपो रो लः' इत्यतो र इति ग्रो यङीत्यतो ग्र इति चानुवर्तते। गिरतेः। रेफस्य लत्वं वा स्यादजादौ। गिरति। गिलति। जगार। जगरतुः। जगाल। जगलतुः। 'वृतो वा' गरिता। गरीता। गलिता। गलीता। अगारीत्। अगालीत्॥ दृङ् आदरे। प्रायेणाङ्पूर्वः। आद्रियते। अत्र रिङि इयङ्। कर्मण्यपि यकि रिङि आद्रियते। आदद्रे। आदर्ता। ऋद्धनोः स्ये। आदरिष्यते। आद्रियेत। आदृषीष्ट। अत्र उश्चेति लिङः कित्वम्। आदृत। आदृषातां। आदरिष्यत॥ धृङ् अवस्थाने। ध्रियते। दध्रे। धर्ता। धरिष्यते॥ **अथ परस्मैपदिनः।** प्रच्छ ज्ञीप्सायां। ग्रहिज्येति संप्रसारणम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। 'थलि वेडयम्'। पप्रच्छिथ। पप्रष्ठ। अत्र व्रश्चभ्रस्जेति षः। प्रष्टा। षत्वे 'षढोः कः सि'। प्रक्ष्यति। अप्राक्षीत्। अप्राष्टां। अप्राक्षुः। अप्राक्षीः। अप्राष्टं॥ सृज विसर्गे। सृजति। ससर्ज। ससृजतुः। विभाषा सृजिदृशोः। ससर्जिथ। सस्रष्ठ। 'सृजिदृशोर्झल्यमकिति' इत्यमागमः। स्रष्टा। स्रक्ष्यति। असृजत्। सृजेत्। सृज्यात्। अस्राक्षीत्। अस्राष्टां। अस्राक्षुः॥ टु मस्जो शुद्धौ। मज्जति। ममज्ज। थलि ममस्ज् थ सस्य श्चुत्वेन शः। तस्य जश्त्वेन जः। इति स्थिते स्कोरिति सलोपः। 'मस्जिनशोर्झलि' इति नुम्। तस्यानुस्वारे

परसवर्णे च गकारस्य चर्त्वे ममङ्क्थ । ममज्जिथ । मम इत्यादिसिद्ध्यर्थन्तु—

**मस्जेरन्त्यात् पूर्वो नुम् वाच्यः (वा)**

इति वार्तिकम् । सजयोर्मध्ये नुम् । अन्यथा सलोपस्यासिद्धत्वात् नकारस्योपधात्वाभावेन नलोपो न स्यात् । मङ्क्ता । मङ्क्ष्यति । मज्जेत् । मज्ज्यात् । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ॥ रुजो भङ्गे । रुजति । रुरोज । रोक्ता । रोक्ष्यति । अरुजत् । रुजेत् । अरौक्षीत् । अरौक्ताम् । अरौक्षुः । भुजो कौटिल्ये । भुजति । रुजिवत् । स्पृश संस्पर्शने । स्पृशति । पस्पर्श । पस्पृशतुः । अनुदात्तस्य चर्दुपधस्येत्यम् विकल्पः । व्रश्चेति षः । स्प्रष्टा-स्पर्ष्टा । स्प्रक्ष्यति-स्पर्क्ष्यति ।

**स्पृशमृशकृषतृपदृपांच्लेः सिज् वा वाच्यः (वा)**

इति सिचि अस्प्राक्षीत् । अमभावे अस्पार्क्षीत् । अस्पार्ष्टाम् । अस्पार्क्षुः । पक्षे शल इगुपधेति क्सः । व्रश्चेति षः । षढोः कः सि । अस्पृक्षत् । अस्पृक्षन् ॥ विश प्रवेशने । विशति । विवेश । विविशतुः । वेष्टा । प्रवेक्ष्यति । अविशत् । क्सः । अविक्षत् । मृश आमर्शने । मृशति । ममर्श । ममृशतुः । स्पृशमृशेति सिज् वा । अनुदात्तस्य चेत्यम् च वा । अम्राक्षीत् । अम्राष्टाम् । अमार्क्षीत् । क्सः । अमृक्षत् । आमर्शनं स्पर्शः । षद्लृ विशरणगत्यवसादनेषु । सीदतीत्यादि भौवादिकवत् । इह पाठस्तु आच्छीनद्योर्नुम् इति नुम् विकल्पार्थः । सीदन्ती-सीदती । स्वरार्थश्च । शबनुदात्तः । शस्तूदात्तः ॥ **अथोभयपदिनः ।** मिल संगमे । मिलति । मिमेल । मिमिलतुः । मेलिष्यति । मिलिष्यतीत्यसाधुः । अमिलत् । अमेलीत् । मिलते । मिमिले । अमेलिष्ट ॥ मुच्लृ मोक्षणे ।

**१०९७. शे मुचादीनाम् ७-१-५९**

इदितो नुम् धातोः इत्यतो नुमिति वर्तते । मुचादीनां नुम् स्यात् शे परे । नस्यानुस्वारः । परसवर्णः । मुञ्चति । मुमोच । मुमुचुः । मोक्ता । मोक्ष्यति । अमुञ्चत् । मुञ्चेत् । मुच्यात् । लृदित्वादङ् । अमुचत् । अमोक्ष्यत् ।

मुञ्चते । मुमुचे । मोक्ष्यते । अमुञ्चत । मुञ्चेत । मुक्षीष्ट । अत्र लिङ्-सिचाविति कित्वान्नोपधागुणः । आत्मनेपदे सिच् । अमुक्त । अमुक्षातां । अमुक्षत ॥ लुप्लृ छेदने । लुम्पति । लुलोप । लोप्ता । लोप्स्यति । अलुम्पत् । लुम्पेत् । लुप्यात् । अलुपत् । लुम्पते । लुलुपे । अलुप्त । अलुप्सातां ॥ विद्लृ लाभे । विन्दति । विवेद । विविदतुः । व्याघ्रभूत्यादिमते सेट्कोऽयम् । वेदिता । भाष्यादिमतेऽनिट्कः । वेत्ता । परिवेत्ता । परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् । ज्येष्ठं परित्यज्य दारान् लब्धवानित्यर्थः । परेर्वर्जने वृत्तिः । वेत्स्यति । अविन्दत् । विन्देत् । अङ् । अविदत् । विन्दते । विविदे । विन्देत । भाष्यमते वित्सीष्ट । व्याघ्रभूत्यादिमते वेदिषीष्ट । अङ् । अविदत । अविदन्त ॥ लिप उपदेहे । लिम्पति । उपदेहो वृद्धिः । लेपनमित्यर्थः । लिलेप । लेप्स्यति । लिम्पतु । अलिम्पत् । लिम्पेत् । लिपिसिचिह्वश्चेत्यङ् । अलिपत् । लिम्पते । लिलिपे । लेप्स्यते । 'आत्मनेपदेष्वन्यतस्याम्' इति लिप्यादीनामङ् वा । अलिपत । सिचि अलिप्त । अलिप्सातां । अलिप्सत ॥ षिच क्षरणे । सिञ्चति । उपसर्गात् सुनोतीति षः । अभिषिञ्चति । परिषिञ्चति । सिषेच । स्थादिष्वभ्यासेनेति षः । अभिषिषेच । सेक्ता । 'प्राक्सितादड्व्यवायेऽपि' । अभ्यषिञ्चत् । असेक्षीत् । असेक्तां । सिञ्चते । सिषिचे । सिञ्चेत । सिक्षीष्ट । असिक्त । असिक्षत ॥ कृती छेदने । परस्मैपदी । कृन्तति । चकर्त । चकृततुः । कर्तिता । कर्तिष्यति । सेऽसिचीत्यादिना सादौ वेट् । कर्त्स्यति । सिचि तु नित्यमिट् । अकर्तीत् । अकर्तिष्टां । अकर्तिष्यत् । अकर्त्स्यत् ॥

इति तुदादयः

---

## अथ रुधादयः

**अथोभयपदिनः ।** **रुधिर्** आवरणे ।

### १०९८. रुधादिभ्यः श्नम् ३-१-७८

रुधादिभ्यः श्नम् प्रत्ययः स्यात् कर्त्रर्थे सार्वधातुके परे । शपोऽपवादः । शकार इत् । मित्वादन्त्यादचः परः । कृतेऽकृते च गुणे श्नमः प्रवृत्तेरयं नित्यः । रु न ध् ति इति स्थिते । झषस्तथोर्धोऽधः इति तकारस्य धः । नस्य णः । प्रथमधस्य जश्त्वम् । रुणद्धि । रुन्धः । अत्र श्नसोरल्लोपः । णत्वस्यासिद्धत्वात् 'नश्चापदान्तस्य झली' त्यनुस्वारः । 'अनुस्वारस्य ययि परसवर्णः' । न पदान्तेति सूत्रेण अनुस्वारपरसवर्णयोः कर्तव्ययोरल्लोपो न स्थानिवत् । रुन्धन्ति । रुणत्सि । रुन्धः । झषस्तथोरिति थस्य धः । रुन्ध । रुणध्मि । धस्यानुनासिकस्तु न । अपदान्तत्वात् । रुन्ध्वः । रुन्ध्मः ॥ रुरोध । रुरुधतुः । रोद्धा । रोत्स्यति । रुणद्धु । रुन्धात् । रुन्धां । रुन्धन्तु । हुझल्भ्यो हेर्धिः । रुन्धि । रुणधानि । आडुत्तमस्य पिच्च । अङित्वात् श्नसोरल्लोपो न । रुणधाव । रुणधाम । अरुणत् । हल्ङ्याब्भ्यो दीर्घात् ... हल्ङ्यादिलोपः । अरुन्धां । अरुन्धन् । अरुणत्-अरुणः । अत्र 'दश्च' इति रुत्वे विसर्गः । अरुणधं । अरुन्ध्व ॥ रुन्ध्यात् । रुध्यात् । इरितोवेत्यङ् । अरुधत् । पक्षे सिचि । अरौत्सीत् । अरौद्धां । अरौत्सुः । अरोत्स्यत् । रुन्धे । रुन्धाते । रुन्धते । रुरुधे । रुन्धां । अरुन्ध । अरुन्धातां । अरुन्धत । रुन्धीत 'लिङ्सिचावात्मनेपदेषु' इति लिङः कित्वम् । रुत्सीष्ट । अरुद्ध । अरुत्सातां ॥ आत्मनेपदेत्वङ् न ॥

**भिदिर्** विदारणे । भिनत्ति । बिभेद । भेत्स्यति । भिनत्तु । अभिनत् । अभिन्तां । अभिनत्-अभिनः । अभिनदं । अभिन्द्व । भिन्ते । बिभिदे । भेत्स्यते । भिन्तां । भिन्दातां । अभिन्त । भिन्दीत । 'लिङ्सिचावात्मनेपदेषु' । भित्सीष्ट । अभित्त । अभित्सत । अभित्सि । अभेत्स्यत ॥ छिदिर् द्वैधीकरणे । छिनत्ति । चिच्छेद । छेत्स्यति । अच्छिनत् । छिन्द्यात् ।

छिद्यात् । अच्छिदत्-अच्छेत्सीत् ॥ छिन्ते । चिच्छिदे । छेत्ता । अच्छिन्त । छिन्दीत । अच्छित्त । अच्छित्साताां ॥ **विचिर्** पृथग्भावे । विनक्ति । विङ्क्त । विञ्चन्ति । विवेच । अविनक् । अविङ्क्ताां । विञ्च्यात् । विच्यात् ॥ अविचत्-अवेक्षीत् । अवेक्ताां । अवेक्षुः ॥ विङ्क्ते । विविचे । वेक्ष्यते । अविङ्क्त । अविक्त । अविक्षाताां । अविक्षत ॥ ञिइन्धी दीप्तौ । आत्मनेपदी । श्नमि इ न न् ध् ते इति स्थिते—

## १०९९. श्नान्नलोपः ६-४-२३

श्नमः परस्य नकारस्य लोपः स्यात् । इति नकारस्य लोपे इ न ध् ते इति जातम् । ततः 'श्नसोरल्लोपः' । 'झषतथो र्धोऽधः' । जश्त्वम् । इन्द्धे । यद्यप्यत्र अनिदितामित्येव नलोपः सिद्धः तथापि इनधै, अनक्ति इत्याद्यर्थमावश्यकं सूत्रं न्याय्यत्वादिहोपन्यस्तम् । इन्द्धाते । इन्त्से । इन्द्ध्वे । इन्धाञ्चक्रे । इन्धिता । इन्धाम् । इनधै । 'श्नान्नलोपः' इनधावहै । ऐन्ध । ऐन्धाः । इन्धीत । इन्धिषीष्ट । ऐन्धिष्ट ॥ अथ परस्मैपदिनः । **शिष्लृ** विशेषणे । शिनष्टि । विशिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिनष्मि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । शिनष्टु । मध्यमपुरुषैकवचने लोटि शिण्ढि । अत्र हेर्धिः । शिन् ष् धि इति स्थिते 'झलां जश् झशि' इति षस्य डः । नस्यानुस्वारः । तस्य परसवर्ण इति बोध्यम् । शिनषाणि । अशिनट् । अशिंष्टां । शिंष्यात् । शिष्यात् । लृदित्वादङ् । अशिषत् । अशेक्ष्यत् ॥ **पिष्लृ** संचूर्णने । पिनष्टि । पिपेष । पेष्टा । पेक्ष्यति । अपिनट् । अपिषत् । अपेक्ष्यत् ॥ **भञ्जो** आमर्दने । भनक्ति । भङ्क्तः । भञ्जन्ति । बभञ्ज । बभञ्जिथ । बभङ्क्थ । भङ्क्ता । भङ्क्ष्यति । अभनक् । भज्यात् । अभाङ्क्षीत् । अभाङ्क्ताां । अभाङ्क्षुः ॥ **भुज** पालनाभ्यवहारयोः ।

## ११००. भुजोऽनवने १-३-६६

अवनं रक्षणम् । ततोऽन्यस्मिन्नर्थे भुजेरात्मनेपदं स्यात् । पालनार्थे भुजिः

परस्मैपदी । अभ्यवहारार्थे त्वात्मनेपदीति विवेकः । भुनक्ति । भुञ्जन्ति । बुभोज । भोक्ता । भोक्ष्यति । अभुनक् । अभुङ्क्तां । अभुञ्जन् । भुञ्ज्यात् । भुज्यात् । अभौक्षीत् । अभोक्ष्यत् । भुङ्क्ते । भुञ्जाते । भुङ्क्ष्व । भुञ्जे । बुभुजे । भुङ्क्तां । भुञ्जातां । भुञ्जतां । भुनजै । अभुङ्क्त । भुञ्जीत । भुक्षीष्ट । अभुक्त । अभुक्षातां । 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वान्नोपधागुणः ॥ हिसि हिंसायां । इदित्वान्नुम् । 'श्नान्नलोपः' इति नुमो लोपः । हिनस्ति । हिंस्तः । नुम् । जिहिंस । जिहिंसतुः । हिंसिता । हिंसिष्यति । तिप्यनस्तेः । अहिनत् । अहिंस्तां । अहिंसन् । सिपि धातोरुर्वा । अहिनः । पक्षे जश्त्वेन दः । अहिनत् । अहिंस्तं । अहिंस्त । हिंस्यात् । आशिषि नलोपो न । इदित्वात् । हिंस्यात् । हिंस्यास्तां । अहिंसीत् । अहिंसिष्टां । अहिंसिष्यत् । अञ्जू व्यक्तिमर्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । ऊदित्वादिट् । अङ्क्ता-अञ्जिता । अङ्क्ष्यति-अञ्जिष्यति । आनक् । आङ्क्तां । आञ्जन् । अञ्ज्यात् । अज्यात् ॥

## ११०१. अञ्जेः सिचि ७-२-७१

इडत्यर्तिव्ययतीनामित्यतः इठिति वर्तते । अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । आञ्जिष्टां । आञ्जिषुः ।

इति रुधादयः

---

## अथ तनादयः

तनु विस्तारे । उभयपदी । 'तनादिकृञ्भ्य उः' । तनोति । तनुतः । तन्वन्ति । 'लोपश्चास्यान्यतरस्यां म्वोः' । तन्वः-तनुवः । तन्मः-तनुमः । ततान । तेनतुः । तेनिथ । तनिष्यति । तनोतु । 'उतश्च प्रत्ययादिति' हेर्लुक । तनु । तनुवानि । अतन्व-अतनुव । तनुयात् । तन्यात् ।

अतानीत् । अतानिषुः । 'अतो हलादेर्लघोः' । अतनीत् । तनुते । तन्वे । तन्वहे-तनुवहे । तेने । तनिता । तनुतां । अतनुत । तन्वीत । तनिषीष्ट ।

१९०२. तनादिभ्यस्तथासोः २-४-७९.

'गातिस्था . . .' इत्यतः सिजिति, 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यतो लुगिति, 'विभाषा घ्राधेट् . . .' इत्यतो विभाषेति चानुवर्तते । सूत्रे थासा साहचर्यादेकवचन तशब्दो गृह्यते । न तु परस्मैपदं मध्यमपुरुषबहुवचनम् । तनादेः सिचो वा लुक स्यात्तथासोः । सिचो लुकि 'अनुदात्तोपदेश . . .' इति अनुनासिकलोपः । अततः-अतनिष्ट । अतथा-अतनिष्ठाः । एकवचनमिति किम् ? यूयमतनिष्ट-अतनिष्ट । मनु अवबोधने । आत्मनेपदी । मनुते । मेने । सेडयम् । मनिता । मनिष्यते । दैवादिकस्य तु मन्ता । मनुतां । मन्वीत । मनिषीष्ट । अमत-अमनिष्ट । अमथाः-अमनिष्ठाः ॥ डु कृञ् करणे । करोति । 'अत उत्सार्वधातुके' । कुरुतः । 'इको यणची'ति यण् । कुर्वन्ति । अत्र 'हलि चे'ति दीर्घे प्राप्ते ।

११०३. न भकुर्छुराम् ८-२-७९

भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । इति निषेधः । करोषि । करोमि । 'लोपश्चास्य . . .' इत्युकारलोपविकल्पे प्राप्ते ।

११०४. नित्यं करोतेः ६-४-१०८

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्याद्म्वयोः परयोः । कुर्वः । कुर्मः । चकार । चक्रतुः । चकर्थ । चकृव । चकृम । कर्ता । 'ऋद्धनोः स्ये' । करिष्यति । करोतु-कुरुतात् । कुरु । करवाणि । अकरोत् ।

११०५. ये च ६-४-१०९

'लोपश्चास्य . . .' इत्यतो लोप इति अस्येति च वर्तते । अस्य—उकारस्य । अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते । तदादिविधिः । करोतेरुलोपः स्याद्यादौ प्रत्यये परे । कुर्यात् । कुर्यातां । कुर्युः । आशिषि-क्रियात् । क्रियास्तां । अत्र 'रिङ्शयग् लिङ्क्षु' इति रिङ् । अकार्षीत् । अकार्ष्टां । अकरिष्यत् ॥

कुरुते । कुर्वाते । कुर्वते । चक्रे । चकृषे । चकृवहे । कर्ता । करिष्यते । कुरुतां । अकुरुत । कुर्वीत । कुर्वीयातां । कुर्वीरन् । कृषीष्ट । अत्र "उश्च" इति कित्वान्न गुणः । अकरिष्यत ।

## ११०६. संपरिभ्यां करोतौ भूषणे ६–१–१३७

## ११०७. समवाये च ६–१–१३८

## ११०८. सुट् कात्-पूर्वः ६–१–१३५

इत्यधिकृतम् । संपरिभ्यां परस्य करोतेः कात् पूर्वः सुट् स्यात् भूषणे समवाये चार्थे । समवायः संघातः । संस्करोति । सँस्करोति । 'समः सुटि, अत्रानुनासिकः पूर्वस्य तु वा' इत्यादि संधिप्रकरणोक्तमत्र संस्मरणीयम् । 'परिनिविभ्य . . .' इति सुटः षः । परिष्करोति । भूषयतीत्यर्थः । समवाये-संस्कृतं । परिष्कृतं । समुदितमित्यर्थः । भूषितमित्यर्थोऽपि । संपूर्वस्य क्वचिद्भूषणेऽपि सुट् । संस्कृतं भक्षाः (४–२–१६) इति ज्ञापकात् । सत उत्कर्षाधानमत्र संस्कारः ।

### अडभ्यासव्यवायेऽपि (वा)

अटा अभ्यासेन च व्यवधानेऽपि कात् पूर्वः सुड् भवतीत्यर्थः । समस्करोत् । 'सिवादीनां वाड्व्यवयोऽपीति' वा षत्वं । पर्यस्करोत् । पर्यष्करोत् । संचस्कार । अभ्यासव्यवाये । कात पूर्वः सुट् । सुटि 'ऋतश्च संयोगादेर्गुणः' इति गुणः । संचस्करतुः । 'कृसृ भृवृ . . .' इति सूत्रे 'ऋतो भारद्वाजस्य' इति सूत्रे च—

### कृञोऽसुट इति वक्तव्यम् (वा)

इति वार्तिकादत्र इट् । संचस्करिथ । संचस्करिव । संचस्करिम ॥ संस्क्रियात् । संस्कृषीष्ट ॥ अत्र उश्चेति लिङः कित्वम् ।

## ११०९. उपात् प्रतियत्न वैकृत वाक्याध्याहारेषु च ६–१–१३९

उपात् परस्य करोतेः कात् पूर्वः सुट् स्यात् प्रतियत्नादिष्वर्थेषु । चात् प्रागुक्तयोर्भूषणसमवाययोः । प्रतियत्नो गुणाधानम् । काष्ठमुदकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । कर्मणि शेषत्वेनविवक्षिते षष्ठी । वैकृतं विकारः ।

उपस्कृतं भुङ्क्ते। विकृतमित्यर्थः। एवमुपस्कृतं गच्छति। वाक्याध्याहारे उपस्कृतं जल्पति। वाक्याध्याहारेण जल्पतीत्यर्थः। 'साकांक्षमनुपस्कारं विष्वग्गामि निराकुलम्' (किरा. ११-३८)। उपस्कृता कन्या। अलङ्कृतेत्यर्थः। उपस्कृता जनाः। समुदिता इत्यर्थः॥

इति तनादयः

---

## अथ क्र्यादयः

डु क्रीञ् द्रव्यविनिमये।

### १११०. क्र्यादिभ्यः श्ना ३-१-८१

क्र्यादिभ्यः श्नाप्रत्ययः स्यात् कर्त्रर्थे सार्वधातुके परे। शपोऽपवादः। णत्वं। क्रीणाति। 'ईहल्यघोः'। क्रीणीतः। ईत्वात् पूर्वं झेरन्तादेशः। नित्यत्वादन्तरङ्गत्वाच्च। ततः 'श्नाभ्यस्तयोरातः' इत्यालोपः। क्रीणन्ति। क्रीणासि। क्रीणीथः। चिक्राय। चिक्रियतुः। थलि वेडयम्। चिक्रयिथ-चिक्रेथ। चिक्रियिव। क्रेता। क्रेष्यति। क्रीणातु-क्रीणीतात्। क्रीणानि। क्रीणाव। अक्रीणात्। अक्रीणीतां। अक्रीणन्। क्रीणीयात्। क्रीयात्। क्रीयास्तां। अक्रैषीत्। अक्रैष्टां। अक्रैषुः। अक्रेष्यत्॥ क्रीणीते। क्रीणाते। आत्मनेपदेष्वनतः' इत्यन्तरङ्गत्वादीत्वात् पूर्वं झस्य अत्। आलोपः। क्रीणते। चिक्रिये। क्रेष्यते। क्रीणीतां। अक्रीणीत। अक्रीणत। अक्रीणि। क्रीणीत। क्रेषीष्ट। अक्रेष्ट। अक्रेष्यत॥ प्रीञ् तर्पणे कान्तौ च। कान्तिः कामनं। प्रीणाति। पिप्राय। पिप्रियतुः। प्रेता। प्रेष्यति। प्रीणातु। अप्रीणन्। प्रीणीयात्। प्रीयात्। अप्रैषीत्। अप्रेष्यत्। प्रीणीते। पिप्रिये। प्रीणीतां। अप्रीणीत। अप्रीणातां। अप्रीणत। प्रीणीत। 'आतो ङितः' इति इयादेशः। प्रीणीयातां। प्रीणीरन्। अप्रेष्ट। अप्रेषत। अप्रेष्यत॥ पूञ् पवने।

## १११९. प्वादीनां ह्रस्वः ७-३-८०

'ष्ठिवुक्लमुचमां शिति' इत्यतः शितीति वर्तते। प्वादीनां ह्रस्वः स्यात् शिति परे। पुनाति। पुपाव। सेड्यम्। पविता। पविष्यति। पुनातु। अपुनात्। पुनीयात्। पूयात्। अपावीत्॥ पुनीते। पुनते। पुपुवे। पविष्यते। पुनीतां। पविषीष्ट। अपविष्ट। उवङः परत्वान् गुणः॥ स्तॄञ् आच्छादने। स्तृणामिति। तस्तार। 'ऋच्छत्यॄतामिति' गुणः। तस्तरतुः। 'वॄतो वेति' दीर्घविकल्पः। स्तरिता-स्तरीता। अस्तृणात्-स्तृणीयात्। आशिषि स्तीर्यात्। अस्तारीत् 'सिचि च परस्मैपदेषु' इति न दीर्घः। अस्तारिष्टां॥ स्तृणीते। तस्तरे। स्तृणीतां। अस्तृणीत। आशिषि 'वॄतो वा' इति दीर्घो न। 'न लिङि' इति निषेधात्। स्तरिषीष्ट। 'लिङ्सिचोरात्मनेपदेषु' इति वेट् इडभावपक्षे उश्च' इति कित्वम्। 'हलि च' इति दीर्घः। स्तीर्षीष्ट। अस्तरीष्ट। अस्तरिष्ट। अस्तीर्ष्ट॥ वॄञ् वरणे। वृणाति। ववार। ववतुः। वरिता-वरीता। वरिष्यति-वरीष्यति। वृणातु। वृणन्तु। वृणीहि। अवृणात्। वृणीयात्। आशिषि—'उदोष्ठ्यपूर्वस्य' इत्युत्वे 'हलिचे'ति दीर्घः। वूर्यात्। अवारीत्। अवारिष्टां। 'सिचि च परस्मैपदेषु' इतीटो दीर्घो न। अवरिष्यत्-अवरीष्यत्॥ वृणीते। वृणते। 'वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः' (किरा.)। वव्रे। वृणीतां। अवृणीत। वृणीत। वरिषीष्ट। इडभावे-वूर्षीष्ट। लुङि अवरिष्ट-अवरीष्ट। अवूर्ष्ट॥ धूञ् कम्पने। धुनाति। दुधाव। दुधुवतुः। दुधविथ-दुधोथ। दुधुविव। धविता-धोता। अत्र 'स्वरतिसूतीति' वेट्। लुङि 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति नित्यमिट्। अधावीत्। अधाविष्टां॥ धुनीते। दुधुवे। धुनीतां। अधुनीत। धुनीत। धविषीष्ट-धोषीष्ट। अधविष्ट-अधोष्ट॥ ज्ञा अवबोधने। परस्मैपदी। 'ज्ञाजनोर्जा'। जानाति। अत्र 'प्वादीनां ह्रस्वः' इति ह्रस्वो न। 'ज' इति दीर्घनिर्देशसामर्थ्यात्। 'जायते' इत्यत्र तु 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यनेनैव सिद्धेः। जानाति। जानीतः। जानन्ति। जज्ञौ। ज्ञलि वेड्यम्।

जज्ञिथ-जज्ञाथ । जज्ञिम । ज्ञाता । ज्ञास्यति । जानातु । जानीतात् । जानीहि । अजानात् । जानीयात् । जानीयुः । ज्ञायात् । अज्ञासीत् । अज्ञासिष्टां । अज्ञास्यत् ॥

### १११२. अनुपसर्गाज्ज्ञः १-३-७६

'अनुदात्तङित' इत्यत आत्मनेपदमिति 'स्वरितञित' इत्यतः कर्त्रभिप्राये इति चानुवर्तते । अनुपसर्गात् जानातेरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । गां जानीते । जज्ञे । ज्ञाता । ज्ञास्यते । जानीतां । अजानीत । जानीत । ज्ञासीष्ट । अज्ञास्त । अज्ञास्यत ॥ **अथ परस्मैपदिनः ।** **बन्ध** बन्धने । 'अनिदितामिति' नलोपः । बध्नाति । बबन्ध । बबन्धिथ-बबन्ध । थलि-वेडयम् । अनिट्पक्षे 'झषस्तथोर्धोऽधः इति' थस्य धः । बन्धा । 'एकाचो बशो भष्...' । भन्त्स्यति । बध्नातु । बन्ध् ना हि इति स्थिते नलोपः ।

### १११३. हलः श्नः शानज् हौ ३-१-८३

हलः परस्य श्नाप्रत्ययस्य शानजादेशः स्यात् हौ परे । 'अतो हेरिति' हेर्लुक् । बधान । अबध्नात् । बध्नीयात् । बध्यात् । अभान्त्सीत् । अबान्धां । अत्र भष्भावात् पूर्वं 'झलो झलि' इति सिज्लोपः । 'पूर्वत्रासिद्धमिति' भष्भावस्यासिद्धत्वात् । अभान्त्सुः । अबन्धाः ॥ अभन्त्स्यत् ॥ **मन्थ** विलोडने । मथ्नाति । ममन्थ । मन्थिष्यति । मथ्नातु । मथान । मथ्नीयात् । मथ्यात् । 'नेटीति' वृद्धिनिषेधः । अमन्थीत् । अमन्थिषुः ॥ **ग्रन्थ** संदर्भे । ग्रथ्नाति । जग्रन्थ । ग्रन्थिता । ग्रथान । अग्रन्थीत् ॥ **मृद** क्षोदे । मृद्नाति । ममर्द । ममृदतुः । मर्दिष्यति । मृद्नातु । मृदान । अमृद्नात् । अमर्दीत् ॥ **कुष** निष्कर्षे । निष्कर्षो निष्कासनम् । कुष्णाति । चुकोष । कोषिता । अकुष्णात् । अकोषीत् ।

### १११४. निरः कुषः ७-२-४६

'स्वरति सूती' त्यतो वेति वर्तते । निरःपरात् कुषो वलादेरार्धधातुकस्येड् वा स्यात् । निष्कोषिष्यति निष्कोष्टा । निरकोषीत् । अनिट् पक्षे-'शल इगुपधादिति' क्सः, 'षढोः कः सि' । निरकुक्षत् ॥ **क्षुभ** संचलने ।

'क्षुभ्नादिषु च' इति णत्वनिषेधः। क्षुभ्नाति। क्षुभ्यतीति दिवादौ। चुक्षोभ क्षुभान अक्षुभ्नात्। अक्षोभीत्। अक्षोभिष्यत्॥ **क्लिशू** विबाधने। क्लिश्नाति चिक्लेश। चिक्लेशिथ। लिङोऽन्यत्र। ऊदित्वाद्वेट्। क्लेशिता-क्लेष्टा। क्लिश्नातु क्लिश्नीयात्। क्लिश्यात्। अक्लेशीत्। अक्लेशिष्टां। इडभाव पक्षे-क्सः अक्लिक्षत्। अक्लेशिष्यत्। अक्लेक्ष्यत्॥ **अश** भोजने अश्नाति। आश आशिथ। अशिष्यति। आश्नात्। आश्नीतां। आश्नन्। आशीत् मा भवान् आशीत्। 'नेटीति' वृद्धिनिषेधः॥ **पुष** पुष्टौ। पुष्णाति पुपोष। पुपुषतुः। पोषिष्यति। श्यन् विकरणस्य तु पोक्ष्यति। 'पुषादि द्युताद्यत्र श्यन् विकरणस्यैव ग्रहणादिह अङ् न। अपोषीत्॥ **मुष** स्तेये मुष्णाति। मुमोष। मोषिता। अमुष्यात्। अमोषीत्॥ **ग्रह** उपादाने उभयपदी। 'ग्रहिज्येति' संप्रसारणम्। गृह्णाति। जग्राह। जगृहतुः जग्रहिथ। जग्राह-जग्रह। जगृहिव।

## ११११५. ग्रहोऽलिटि दीर्घः ७-२-३७

'आर्धधातुकस्येडि'त्यतोऽनुवृत्तमिट्पदं षष्ठ्यन्ततया विपरिणम्यते। विहितस्येत्यध्याहारः। ग्रसेर्विहितस्येटो दीर्घः स्यान्न तु लिटि। ग्रहीता। ग्राहिष्यति। विहितस्येति किम्? ग्राहितम्। णिजन्तात् क्तः। गृह्णातु। गृह्णीयात्। गृह्यात्। अग्रहीत्। अत्र 'अतो हलादेरिति' वृद्धिर्न। 'ह्म्यन्तक्षणेति' निषेधात्। अग्रहीष्टां। अग्रहीषुः। अग्रहीष्यत्॥ गृह्णीते। जगृहे। जगृहिषे। गृह्णीतां। गृह्णीत। ग्रहीषीष्ट। अग्रहीष्ट। अग्रहीषातां। अग्रहीषत। अग्रहीष्ट। अग्रहीष्यत॥

इति क्र्यादयः

---

## अथ चुरादयः

चुर स्तेये।

### १११६. सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३-१-२५

एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति वक्ष्यमाणेन गणसूत्रेण सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे णिच्। 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे' इति न्यायात्। 'सनाद्यन्ता धातवः' इति णिजन्तानां धातुत्वम्। तिप्शबादयः। गुणायादेशौ। चोरयति॥ सत्यादीनान्तु सत्यं करोत्याचष्टे वा सत्यापयति। णिच्सन्नियोगेनापुगागमो निपात्यते। पाशाद्विमोचयति विपाशयति। रूपं पश्यति रूपयति। वीणया उपगायति उपवीणयति। तूलेनानुकुष्णाति अनुतूलयति। तृणाग्रं तूलेन अनुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभियाति अभिषेणयति। 'उपसर्गात् सुनोतीति' षः। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति। अदन्तोऽयं त्वचशब्दः। वर्मणा संनह्यति संवर्मयति। वर्णं गृह्णाति अनुवर्णयति। चूर्णैरवध्वंसते अवचूर्णयति। सर्वत्र प्रातिपदिकेभ्यो णिचि इष्ठवद्भावातिदेशात् भसंज्ञायां टिलोपः। सत्यापयतीत्यत्र तु न। आपुगन्तत्वेन निपातनसामर्थ्यात्। 'कास्प्रत्ययादाममन्त्रे लिटि'। चोरयामास। चोरयांबभूव। चोरयाञ्चकार। चोरयिता। चोरयिष्यति। चोरयतु। अचोरयत्। चोरयेत्। चोर्यात्। अत्र 'णेरनिटीति' णिलोपः। प्रत्ययलक्षणेनोपधागुणः। 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्'। 'णौ चङ्युपधाया ह्रस्वः'। द्वित्वम्। 'हलादिः शेषः'। 'दीर्घो लघो'रित्यभ्यासदीर्घः। अचूचुरत्। अचोरयिष्यत्।

### १११७. णिचश्च १-३-७४

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले। चोरयते। 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य'। चोरयाञ्चक्रे॥ चोरयिष्यते। चोरयताम्। अचोरयत। चोरयेत। चोरयिषीष्ट। अचूचुरत। अचोरयिष्यत॥ चिति

स्मृत्या । चिन्तयति । अचिचिन्तत् । चिन्तयते । अचिचिन्तत ॥ यत्रि संकोचे । यन्त्रयति । यन्त्रयते इत्याद्यात्मनेपदे रूपाण्यपि णिजन्तानां यथायथं बोध्यानि ॥ अययन्त्रत् । अभ्यासस्य लघुपरकत्वाभावेन सन्वद्भावो नास्ति । तेन इत्त्वदीर्घौ न । एवमग्रेऽपि संयोगान्तधातूनां ज्ञेयम् । लक्ष दर्शनाङ्कनयोः । लक्षयति । लक्षयामास । अललक्षत् । लड उपसेवायां । लाडयति । डलयोरभेदात् लालयति । पीड अवगाहने । पीडयति । अपीपिडत् ।

## ११११८. भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ७-४-३

'णौ चङ्युपधाया ह्रस्वः' इत्यनुवर्तते । भ्राजादीनामुपधाया ह्रस्वो वा स्याच्चङ्-परे णौ । इति ह्रस्वाभावपक्षे अपिपीडत् । अभ्यासस्य लघुपरकत्वाभावात् सन्वद्भावो नास्ति । तेन 'दीर्घो लघोः' इत्यभ्यासदीर्घो न ॥ नट अवस्पन्दने । अवस्पन्दनं नाट्यम् । नाटयति । प्रनाटयति । णोपदेशत्वाभावान्न णत्वम् । भ्वादौ नटति । प्रणटतीति । घटादेस्तु हेतुमण्णिचि नटयति । प्रणटयतीति च ॥ बध संयमने । बाधयति । अबीबधत् । बन्धेति चान्द्रः । बन्धयति । अबबन्धत् । ऊर्ज बलप्राणनयोः । ऊर्जयति । और्जिजत् ॥ वर्ण प्रेरणे । वर्णन इत्येके । वर्णयति । अववर्णत् ॥ प्रथ प्रख्याने । प्राथयति । प्रथयतीति तु पृथुं करोति इति विग्रहे णिचि बोध्यम् ॥

## ११११९. अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ७-४-९५

'अत्र लोपोऽभ्यासस्ये'त्यत अभ्यासस्येति, 'सन्वल्लघुनि . . .' इत्यतः चङ्परे इति च वर्तते । स्मृप्रभृतीनामभ्यासस्याकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्वापवादः । अपप्रथत् ॥ भक्ष अदने । अबभक्षत् ॥ लुण्ठ स्तेये । लुण्ठयति । लुण्टतीति लुठि स्तेये इति भौवादिकस्य ॥ षान्त्व सामप्रयोगे । सान्त्वयति ॥ श्रण दाने प्रायेणायं विपूर्वः । विश्राणयति ॥ तड आघाते । ताडयति ॥ अतीतडत् ॥ मडि भूषायां हर्षे च । मण्डयति ॥ छर्द वमने ॥ चुद संचोदने । चोदयति ॥ क्षल शौचकर्मणि । क्षालयति ॥ तुल उन्माने । तोलयति ॥ कथं तुलयतीति ? तुलाशब्दात् तत्करोतीति णिच् ॥ दुल

उत्क्षेपणे । दोलयति ॥ दोलयामास । अदूदुलत् ॥ **मूल** रोहणे । मूलयति । उन्मूलयति ॥ **पाल** रक्षणे । पालयामास ॥ **ज्ञप** मिच्च । अयं ज्ञाने ज्ञापने च वर्तते । अस्य मित्त्वमतिदिश्यते ।

### ११२०. मितां ह्रस्वः ६-४-९२

'ऊदुपधाया गोहः' इत्यत उपधाया इति 'दोषो णौ' इत्यतो णाविति च वर्तते । मितामुपधाया ह्रस्वः स्यात् णौ परे । 'अत उपधाया' इति वृद्धावनेन ह्रस्वः । ज्ञपयति । ज्ञाधातुर्घटादौ मित् पठितः । तस्माण्णिचि पुकि 'मितां ह्रस्व' इति ह्रस्वे ज्ञपयतीत्येव । कथं तर्हि ज्ञापयत्याचार्य इत्यादि ? उच्यते । माधवमते अचाक्षुषज्ञाने ज्ञाधातुर्न मित् । तन्मते-ज्ञापयतीति निर्बाधम् । मतान्तरे तु-ज्ञा नियोगे इति चुरादौ पठिष्यमाणस्येदं रूपम् । धातूनामनेकार्थत्वात् ॥ **यम** च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनम् । यमयति चन्द्रम् । परिवेष्टत इत्यर्थः । **रह** त्यागे । रहयति । अरीरहत् । कथादेस्तु अदन्तत्वात् अररहत् ॥ **बल** प्राणने । बलयति ॥ घट्ट चलने । **टकि** बन्धने । टङ्कयति । **चूर्ण** संकोचने । **पूज** पूजायां । पूजयति । अपूपुजत् । **तिज** निशाने । तेजयति ॥ कृत संशब्दने ।

### ११२१. उपधायाश्च ७-१-१०१

'ऋत इद्धातोः' इत्यनुवर्तते । धातोरुपधाया ऋकारस्य इकारादेशः स्यात् । रपरत्वम् । 'उपधायां च' इति दीर्घः । कीर्तयति ।

### ११२२. उर्ऋत् ७-४-७

'णौ चङ्युपधाया' इत्यनुवर्तते । 'जिघ्रतेर्वा' इत्यतो वेति च । उपधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ । अचीकृतत् । पक्षे 'उपधायाश्च'तीत्वे रपरत्वे अचिकीर्तत् । लघुपरकत्वाभावात् सन्वद्भावाभावेन उपधादीर्घो न । **वर्ध** च्छेदनपूरणयोः । केशान् वर्धयति ॥ **म्लेच्छ** अव्यक्तायां वाचि । **गर्ज** शब्दे । **वर्ह** हिंसायाम् । निबर्हयति ॥ **आकुस्मा**-दात्मनेपदिनः । कुस्म नाम्नो वा इति वक्ष्यते । तावत्पर्यन्तं धातव आत्मने-

पदिनः अकर्तृगामिन्यपि फले । **दशि** दंशने । दंशयते । चुरादौ पठिते-ष्विदितां धातूनां पाक्षिकं णिजभावं केचिन्मन्यन्ते । आकुस्मीयमात्मनेपदं णिच् संनियोगेनैव । दंशति । अत्र नलोपो न । 'दंशिलङ्गेति' सूत्रे भ्वादेरेव दंशेर्ग्रहणात् ॥ **मत्रि** गुप्तपरिभाषणे । मन्त्रयते ॥ **तर्ज** भर्त्स तर्जने । तर्जयते । भर्त्सयते । **कुत्स** अवक्षेपणे ॥ **त्रुट** छेदने । **भल** आभण्डने । निभालयते । पश्यति विमृशतीति चार्थः । आभण्डनं लक्षणस्वरूपप्रामाण्यादि प्रकारकज्ञानम् । **वञ्चु** प्रलम्भने । प्रलंभनमभिकांक्षोत्पादनं, वञ्चनेति यावत् । वञ्चयते ॥ **मद** तृप्तियोगे । मादयते । मादयतीति दैवादिकस्य । तस्यैव 'मदी हर्षग्लेपनयोः' इति घटादौ पठितस्यार्थविशेषे मदयतीत्यपि ॥ **विद** चेतनाख्याननिवासेषु । वेदयते । निवेदयते ॥

> सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
> विन्दते विन्दति प्राप्तौ श्यन् लुक् श्नम्शेष्विदं क्रमात् ॥

**कुस्म** नाम्नो वा । कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अथवा कुस्मेति प्रातिपदिकम् । कुस्मं करोतीति णिच् । कुस्मयते ॥ इत्या-कुस्मीयाः ॥ **चर्च** अध्ययने । चर्चयति-चर्चयते । **बुक** भषणे । बुक्कयति ॥ **शब्द** उपसर्गादाविष्कारे च । चाद्भाषणे । **अनुपसर्गाच्च** । आविष्कारे इत्येव । तथाच शब्दधातुरनुपसर्ग आविष्कारे, सोपसर्गस्तु भाषणाविष्कारयोः । शब्दयति= शब्दं जनयति । संशब्दयति=भाषते । प्रतिशब्दयति=प्रतिध्वनिं जनयति । 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' (३-१-१७) इति क्यङि शब्दं करोति=शब्दायते इत्यपि । शब्दायतीति तु चिन्त्यम् ॥ **षूद** क्षरणे । सूदयति । असूषुदत् ॥ **स्फुट** भेदने । स्फोटयति । विकासे शशपोः स्फुटति स्फोटते इत्युक्तम् ॥ **हन्त्यर्थाश्च** । हन हिंसागत्योरित्यदादौ पठ्यते । हिंसा गतिश्च धात्वर्थः । तदर्थका ये धातवो नवगण्यां पटिताः ते स्वार्थे णिचं वा लभन्त इत्यर्थः । तथाहि हन्तेः स्वार्थे णिच् । हन् इ इति स्थिते ।

## ११२३. हनस्तोऽचिण्णलोः ७-३-३२

'अचो ञ्णिती' त्यतो ञ्णितीत्यनुवर्तते। हन्तेस्तकारोऽन्तादेशः स्यात् चिण्णल् वर्जे ञिति णिति। हत् इ इति जाते 'हो हन्तेर्ञ्णिन्नेषु' इति हस्य कुत्वेन घकारः। 'अत उपधायाः' इत्यकारस्य वृद्धिः। घातयति। हन्तीत्यर्थः। हिंसयति। हिनस्तीत्यर्थः॥ **अर्ज** प्रतियत्ने। द्रव्यमर्जयतीति धातूनामनेकार्थत्वात्। **घुषिर्** विशब्दने। विशब्दनं शब्देन स्वाभिप्रायाविष्करणम्। घोषयति। अजूघुषत्। अस्य णिज् विकल्प इति व्याख्यातारः। घोषति। अघोषीत्। अघोषिष्टां। इरित्त्वादङ् वा। अघुषत्। एवमस्य लुङि रूपत्रयम्॥ **तसि भूष** अलङ्करणे। अवतंसयति। भूषयति॥ **मोक्ष** असने। मोक्षयति॥ **अर्ह** पूजायां। **ज्ञा** नियोगे।

## ११२४. अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ७-३-३६

अर्त्यादीनां णौ परे पुगागमः स्यात्। आतामित्यनेन सूत्रे आकारान्तधातूनां ग्रहणम्। आज्ञापयति॥ **ऋ** गतिप्रापणयोः। अर्पयति। चुरादौ पट पुट घट घटि बृहि गुप धूप लोकृ लोचृ तर्क वृतु वृधु रघि लघि प्रभृतयो भाषार्थाः पठ्यन्ते। भाष्यमाणोऽर्थो भाषार्थः। प्रयोगानुरोधेन एतेषामर्थो यथायथं बोध्य इत्याशयो गम्यते। अत्र सूरयः प्रमाणम्। पाटयति। लोकयति। तर्कयति। वर्तयति॥ **पूरी** आप्यायने। पूरयति। **ष्वद** आस्वादने। **स्वाद** इत्येके। आस्वादयति॥ **आधृषाद्वा**। इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य। **अर्च** पूजायां। अर्चयति। अर्चति॥ **षह** मर्षणे। साहयति। 'स एवायं नागः सहति कलभेभ्यः परिभवम्'। **ईर** क्षेपे। ईरयति। ईरति॥ **वृजी** वर्जने। वर्जयति। वर्जति॥ **वृञ्** आवरणे। वारयति। वरति। वरते॥ **जॄ** वयोहानौ। जारयति। जरति॥ **शिष** असर्वोपयोगे। शेषयति। शेषति॥ **तप** दाहे। तापयति। तपति॥ **तृप** तृप्तौ। तर्पयति। तर्पति॥ **ग्रन्थ** बन्धने। ग्रन्थयति। ग्रन्थति॥ **अर्द** हिंसायां। अर्दयति। अर्दति। अर्दते इत्यपि स्वरितेत्त्वात्॥ **अर्ह** पूजायां।

अर्हयति । अर्हति ॥ 'राजार्जिहत्तं मधुपर्कपाणिः' इति भट्टिः (१-१७) ॥ धूञ् कम्पने । णावित्यधिकृत्य ।

**धूञ् प्रीञोर्नुग्वक्तव्यः (वा)**

धूनयति । धवति । ञित्त्वात् धवते । केचित्तु धूञ्प्रीणोरिति पठित्वा प्रीणातिसाहचर्यात् श्नाविकरणस्यैव धूञो नुकमाहुः । तन्मते धावयति । अयं स्वादौ क्र्यादौ तुदादौ च पठ्यते । स्वादौ ह्रस्वान्तोऽपि । तथाच कविरहस्ये—'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च' ॥ **प्रीञ्** तर्पणे । प्रीणयति । धूञ्प्रीणोरिति हरदत्तोक्तपाठे तु—प्राययति । प्रयति । प्रयते ॥ **वच** परिभाषणे । वाचयति । वचति । **मान** पूजायां । मानयति । मानति । मानिष्यति । जिज्ञासायन्तुभौवादिको नित्यसन्नन्तः । मन्यते इति दिवादौ । मनुते इति स्वादौ ॥ **गर्ह** विनिन्दने ॥ **मार्ग** अन्वेषणे ॥ **कठि** शोके । उत्पूर्वोऽयमुत्कण्ठायां । उत्कण्ठयति । उत्कण्ठति । उत्कण्ठते इति भ्वादेः । **मृजू** शौचालङ्कारयोः । मार्जयति । मार्जति । मार्जिष्यति । मार्क्ष्यति । **मृष** तितिक्षायां । मर्षयति । मर्षति । स्वरितेत्त्वात् मर्षते । मृष्यति । मृष्यते इति दिवादौ । **धृष** प्रहसने । धर्षयति । धर्षति ॥ **इत्याधृषीयाः । अथादन्ताः ॥ कथ** वाक्यप्रबन्धे । णावतो लोपः । तस्य स्थानिवद्भावान्न वृद्धिः । कथयति ॥ णौ चङि अग्लोपित्वात् सन्वद्भावो नास्ति । तेन अभ्यासस्य इत्वं दीर्घश्च न । अचकथत् । एवमदन्तेषु सर्वत्र । **वर** ईप्सायां । वरयति । वृञ् आवरणे इत्यस्य वारयतीति गतम् । अववरत् ॥ **गण** संख्याने । गणयति । गणयामास ।

**११२५. ई च गणः ७-४-९७**

'अत् स्मृदृत्वर . . .' इत्यतः अदित्यनुवर्तते । गणेरभ्यासस्य ईदच्च स्यातां चङ्परे णौ । अजीगणत् । अजगणत् ॥ **रह** त्यागे । रहयति । अररहत् ॥ **स्तन गदी** देवशब्दे । मेघगर्जने इत्यर्थः । स्तनश्च गदिश्च

स्तनगदी । अदन्तधातोरिका निर्देशः । इक्प्रत्ययनिमित्तोऽल्लोपः । स्तनयति । अतस्तनत् । गदयति । अजगदत् ॥ **रच** प्रतियत्ने । रचयति । अररचत् ॥ **मह** पूजायां । महयति ॥ **स्पृह** ईप्सायां । स्पृहयति । अल्लोपस्य स्थानिवद्भावात् लघूपधगुणो न । अपस्पृहत् ॥ **सूच** पैशुन्ये । सूचयति । असुसूचत् । अल्लोपस्य स्थानिवद्भावान्नोपधाह्रस्वः । अग्लोपित्वाल्लघुपरकत्वाभावाच्च अभ्यासस्य न दीर्घः । आदेशावयवत्वाभावात् सस्य षत्वं न ॥ **शील** उपधारणे । उपधारणमभ्यासः । शीलयति । अशिशीलत् । **गवेष** मार्गणे । गवेषयति । अजगवेषत् ॥ **सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके । सभाजयति ॥ **ध्वन** शब्दे । ध्वनयति । अदध्वनत् । **स्तेन** चौर्ये । स्तेनयति । अतिस्तेनत् ॥ **आगर्वादात्मनेपदिनः** ॥ अदन्ताश्च । पद गतौ । पदयते । अपपदत ॥ **मृग** अन्वेषणे । मृगयते । मृग्यतीति कण्ड्वादिः ॥ **शूर** वीर विक्रान्तौ ॥ **स्थूल** परिबृंहणे । स्थूलयते ॥ **अर्थ** उपयाच्ञायां । अर्थयते । आर्तथत ॥ **गर्व** माने । गर्वयते ॥ इत्यागर्वीयाः ॥ **सूत्र** वेष्टने । सूत्रयति । असुसूत्रत् ॥ **मूत्र** प्रस्रवणे । मूत्रयति-मूत्रयते ॥ **पार तीर** कर्मसमाप्तौ । पारयति । तीरयति ॥ चुराद्यन्तर्गणसूत्राणि—

## प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च (ग)

## तत्करोति तदाचष्टे (ग)

प्रातिपदिकात् तत्करोति तदाचष्टे इत्यादि धात्वर्थे णिच् स्यात्, इष्ठन्प्रत्यये परे विहितानि पुंवद्भावरभावटिलोपादीनि णावपि स्युः । शुभ्रं करोति शुभ्रयति । भिन्नि श्येनां करोति श्येतयति । दृढं करोति द्रढयति । पटुं करोति पटयति । एनमाचष्टे इत्यर्थेऽपि ॥

## तेनातिक्रामति (ग)

तेनातिक्रामतीर्थे प्रातिपदिकाण्णिच् स्यात्; इष्ठवद्भावश्च ॥ हस्तिना अतिक्रामति हस्तयति । अत्र टिलोपः । अश्वेन अतिक्रामति अश्वयति ॥

## कर्तृकरणाद्धात्वर्थे (ग)

कर्तुर्यत्करणं तदर्थकात् प्रातिपदिकात् धात्वर्थे णिच् स्यात् । असिना छिनत्ति असयति । हस्तेन गृह्णाति हस्तयति ॥ करोतीत्याद्यर्थनिर्देश उपलक्षणम् । कुर्वन्ति चकारेत्याद्यर्थेऽपि णिच् । हस्तेन जग्राह । हस्तयामास ॥ **चित्र** चित्रीकरणे । आलेख्यकरण इत्यर्थः । कदाचिद्दर्शने । अद्भुतदर्शन इत्यर्थः । चित्रयति । आलेख्यं लिखति, विस्मयते, विस्मापयते इति चार्थः । चित्रीयते इति क्यचि बोध्यम् ॥ **मिश्र** संपर्के । **संग्राम** युद्धे । अयमात्मनेपदी । संग्रामयते । **दण्ड** दण्डनिपातने । **रस** आस्वादनस्नेहनयोः । **व्यय** वित्त-समुत्सर्गे । व्यययति । **रूप** रूपक्रियायां । रूपस्य दर्शनं करणं वा रूपक्रिया । रूपयति । पश्यति, रूपं निर्माति वेत्यर्थः । **छेद** द्वैधीकरणे ॥ **छद** अपवारणे । छदयति । अदन्तत्वान्नोपधावृद्धिः । छादयतीति गतम् ॥ **व्रण** गात्रविचूर्णने । व्रणयति ॥ **वर्ण** वर्णक्रियाविस्तारगुणवचनेषु ॥ वर्णक्रिया = वर्णकरणम् । वस्त्रं वर्णयति । कथां वर्णयति । विस्तारयतीत्यर्थः । हरिं वर्णयति स्तौतीत्यर्थः ।

## बहुलमेतन्निदर्शनम् (ग)

अदन्तधातुनिर्देशनमिदं बहुलमित्यर्थः । एवमन्येऽपि बोध्याः । तद्यथा— आन्दोलयति । प्रेङ्खोलयति । विडम्बयति । अवधीरयति । वीजयतीत्यादि ॥

इति चुरादयः

---

# परिशिष्टम्

इह धातुपाठे नानाविधैरनुबन्धैरनुषक्ता धातवः पठ्यन्ते । तेषामनुबन्धानां प्रयोजनानि संग्रहेण प्रदर्श्यन्ते । हलन्तानां धातूनां प्रायेण अकारोऽनुबन्धः । स च क्वचिदुदात्तः उच्चारणार्थः । **अत** सातत्यगमने । अतति । **गद** व्यक्तायां वाचि । गदति । उदात्तेतः परिशेषात् परस्मैपदिनः । क्वचिदकार अनुदात्तः । स चात्मनेपदार्थः । 'अनुदात्तङित आत्मनेपदम्' इति सूत्रात् । **एध** वृद्धौ । एधते । **मुद** हर्षे मोदते । क्वचिदकारः स्वरितः । स्वरितेतो धातव उभयपदिनः । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति सूत्रात् । **द्विष** अप्रीतौ । द्वेष्टि-द्विष्टे । **लिह** आस्वादने । लेढि-लीढे । कथादीनां केषाञ्चित् धातूनामकारो वृद्ध्यभावकृत् । स च नानुबन्धः । किन्तु धात्ववयव एव । तस्य अननुनासिकत्वेन इत्संज्ञाया अभावात् । **कथ** वाक्यप्रबन्धे । कथयति । **रच** प्रयत्ने । रचयति । अल्लोपस्य स्थानिवत्त्वेन 'अत उपधाया' इति वृद्धिर्न भवति । किञ्च अग्लोपित्वेन 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावाभावात् 'अचकथत्, अररचत्' इत्यादिरूपसिद्धिरपि कथादिष्वकारोच्चरणस्य फलम् ।

आकारानुबन्धस्य 'आदितश्च' इति निष्ठायामिण्निषेधः प्रयोजनम् । **ञिमिदा** स्नेहने । मिन्नः । मिन्नवान् । **ञिष्विदा** स्नेहनमोचनयोः । स्विन्नः । स्विन्नवान् । 'विभाषा भावादिकर्मणोः' इति इड्विकल्पश्च । भावे-स्वेदितं स्विन्नं वा चैत्रेण । आदिकर्मणि-स्वेदितः स्विन्नो वा चैत्रः ॥

---

**इकारस्य**–'इदितो नुम् धातोः' **टु नदि** समृद्धौ । नन्दति । 'अनिदितां हल उपधायाः क्ङिति' । नन्द्यात् ॥

**ईकारस्य**–'श्वीदितो निष्ठायाम्' इतीण् निषेधः । **ओविजी** भयचलनयोः । उद्विग्नः । उद्विग्नवान् ।

**उकारस्य**–' उदितो वा ' इति क्त्वायामिड्विकल्पः । **शमु** उपशमे । शमित्वा-शान्त्वा । **दिवु** क्रीडादिषु । देवित्वा-द्यूत्वा ॥

**ऊकारस्य**–' स्वरतिसूतिसूयति धूञूदितो वा ' इत्यार्धधातुकस्येड् वा ।

**त्रपूष्** लज्जायाम् । त्रपिष्यते-त्रप्स्यते । **क्षमूष्** सहने । क्षमिता-क्षन्ता ।

**ऋकारस्य**–' नाग्लोपिशास्वृदिताम् ' इति चङ्युपधाह्रस्वो न । **बाधृ** लोडने । अबबाधत । **टु याचृ** याच्यायाम् । अययाचत् ॥

**ऌकारस्य**–' पुषादिद्युताद्य्लृदितः परस्मैपदेषु ' इति लुङि च्लेरङ् । **गम्लृ** गतौ । अगमत् । **शक्लृ** शक्तौ । अशकत् ॥

**एकारस्य**–' ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ' इति सिचि वृद्धेर्निषेधः । **हसे** हसने । अहसीत् । **लगे** सङ्गे । अलगीत् ॥

**ओकारस्य**–' ओदितश्च ' इति निष्ठातस्य नकारः । **भुजो** कौटिल्ये । भुग्नः । भुग्नवान् । **रुजो** भङ्गे । रुग्णः । रुग्णवान् ॥

**ङकारस्य**–' अनुदात्तङित आत्मनेपदम् ' । **डीङ्** विहायसा गतौ । डयते । **ष्मिङ्** ईषद्धसने । स्मयते ॥

**ञकारस्य**–' स्वरितञितः कर्त्रभिप्राये क्रियाफले ' । **णीञ्** प्रापणे । नयति-नयते । **चिञ्** चयने । चिनोति चिनुते ।

**' इर् ' इत्यस्य**–' इरितो वा ' इति च्लेरङ् वा । **रुधिर्** आवरणे । अरुधत्-अरौत्सीत् । **छिदिर्** द्वैधीकरणे । अच्छिदत् । अच्छैत्सीत् ॥

**षकारस्य**–' षिद्भिदादिभ्योऽङ् ' इति भावेऽङ् । **क्षमूष्** सहने । क्षमा । **त्रपूष्** लज्जायाम् । त्रपा ॥

'ञि' शब्दस्य—'ञीतः क्तः' इति वर्तमाने क्तः। ञिइन्धी दीप्तौ। इद्धः। ञिक्ष्विदा स्नेहनमोचनयोः। क्ष्विण्णः॥

डु शब्दस्य—ड्वितः क्त्रिः' इति क्त्रिः। 'क्त्रेर्मम् नित्यम्'। डु कृञ् करणे। कृत्रिमम्। डु पचष् पाके। पक्त्रिमम्॥

टु' शब्दस्य—'ट्वितोऽथुच्' इत्यथुच। टुवेपृ कम्पने। वेपथुः। टु णदि समृद्धौ। आ नन्दथुः॥

अनुदात्तात्मता धातोरिण्निषेधार्थमुच्यते॥ 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधः। शक्लृ=शंक्ष्यति। ध्यै=ध्याता॥

उदात्तत्त्वञ्च सेट्त्वार्थम्॥ 'आर्धधातुकस्येड्वलादे'रितीट्। वद=वदिष्यति। पठ=पठिता॥

नकारजावनुस्वारपञ्चमौ झलि धातुषु।
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः॥

अस्यार्थः। धातुषु झलि परे यौ अनुस्वारवर्गपञ्चमौ श्रूयेते तौ नकारजन्यौ वेदितव्यौ। 'नश्चापदान्तस्य झलि' इति नस्यानुस्वारः। 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णो वर्गपञ्चमः। भ्रंशु अधःपतने। ध्वंसु अवस्रंसने। अत्र नस्य अनुस्वारः। अञ्चु, स्तम्भु इत्यादौ अनुस्वारस्य प्ररसवर्णः। अत एव तयोरसिद्धत्वात् भ्रष्टः, ध्वस्तः, अक्तः स्तब्धः इत्यादौ 'अनिदितां हल उपधायाः क्ङिति' इति नलोपः। चे—चकारे परे यः शकारः श्रूयते सः सकारजन्यो वेदितव्यः। 'स्तोः श्चुना श्चुः' इति सस्य शः। ओ व्रश्चू छेदने। वृक्णः। श्चुत्वस्यासिद्धत्वात् 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः। एवं षकारात् परः टवर्गः तवर्गजन्यो वेदितव्यः। 'ष्टुना ष्टुः' इति तवर्गस्य टवर्गः। ष्ठा गतिनिवृत्तौ। स्थास्यति। 'धात्वादेः षः सः' इति

सकारे ठकारः थकारात्मना अवतिष्ठते । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायात् । 'एवं ष्णा शौचे' स्नाति इत्याद्यूह्यम् ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् ।
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम् ॥

ओम् नमः

॥ पाणिनि-कात्यायन-पतञ्जलिभ्यो महद्भ्योमुनिभ्यो गुरुभ्यः ॥

—: ओम् :—

॥ इति. व्याकरणप्रदीपः ॥

श्रीः

W.D.-63/87/GTBPM-5,000

